निवारय। ॐ पुरुष ऽः एवेद ᳯ सर्व्वंय्यद्भूतं यच्चभाव्यम् । उतामृत त्वस्ये शानोयदन्ने नाति रोहति ॥ इति आसनम् समर्पयामि॥ पाद्यम्—उमापुत्राय देवाय सिद्धम् वन्द्यायते नमः। पाद्यं गृहाण देवेश विघ्नराज नमोऽस्तुते। ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषऽ-पादोऽ॑ । स्य विश्वाभूतानि त्रिपादस्या मृतन्दिवि । इति पाद्यम् समर्पयामि। अथार्घ्यम् । एकदन्त महाकाय नागयज्ञोपवीतक। गणाधि देव देवेश गृहाणार्घं नमोस्तुते। ॐ त्रिपा दूर्द्ध ऽ उदैत्पुरुषऽ-पादोस्येहा भवत्पुनः ऽ। ततो विष्वङ्व्यक्रामत् साशना नशनेऽअभि ॥ २४ ॥ इति अर्घम्। समर्पयामि॥ अथ आचमनम् । सर्वतीर्थ समायुक्तं सुगन्धि निर्मलं जलम् आचम्यतां मयादत्तं गृहीत्वा परमेश्वर ॐ ततो विराड् जायत विराजोऽअधि पुरुष ऽसजातोऽअ त्यरिच्यत पश्चाद्भूमिमयो पुर ऽः ॥ २५ ॥ आचमनीयं समर्पयामि ॥ अथ स्नानम् ॥ गङ्गा सरस्वती रेवा पयोष्णीनर्मदाजलैः। स्नापितोऽसि मया देव तथा शान्ति कुरुष्वमे ॥ ॐ त्स्मायज्ञा त्सर्व्वहुत ऽः सम्भृतम्पृषदा ज्यम् पशूँ स्ताँश्चक्रे वायव्या नारण्याग्राम्या श्चये। इति स्नानं समर्पयामि ॥ [अथ लेपकम्]– अथ पञ्चमृतास्नानम्–(एक मन्त्रेण पञ्चामृत स्नानम् । पयोदधिघृतं चैव मधु च शर्करायुतम्। पञ्चामृत मयानीतं स्नानार्थं प्रतिगृह्यताम्॥ ॐपञ्च नद्य ऽः सरस्वतीमपि यन्ति स स्रोतस ऽः। सरस्वती तु पञ्चधा सोदेशेभवत् सरित्।। २७ ॥ इति पञ्चामृत स्नान समर्पयामि। पञ्चामृत स्नानान्ते शुद्धोदक स्नानं समर्पयामि। शुद्धोदक स्नानान्ते आचमनीयम् समर्पयामि । अथवा पृथग्मन्त्रेण पञ्चामृत स्नानम् ।–तत्र पयः स्नानम्–कामधेनु समुत्पन्नं सर्वेषां जीवनं परम्। पावनं यज्ञ हेतुश्च पयः स्नानार्थमर्पितम्॥ ॐ पय पृथिव्यांम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधा ऽः। पयस्वती ऽः प्रदिश ऽ सन्तु मह्यम्। इति पयः स्नानं समर्पयामि। पयः स्नानान्ते शुद्धोदक स्नानं समर्पयामि। शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि॥ दधिस्नानम्–(पयः सन्तु समुद्भूतं मधुराम्ल शशिप्रभम्। दध्यानीतं मयादेव स्नानार्थं प्रतिगृह्यताम्॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ऽ सुरभिनो मुखाकर त्प्रणऽआयु ᳯ षितारि षत्॥ २८॥ इति दधिस्नानं समर्पयामि। दधि स्नानान्ते शुद्धोदक स्नानं समर्पयामि। शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि॥ अथ घृतस्नानम्। नवनीत समुत्पन्नं सर्व सन्तोषकारकम्। घृत तुभ्यं प्रदास्यामि स्नानार्थं प्रति गृह्यताम् ॥ ॐ घृतम्मिमिक्षे। घृतमस्ययोनि घृतेश्रितोघृतम्वस्यधाम अनुष्वधमा वह मादयस्व स्वाहा

कृतं वृषभ त्वत्रिदृल्व्यम ॥३०॥ इति घृतस्नानं समर्पयामि-घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि। शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ (अथ मधुस्नानम् ॥) तरु पुष्प समुद्भूत सुस्वादु मधुरमधु। तेज पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥ ॐ मधुव्वाताऽऋताय ते मधुक्षरन्ति सिन्धवऽ माद्धीर्न्नऽ सन्त्वोषधीऽ॥ ३१॥ मधुनक्त मुतोषसो मधु मत्पार्थिवंऽरज - मधुद्यौरस्तु नऽ पिता॥ ३२॥ मधु मान्नो व्वनस्पति र्म्मधुमा२ऽ अस्तु सुर्व्यं÷ माद्धी र्गावो भवन्तु नऽ॥ ३३॥ इति मधुस्नान समर्पयामि। मधुस्नानान्ते शुद्धोदकस्नानं-समर्पयामि। शुद्धोदकस्नानान्ते आचमनीय समर्पयामि॥ अथ शर्करास्नानम्-इक्षुसार समुद्भूता शर्करा पुष्टिकारिका। मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम्॥-ॐ अपा७ रसस्य पोरमस्त व्वो गृह्णाम्म्युत्तममुपयाम गृहीतो मीन्द्रायत्त्वा जुष्टङ्गृह्णाम्म्येष ते योनिरिन्द्राय त्वाजुष्टतमम्॥ ३४॥ ॐ भूर्भुव स्व गणपति देवताभ्यो नम शर्करास्नानान्ते शुद्धोदकस्नान समपयामि। शुद्धोदकस्नानान्ते आचमनीय समपयामि। -अथ गन्धोदक स्नानम्-मलया चलसम्भूत चन्दनागरु सम्भवम्। चन्दन देव देवेश स्नानार्थं प्रतिगृह्यताम्॥ -ॐ गन्धद्वारा दुराधर्षां नित्य पुष्टा करीषिणीम्। ईश्वरीं सर्वभूताना तामिहोपह्वये श्रियम्॥ ३५॥ (लक्ष्मी सूक्त मन्त्र)- भूर्भुव स्व श्रीगणपति देवताभ्यो नम पष्ट गन्धोदक स्नान समर्पयामि॥ पष्ट गन्धोदकस्नानान्ते शुद्धोदकस्नान समर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीय समर्पयामि॥ -अथ उद्वर्तन स्नानम्॥-नाना सुगन्धि द्रव्यं च चन्दन रजनीयुतम्॥ उद्वर्त्तन मया दत्त स्नानार्थं प्रति गृह्यताम्॥ ॐ अ७ सुनाते। ७शुऽ प्यच्यनाम परुषा परु। गन्धस्ते सोम भवतु मदाय रसोऽ अच्च्युतऽ ॥ ३६॥ ॐ भूर्भुव स्व श्री गणपति देवताभ्यो नम उद्वर्त्तन स्नानं समर्पयामि॥ उद्वर्त्तन स्नानन्ते शुद्धोदकस्नान समर्पयामि॥ शुद्धोदक स्नानान्ते आचमन समर्पयामि॥ तत पञ्चामृतादि स्नानाङ्ग पूजा— ॐ भूर्भुव स्व श्री गणपतिदेवताभ्यो नम -यज्ञोपवस्त्रार्थे अक्षतान् समर्पयामि। यज्ञोपवीतार्थेऽक्षतान् समर्पयामि। गन्धं समर्पयामि। नाना परिमल सौभाग्य द्रव्याणि समर्पयामि। धूप दर्शयामि दीप दर्शयामि। -शर्करोपहार नैवेद्यम् ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ व्यानाय स्वाहा। ॐ समानाय स्वाहा। ॐ उदानाय स्वाहा॥ नैवेद्य समर्पयामि। नैवेद्यान्ते हस्त प्रक्षालनार्थं मुख प्रक्षालनार्थं जलसमर्पयामि करोद्वर्तनार्थे पूगीफल ताम्बूलं समर्पयामि। हिरण्यगुप्तदक्षिणा समर्पयामि कर्पूरार्तिक्य दर्शयामि। प्रदक्षिणा समर्पयामि। मन्त्र पुष्प

युक्त नमस्कारं समर्पयामि ॥ विशेषार्घ्यं–रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्य रक्षकः। भक्तानामभयं कर्ता त्राता भव भवार्णवात्। वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद। अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ प्रार्थनां समर्पयामि ॥ अर्पणम्–अनेन पञ्चामृतादि स्नानाङ्ग भूतपूजा-कृतेन ॐ भूर्भुवः स्वः श्री गणपतिदेवता प्रीयन्तां नमम ॥ ( निर्माल्यं विसृज्य ) पुनश्च ( पञ्चायतन ) गणपतिदेवताभ्यो गन्धाक्षतपुष्पाणि समर्प्य ॥ –स्न यथा–हरिः ॐ–ॐ सहस्र शीर्षा० ॥ ३३ ॥ पुरुषऽए० ॥ ३४ ॥ एतावनास्य० ॥ ३५ ॥ त्रिपादूर्द्धऽ० ॥ ३६ ॥ ततोविराड० ॥ ३७ ॥ तस्माद्यज्ञात्स० ॥ ३८ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋच ऽः सामानि जज्ञिरे। छन्दा ॐ सि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ३ ॥ तस्मादश्वाऽ अजायन्त ये के चोभयादतऽःगावोह जज्ञिरे तस्मात्तस्मा-ज्जाताऽ अजावय ÷ ॥ ४० ॥ तंयज्ञम्वर्हिषि प्रौक्षन्पुरुष ञ्जातमग्रत ऽः। तेन देवा ऽः अजयन्तसाद्धयाऽऋषयश्चये ॥ ४१ ॥ यत्पुरुषं व्यदधु ऽः कतिधाव्यकल्पयन्। मुखङ्किमस्यासीत्किम्बाहू किमूरुपादाऽ-उच्यते ॥ ४२ ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्य कृत ऽ उरुतदस्य यद्वैश्य ÷ पद्भ्या ँ शूद्रोऽअजायत ॥ ४३ ॥ चन्द्रमा मनसो जातश्चक्षो ऽः सूर्योऽअजायत श्रोत्राद्वायुश्चप्राणश्च मुखादग्निरजायत ॥ ४४ ॥ नाभ्याऽआसीदन्त रिक्ष ँ शीर्ष्णोद्यौऽ समवर्त्तत। पद्भ्याम्भूमि र्दिश ऽः श्रोत्रा त्तथा लोकाँ २॥ऽ अकल्पयन् ॥ ४५ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत। व्वसन्तो स्यासी दाज्यङ् ग्रीष्मऽ इध्म ऽःशरद्धवि ऽः ॥ ४६ ॥ सप्तास्या सन्परिधया स्त्रिऽः सप्त समिध ÷ कृता ऽः। देवा यद्यज्ञं तन्वाना ऽः अवध्नन्पुरुषम्पशुम ॥ ४७ ॥ यज्ञेन यज्ञ मय जन्त देवास्तानि धर्म्माणिप्रथमान्यासन्। तेहनाक म्महिमान ÷ सचन्त यत्र पूर्व्वे साद्धया ऽः सन्ति देवा ऽः ॥ ४८ ॥ स च यथा—ॐ द्यौ ऽः शान्तिरन्तरिक्ष ँ शान्ति ÷ पृथिवी शान्तिराप ऽः शान्तिरोषधय ऽः शान्ति ÷ व्वनस्पतय ऽः शान्तिर्विश्वे देवा ऽः शान्तिर्ब्रह्म शान्ति ऽः सर्व्वं ँ शान्ति रेव शान्ति ऽः सामाशान्तिरेधि ॥ ५० ॥ यतो यत ऽः समीहसे ततो नोऽअभयङ्करु शन्नः कुरु प्रजाभ्यो-मयन्न पशुभ्य ÷ ॥ ५१ ॥ ॐ सर्वेषां वाऽएष वेदाना ँ रसोयत्साम सर्वेषामेवैनमेतद्वेदाना ँ रसेनाभिषिञ्चति ॥ ५२ ॥ ( ब्राह्मणमन्त्रः ) ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु। ॐ अमृताभिषेकोऽस्तु ॥ ॐ भूर्भुवः स्वः श्रीगणपतिदेवताभ्यो नमः अभिषेकं समर्पयामि। ( इति क्षेपकम् ) ॥ पश्चात् देवतीर्थं धृत्वा। ततो देवाचमनम्–ॐ केशवाय नमः स्वाहा। ॐ नारायणाय नमः स्वाहा। ॐ माधवाय नमः स्वाहा—

इत्याचमनं समर्पयेत् ॥ हस्तप्रक्षालनम् । ॐ गोविन्दाय नमः ॥ वस्त्रम्-सर्वभूषाधिके सौम्ये लोक लज्जा निवारणे । मयोप पादिते तुभ्य वाससी प्रतिगृह्यताम् ॥-वस्त्रमा छयन्नात्सर्म्वहुत ऽ ऋच ऽ सा० ॥ ५२ ॥ ॐ भूर्भुव स्व श्रीगणपतिदेवताभ्यो नम वस्त्रं समर्पयामि । ( वस्त्रान्ते ऽऽचमनम् अथ यज्ञोपवीतम्-नवभिस्तन्तुभिर्युक्तं त्रिगुण देवतामय उपवीत चोत्तरीय गृहाण परमेश्वर ॥ )-ॐ तस्माद्यज्ञा ऽ श्र० ॥ ५३ ॥ -ॐ भूर्भुव स्व श्रीगणपति देवताभ्यो नम यज्ञोपवीत समर्पयामि ॥ यज्ञोपवीता चमनम् )॥ अथ गन्धम्-ॐ ( श्रीखण्ड चन्दन दिव्य गन्धाढ्य सुमनोहरम् विलेपनसुरश्रेष्ठ चन्दन प्रतिगृह्यताम् ॥ ) ॐ तंयज्ञम्बर्हिषिप्रौक्षन्पुरुष ञ्जातमग्रत ऽ तेन दे० ॥ ५४ ॥ ॐ भूर्भुव स्व गणपति देवताभ्यो नम गन्धम् समर्पयामि ॥ ( अथ अक्षता ॥ अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ता सुशोभिता । मया निवेदिता भक्त्या गृहाण परमेश्वर ॐ अक्षन्नमीमदन्तह्यवप्रिया ऽ अधूषत । अस्तोषत स्वभानवोविप्रानविष्ठयामतियो जान्विन्द्रते हरि ॥५५॥ ॐ भूर्भुव स्व गणपति देवताभ्यो नम अक्षतान्समर्पयामि इति लेपकम् । अथ पुष्पाणि-माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥ ॐ यत्पुरुषंव्यदधु० ॥ ५६ ॥ ॐ भूर्भुव स्व गणपति देवताभ्यो नम. पुष्पाणि ( सौभाग्यद्रव्य सहित च ) समर्पयामि ॥ ( देवेभ्य गन्ध सौभाग्यद्रव्यादीनि अनामिकाङ्गुष्ठेन अर्पयेत् अथ गणेशाय दुर्वाङ्कुरार्पणम् ।—,विष्णवादि सर्वदेवाना दुर्वेत्वं प्रीतिदा यदा । क्षीरसागर सम्भूते वश वृद्धि करी भव ॥ )-ॐ काण्डात्काण्डात्प्ररोहन्ती परुष ऽ परुषस्परि । एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥ ५८ ॥ अथ धूपम् ।-वनस्पति रसोद्भूतो गन्धाढ्यो गन्ध उत्तम आघ्रेय सर्वदेवाना धूपोऽय प्रतिगृह्यताम् । ॐ ब्राह्मणोस्य मुख मासी द्बाहूराजन्य — कृत ऽ ( रू तदस्य० ॥ ६४ ॥-ॐ भूर्भुर्व स्व गणपति देवताभ्यो नम धूप दशयामि ॥ अथ घृतपूरित नीराजन दीपम्-( साज्य च वर्ति सयुक्त वह्निना योजित मया । दीप गृहाण देवेश त्रैलोक्य तिमिरापह ॥ ॐ चन्द्रमा मनसो० ॥ ६५ ॥ ॐ भूर्भुव स्व गणपति देवताभ्यो नम घृत पूरित नीराजन दीप दर्शयामि ॥ अथ नैवेद्यम् ) शर्कराघृत सयुक्त मधुर स्वादु चोत्तमम् । उपाहार समायुक्त नैवेद्यं प्रतिगृह्यताम् । ) ॐ नाभ्याऽआसीदन्त रिक्ष ऽ शी० ॥ ६६ ॥ ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा । ॐ भूर्भुव -श्रीगणपति देवताभ्यो नम नैवेद्य समर्पयामि । नैवेद्यान्तेपा नीयम्-( घनोशीर

लवङ्गादि कर्पूर परिवासितम् ॥ प्राशनार्थं कृतं तोयं गृहाण परमेश्वर ॥ )
उत्तरापोशन हस्त प्रक्षालनं मुखप्रक्षालनं आचमीनयं च समर्पयामि ॥
मुख वासार्थे ताम्बूलम् ( पूगीफल महद्दिव्य नागवल्ली दलैर्युतम् । एला
चूर्णादि संयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ॐ यत्पुरुषेण० ॥ ६० ॥ ॐ
भूर्भुवः स्वः श्रीगणपति देवताभ्यो नमः ॥ ताम्बूलं समर्पयामि ( अथ
क्षेपक ) फलं-( इदं फल मयादेवस्थापितं पुरतस्तव । तेनमे सफला
वाप्तिर्भवेज्जन्मनि जन्मनि । ॐ या ऽः फलिनीर्य्या ऽ अफलाऽअपुष्पा
य्याश्चपुष्पिणी ऽः । व्वृहस्पति प्रसूत स्तानो मुञ्चन्त्व ᳪ हस ॥६८॥
ॐ भूर्भुवः स्वः श्रीगणपति देवपाभ्यो नमः फल समर्पयामि ॥ (दक्षिणा)
हिरण्य गर्भ गर्भस्थं हेम । बीजं विभावसोः । अनन्त पुण्य फलद मतः
शान्ति प्रयच्छमे ॥ ) ॐ हिरण्य गर्भ्भ ऽः सम वर्त्तताग्रे भूतस्य जात ऽः
पतिरेक ऽ आसीत् । सदाधार पृथिवी न्द्यामुतेमाङ्क स्म्मै देवाय हविषा
व्विधेम ॥ ६६ ॥ ॐ भूर्भुवः स्वः श्रीगणपति देवताभ्यो नमः दक्षिणा
समर्पयामि ॥ अथ-कर्पूरार्तिक्यम्-कदली गर्भसम्भूत कर्पूरंच प्रदीपितम्
आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥ ॐ इद ᳪ हवि ऽः प्रजननम्मे
ऽ अस्तु दशवीर ᳪ सर्व्वगण ᳪ स्वस्तये । आत्मासनि प्रजासनि
पशुसनि लोकसन्न्य भयसनि ॥ अग्गिनीः ऽ प्रजाम्बहुलाम्मेकरो
त्वन्नम्पयो रेतो ऽ अस्म्मा सुधत्त ॥ ७० ॥ ॐ भुर्भुवः स्वः श्रीगणपति
देवताभ्यो नमः कर्पूरार्तिक्य दर्शयामि ॥ ( इति क्षेपकम् ॥ ) प्रदक्षिणा-
( *यानि कानि च पापानि जन्मान्तर कृतानिवै । तानि सर्वाणि नश्यन्तु
प्रदक्षिण पदे पदे ॥* ) ॐ सप्तास्या० ॥ ७१ ॥ ॐ भूर्भुवः स्वः
श्रीगणपति देवताभ्यो नमः आर्तिक्य सहितां प्रदक्षिणा समर्पयामि । ० ॥
अथ मन्त्रः पुष्प युक्तो नमस्कारः ॥ ( नाना सुगन्ध पुष्पाणि यथा
कालोद्भवानि च । पुष्पाञ्जलि मया दत्ता गृहाण परमेश्वर ॥ ॐ यज्ञेन
यज्ञ० ॥ ७२ ॥ ॐ भुर्भुवः स्वः श्रीगणपति देवताभ्यो नमः मन्त्र-
पुष्पाञ्जलियुक्तं नमस्कारं समर्पयामि प्रार्थना-विघ्नेश्वराय वरदाय सुर
*प्रियाय लम्बोदराय सकलाय जगद्धिताय नागाननाय श्रुतियज्ञ विभूषिताय*
गौरीसुताय गणनाथ नमो नमस्ते ॥ [ क्षमापनम् ॥ ] आवाहनं नजानामि
नजानामि तवार्चनम् । पूजां चैव नजानामि क्षमस्व परमेश्वर ॥ गतं पापं
गतं दुःख गतं दारिद्र्य मेवच-आगता सुख सम्पत्तिः पुण्याश्च तवदर्शनात् ॥
अन्यथा शरणनास्ति त्वमेव शरणं मम तस्मात्कारुण्यभावेन रक्षस्व परमे-
श्वर ॥ मन्त्र हीनं क्रियाहीन भक्तिहीनं सुरेश्वर । यत्पूजितं मयादेव परिपूर्ण
तदस्तुमे ॥ यदक्षर पद भ्रष्टं मात्राहीन च यद्भवेत् । तत्सर्वं क्षम्यतां देव
प्रसीद परमेश्वर ( इति क्षेपकम् ) अर्पणम्-अनेना वाहना सन पाद्यार्घ्यो

चमनीय स्नानवस्त्रो पवीत गन्धपुष्प धूप दीप नैवेद्यताम्बूल दक्षिणा प्रदक्षिणा मन्त्र पुष्प स्तुपैः षोडशो पचारैः अन्योपचारैश्च यथा ज्ञानेन यथा मिलितो पचार द्रव्यैः कृतेन पूजनाख्य कर्मणा ॐ भूर्भुवः स्वः श्रीगणपति देवताः प्रीयन्तां न मम ॥ ॐ तत्सत् ब्रह्मार्पणमस्तु ॥ ( इति श्रीगणपति देवता पूजनम् ) ।

## अथ भूतशुद्धि ।

कर्ता कर्मदिवसे प्रातरुत्थाय स्नात्वा नित्यकर्म समाप्य दीपाय गन्धाक्षतपुष्पादीन् समर्प्य आचम्य पुष्पाञ्जलिं समर्पयेत्–

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये । लाभस्तेषां जयस्तेषां कुतस्तेषां पराजय । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ इति विष्णवे समर्पयेत् ।

वक्रतुण्ड महाकाय सूर्यकोटि समप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ २ ॥ इति गणेशाय समर्पयेत् । ततोऽर्घ्यस्थापनं कुर्यात् , गन्धादिना—

भूमौ त्रिकोणं वृत्तं चतुरस्रमण्डलं च लिखित्वा तदुपरि आसनम् आसनस्योपरि पात्रम् पात्रस्योपरि पवित्रेस्थो वैष्णव्यौ इति पवित्रं निक्षिपेत् "शन्नोदेवीति जलम् " ओं शन्नोदेवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः । इति जलेनापूर्य "गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरी जलेऽस्मिन् सन्निधिं कुरु, इति अङ्कुशमुद्रया तीर्थान्यावाह्य गन्धाक्षतपुष्पादि तूष्णीं निक्षिप्य अर्घपात्रं सुसम्पन्नमस्तु ३ तेन जलेन आत्मानं करिष्यमाण श्रीसूर्यादि पञ्चदेवपूजन कर्मणि निर्विघ्नता सिद्धये मम सकलमनोरथसिद्धयर्थञ्च भगवतः सूर्यदेवस्य प्रीतये सूर्यदेवपूजा सामग्री च सम्प्रोक्ष्य प्राणायामत्रयं विधाय पुण्डरीकाक्षाय स्मरणम् ।

अथ ध्यानम्-ध्येयः सदा सवितृमण्डलमध्यवर्ती । नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥ ततः सूर्यमावाहयेत् "ॐ भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपगोत्र रक्तवर्ण भगवन् सूर्य इहागच्छ इह तिष्ठ पूजार्थं त्वामावाहयामि इत्यावाह्य अर्घं दद्यात् । एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या गृहाणार्घं दिवाकर । ततो गन्धाक्षतैः सूर्यं पूजयेत् । ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् इति

ॐ आदित्याय नमः इति मन्त्रेण च नीराजनान्तं सम्पूज्य। धूप दीपं नैवेद्यं पुष्पाणि च सूर्य्याय समर्पयेत्॥ अथ ध्यानम्॥ आदित्यं च नमस्कार ये कुर्वन्ति दिने दिने। जन्मान्तरसहस्रेण दारिद्र्यं नोपजायते। इति ध्यात्वा ततः सर्षपाक्षतैर्भूतोत्सादनं कुर्य्यात्॥ अपक्रामन्तु भूतानि पिशाचः सर्वतो दिशम्। सर्वेषामविरोधेन ब्रह्मकर्म समारभे। अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया, इति। निर्गच्छतां च भूतानां वर्त्म दद्यात् स्ववामतः। तालत्रयेण सर्वान्विघ्नानुत्सार्य। पृथ्वि त्वयेति मेरुपृष्ठऋषिः सुतलं छन्दः, कूर्मो देवता आसनोपवेशने विनियोगः॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वञ्च धारय मां देवि पवित्रं कुरु चासनम्॥ ततो गन्धाक्षतपुष्पैः। ॐ आधारशक्त्यै पृथिव्यै नमः ॐ कूर्माय नमः ॐ शेषनागाय नमः ॐ चित्तशक्तये नमः इत्यासनं सम्पूज्य पुनरर्घं संस्थाप्य च पूजासङ्कल्पं कुर्य्यात् 'गन्धादिना भूमौ त्रिकोणवृत्तं चतुरस्रं मण्डलञ्च लिखित्वा तदुपरि आसनं आसनस्योपरि पात्रम् पात्रस्योपरि पवित्रं पवित्रेस्थो वैष्णव्यौ–इति निक्षिपेत्।

शन्नो देवीति जलम् ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः। इति जलेनापूर्य्य गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरी जलेऽस्मिन् सन्निधिं कुरु, इत्यङ्कुशमुद्रया तीर्थान्यावाह्य गन्धाक्षतपुष्पाणि तुष्णीं निक्षिप्य अर्घपात्रं सुसम्पन्नमस्तु ३ तेन जलेन आत्मानं, करिष्यमाणअमुककर्मणि निर्विघ्नतया कार्यसिद्ध्यर्थं सकलेप्सितसिद्ध्यर्थञ्च श्रीमहागणपतिदेवप्रीत्यर्थमिमां पूजासामग्रीञ्च सम्प्रोक्ष्य प्राणायामत्रयं विधाय पुण्डरीकाक्षाय स्मरणम्। ततः प्रार्थनाभ्यां नमः। मातृपितृचरणकमलाभ्यां नमः। सर्वेभ्यो देवेभ्यो नमः। सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः। शचीपुरन्दराभ्यां नमः। निर्विघ्नमस्तु।

## अथ गणेशाथर्वशीर्षम्।

ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्त्तासि। त्वमेव केवलं धर्त्तासि। त्वमेव केवलं हर्त्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्व साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यं वच्मि। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानू चानमवशिष्यम्॥ अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्वं चिन्मयः।

त्वमानन्दमयस्त्वं ब्रह्ममय । त्वं सच्चिदानन्दो द्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभ त्वं चत्वारि वाक् पदानि । त्वं गुणत्रयातीत । त्वं देह त्रयातीत । त्वं काल त्रयातीत । त्वं वस्था त्रया तीत । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम् । गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् । अनुस्वारः परतर । अर्धेन्दुलसितम् । तारेण रुद्धम् एतत्त व मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तर रूपम् । नादः सन्धानम् । स ꣳ हितासन्धिः । सैषा गणेश विद्या गणक ऋषि. निचृद्गायत्री छन्दः । गणपतिर्देवता । ॐ ग गणपतये नम. । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नोदन्ती प्रचोदयात् । एकदन्त चतुर्हस्त पाशमङ्कुशधारिणम् । रदञ्च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदर शूर्पकर्णकं रक्तवाससम् । रक्त गन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतञ्च सृष्ट्यादौ प्रकृते पुरुषात्परम् । एव ध्यायति यो नित्यं सयोगी योगिनां वर । नमो व्रातपतये नमो गणपतये नम. प्रथमपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः । एतदथर्वशीर्षं योऽधीते । स ब्रह्मभूयाय कल्पते । स सर्व विघ्नैर्न बाध्यते स सर्वत्र सुखमेधते । स पञ्च महापापात्प्रमुच्यते । सायमधीयानो दिवस कृत पापं नाशयति । प्रातरधीयानो रात्रि कृतंपापं नाशयति । सायम्प्रातः प्रयुञ्जानो अपापो भवति सर्वत्रा धीयानोऽप विघ्नो भवति धर्मार्थं कामं मोक्षञ्चविन्दति । इदमथर्वशीर्षमशिष्याय नदेयम् । यो यदि मोहाद्दास्यति । स पापीयान् भवति । सहस्रावर्तनाद्यं काममधीते स तमनेन साधयेत् । अनेन गणपतिमभिषिञ्चति । सवाग्मी भवति । चतुर्थ्यामनश्नञ्जपति । स विद्यावान् भवति । इत्यथर्वण वाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदा चनेति । यो दुर्वाङ्कुरैर्यजति । स वैश्रवणोपमो भवति । यो लाजैर्यजति । स वाञ्छित फलमवाप्नोति । यः साज्यस मिद्भिर्यजति । स सर्वंलभते । स सर्वंलभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा । सूर्य वर्चस्वी भवति । सूर्य ग्रहे महानद्यां प्रतिमा सन्निधौ वा जप्त्वा सिद्ध मन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते महापापात्प्रमुच्यते । स सर्वविद्भवति । स सर्व विद्भवति । य एवं वेद । इत्युपनिषत् । ॐ शान्ति शान्ति शान्ति. इति गं० ।

## सङ्कल्पं ।

ॐ विष्णुर्विष्णु र्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्यब्रह्मणो द्वितीयेपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वत मन्वन्तरे अष्टाविंशतितमे कलियुगेकलिप्रथमचरणे जम्बूद्वीपे भारतखण्डे भारतवर्षे आर्य्यावर्तान्तर्गतक्षेत्रे हिमवत्पर्वतैकदेशे केदारखण्डान्तर्गत-वद्रिकाश्रमेसुमेरु दक्षिणपार्श्वेऽलकनन्दा मन्दाकिन्योर्मध्ये ( समीपे ) षष्टिसंवत्सराणां मध्येऽमुकनामसंवत्सरे अमुकाऽयने अमुकऋतौ अमुक-मासे अमुकपक्षे अमुकवासरे अमुकतिथौ अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेपु ग्रहेपु यथायथं राशिस्थान-स्थितेषु सत्सु एवं गुणविशेषे विशिष्टायां शुभपुण्यतिथौ गोत्रोत्पन्न-अमुकराशि अमुक शर्म्मा-वर्मा-गुप्तो वा-ममाऽत्मनः श्रुतिस्मृति-पुराणोक्तफलप्राप्त्यर्थं मम ऐश्वर्याभिवृद्ध्यर्थम् । अप्राप्तलक्ष्मीप्राप्त्यर्थम् । प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थम् । सकलमन ईप्सितकामनासं-सिद्ध्यर्थम् । लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादि-प्राप्त्यर्थम् । इह जन्मनि जन्मान्तरे वा सकलदुरितो पशमनार्थं । तथा मम सभार्यस्य स पुत्रस्य सबान्धवस्य अखिलकुटुम्बसहितस्य सपशोः समस्तभयव्याधिजरापीड़ामृत्युपरिहारद्वारा आयुरारोग्यैश्व-र्याभिवृद्ध्यर्थम् । तथा मम जन्मराशेरखिलकुटुम्बस्य वा जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमद्वादशस्थान स्थितक्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशद्वारा एकादशस्थानस्थितवच्छुभ-फलप्राप्त्यर्थम् । पुत्रपौत्रादिसन्ततेरविच्छिन्नवृद्ध्यर्थम् । आदित्यादिन-वग्रहानुकूलतासिद्ध्यर्थम् । तथा इन्द्रादिदशदिक्पालप्रसन्नता सिद्ध्यर्थम् । आधिदैविकाऽऽधिभौतिकाऽध्यात्मिकत्रिविध तापोपशमनार्थम् । धर्मार्थ-काममोक्षफलप्राप्त्यर्थं च । ॐ भूर्भुवः । स्वः श्रीअमुकपञ्चायतनदेवता-प्रीत्यर्थं यथा ज्ञानेन यथामिलितोपचार द्रव्यैः पुरुषसूक्तेन ध्यानाऽवाह-नादिषोड़शोपचारैः वा पूजनमहं करिष्ये ।

## दीपकलशपूजनम् पुण्याहवाचनम् ।

तत—अपसर्पन्तु ये भूता ये भूता भूमिमाश्रिता. ।। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।। अप क्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।। सर्वेषामविरोधेन शिवकर्म समारभेत् । इति सर्षपाक्ष-तान् विकीर्य, आत्मरक्षां शिवचन्दनेन कुर्यात । तत्र नमः ईश्वराय नम.

पूर्वे ॥ आग्नेयेश्वराय नम आग्नेये ॥ यमेश्वराय नम दक्षिणे ॥ निर्ऋतीश्वराय नम नैर्ऋत्ये ॥ वरुणेश्वराय नम पश्चिमे ॥ वायव्येश्वराय नम वायव्ये ॥ सोमेश्वराय नम उदीच्याम् ॥ ईशानेश्वराय नम ईशाने ॥ आकाशेश्वराय नम ऊर्ध्वायाम् ॥ अनन्तेश्वराय नम पृथिव्याम् । सर्वेश्वराय नम । सर्वत्र ॐ नमो भगवते रुद्राय ॥ इति मन्त्रेण प्राणायामत्रयं कुर्यात् तत्र पूरके ॥ ३६ ॥ कुम्भके ॥ १२ ॥ रेचके ॥ १७ ॥ मन्त्रसंख्या ॥ तत्र आचार्य दीपकलशगणेशादीनां पूजां कुर्य्यात् । तत्प्रकारश्च यथा अथ दीपपूजा । पृष्ठो दिवीति प्रज्वाल्य, ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा स रिषः पातु नक्तम् ॥ नमोस्त्वनन्तायेति पूजयेत् ॥ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुग धारिणे नमः ॥ नमस्ते इत्यादिना प्रणमेत् ॥ नम कमलनाभाय नमस्ते जलशायिने ॥ नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥ वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ॥ सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥ शुभं भवतु कल्याणमारोग्यं शुभसम्पदः ॥ मम शत्रुविनाशाय दीपज्योतिर्नमोऽस्तु ते ॥ इति दीपपूजा ॥ )—अथ कलशस्थापनम् ॥ ईशानदिग्भागे ऽ व्रण सुशोभितं तैजसं मृण्मयं वा कलशं धान्योपरि स्थापयेत् ॥ तत्प्रकारश्च यथा— भूरसीति भूमिं संशोध्य ॥ ॐ भूमिरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीं दृ ꣳ ह पृथिवीं मा हि ꣳ सीः धान्यमसीति धान्यं संस्थाप्य ॥ ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥ आजिघ्रेति कलशं स्थापयेत् ॥ ॐ आजिघ्र कलशं मह्यात्वा विशन्त्विन्दवः ॥ पुनरूर्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥ इमम्मे इत्यादिना गङ्गे चेत्यादिना पवित्रजलं प्रक्षिपेत् ॥ ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ या ओषधी रिति सर्वौषधीं प्रक्षिप्य ॥ ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामह ꣳ शतं धामानि सप्त च ॥ हिरण्यगर्भ इति पञ्चरत्नानि । ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ या फलिनी रिति फलम् ॥ ॐ या फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पति प्रसूता

रतानो मुञ्चन्त्व १४ हसः ॥ यवोसीति यवान् ॥ ॐ यवोसि यवया-स्मद्वेषो यवयारातोर्दिवेत्त्वान्तरिक्षायत्वा पृथिव्यै त्वाशुन्धन्ताँल्लोकाः पितृसदनाः पितृपदनमसि ॥ गन्धद्वारामिति गन्धम् ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीपिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ काण्डात्काण्डात्प्ररोहन्ति परुषः परुषः स्परि ॥ एवानो दुर्वे प्रतनु सहस्रेण शतेन च ॥ स्योना पृथिवीति मृदः ॥ स्योना पृथिवि नोभवानृक्षरा निवेशनी ॥ यच्छानः शर्म सप्रथाः ॥ अश्वत्थेव इति पञ्चपल्लवैस्तन्मुखमाच्छ द्य ॥ ॐ अश्वत्थेवो निषदनं पर्णे वो व सतिष्कृता ॥ गोभाज इत्किला सथयत्सनवथ पूरुषम् ॥ बृहस्पते इति वस्त्रयुग्नेन वेष्टइत्वा ॥ ॐ बृहस्पतेऽअति यदर्योऽअर्हाद्युमद्विभाति क्रतु मज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजानतदस्मासु द्रविणं धेहि चित्रम् ॥ उप ामगृहीतोसि बृहस्पतये त्वैपत्येयोनिबृहस्पतयेत्वा ॥ प्रजा-पतेनेति दृष्यत्तैर्भूषयित्वा ॥ ॐ प्रजापतेनत्वदेता न्यन्यो विश्वारूपाणि परिताबभूव ॥ यत्कामास्ते जुहुमस्तन्नोऽअस्तु वय १४ स्याम पतयो रयीणाम् ॥ पूर्णादर्वीति कलशोपरि पूर्णपात्रं निधाय पूर्णादर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणा वहा इषमूर्ज १४ शतक्रतो ॥ तत्र तत्त्वायामिति वरुणमावाह्य पञ्चोपचारैः पूजयेत् ॥ ॐ तत्वायामि ब्रह्मणावन्दमानस्तदा शास्ते यजमानो हविर्भिः ॥ अहेड मानो वरुणेह बोदध्युरुश १४ समान आयुः प्रमोषीः ॥ तत्रैव सर्वे समुद्रा इति तीर्था-न्यावाहयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ततः कलशं स्पृष्ट्वाऽभिमन्त्रयेत् ॥ कल-शस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ॥ ऋग्वे-दोऽथ यजुर्वेदः सामवेदोह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ततः कलशं प्रार्थयेत् ॥ देव दा नवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोसि तदा कुम्भः विधृतो विष्णुना स्वयम् ॥ त्वत्तो ये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिता । त्वयि तिष्ठन्ति भुवानि त्वयि प्राणा, प्रतिष्ठिता ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्नि-ध्यं कुरुमेदेव प्रसन्नो भव सर्वदा ॥

ब्राह्मणेभ्यो नमः सम्पूज्य । अद्येत्यादि० अमुकोहं मम अमुक-कर्मणि पुण्याहवाचनाख्यकर्म कर्तुमैमिर्यामोऽङ्गुलीय कासने गृहपति-दैवतैरमुकगोत्रान् अमुकशर्मणो ब्राह्मणान् पुण्याहवाचकत्वेन युष्मान

शृणे स्वस्ति प्रतिवचनम् ॥ ॐ कारपूर्वे विप्रस्य भवेत्पुण्याहवाचनम् । ततोऽक्षतान् क्षिप्त्वा । ततोऽवनिकृतजानुमण्डल कमलमुकुलसदृश मञ्जलिं शिरसा धारयेत् । दक्षिणेन पाणिना सुवर्णपूर्णकलश धारयित्वा अङ्गानि धारयित्वा अङ्गानि स्पृशेत् । शिरसि मे सौभाग्यमस्तु मस्तके श्रीकान्तिरस्तु चक्षुषो सुतेजोऽस्तु श्रोत्रयो श्रवणेन्द्रियमस्तु इत्यङ्गानि स्पृशन् । ॐ दीर्घा नागानद्यो गिरयस्त्रीणि विष्णुपदानि च । तेनायु प्रमाणेन पुण्य पुण्याह दीर्घमायुरस्तु । शिवा आप सन्तु सौमनस्य मस्तु अक्षत चारिष्टम् चास्तु गन्धा पान्तु सौमङ्गल्य चास्तु पुष्पाणि पान्तु सौ श्रेयमस्तु । अक्षता पान्तु बहुदेय च नोस्तु शान्ति पुष्टितुष्टी श्रीयशो विद्या विनयो बहु पुत्र चायुष्य चास्तु । य कृत्वा सर्व वेद यज्ञक्रिया करणकर्म्मा रम्भा शुभा शोभना प्रवर्त्तन्ते तमहमोङ्कार मादि कृत्वा ऋग्यजु सामाथर्वणाशीर्वचनं बहुऋषिसम्मत समनुज्ञात भवद्भिरनु ज्ञात पुण्य पुण्याहम् वाचयिस्ये, वाच्यताम् ॥ भद्र कर्णेभि शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा । स्थिरैरङ्गै स्तुष्टुवा छ सस्तनु भिव्यशे महि देवहित यदायु ॥ ॐ देवानाभद्रा सुमतिर्ऋजुयता देवाना छ रातिरभिनो निवर्त्तताम् । देवानाँ छ सख्यमुपसेदिमा वय देवान आयु प्रतिरन्तु जीवसे । दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम् ॥ अथात्वदीर्घायुर्भूत्वा शत वल्शाविरोहतात् ॥ न तद्रक्षा छ सिन पिशाचा स्तरन्ति देवानामोज प्रथमज छ ह्येतत् । यो बिभर्ति दाक्षायण छ हिरण्य छ सदेवेषु कृणुते दीर्घमायु । ॐ द्रविणोदा द्रविण सस्तु- रस्यद्रविणोदा सनरस्य प्रय छ सद् । द्रविणोदा वीरवती मिषनो द्रविणो दारा सने दीर्घमायु ॥ सविता पश्चात् सविता पुरस्तात् । सवितोत्तरात्तात् सविताधरात्तात् । सविताव सुवतु सर्वताति सविवानो रासता दीर्घमायु ॥ नवो नवो भवति जायमानोऽह्ना केतुरुषसामेत्यग्रम् ॥ भाग देवेभ्यो विदधात्यायन्प्रचन्द्र मास्तिरस्ते दीर्घमायु ॥ उच्चादिविद क्षिणावन्तो अस्थुर्ये अश्वदा सहते सूर्येण । हिरण्यदा अमृतत्व भजन्ते वासोदा साम प्रतिरन्तु आयु । व्रतजपयम नियमतपस्वाध्यायक्रतुद मदानविशिष्टाना सर्वेषा ब्राह्मणाना मन समाधीयताम् ॥ समाहित मनस स्म । प्रसादन्तु भवन्त । प्रसन्ना स्म । शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु ऋद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु कर्मसमृद्धिरस्तु वेदसमृद्धिरस्तु शास्त्रसमृद्धिरस्तु पुत्रपौत्रसमृद्धिरस्तु इष्ट सम्पदस्तु ॥ ततो बहिरक्षतान् क्षिपेत् । अरिष्टनिरसनमस्तु । यत्पाप रोग शोकमकल्याणावसद्दूरे प्रतिहतमस्तु । तत पुनर्मार्जनम् । यच्छ्रेय स्तदस्तु उत्तरे कर्मण्यविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तरा

क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् ॥ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । तिथिकरणे सुमुहूर्ते सनक्षत्रे सग्रहे सलग्ने सदैवते प्रीयेताम् । दुर्गा पाञ्चाल्यौ प्रीयेताम् । अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् । इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् । वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । महेश्वपुरोगा उमामातरः प्रीयन्ताम् । अरुन्धतीपुरोगाः पतिव्रताः प्रीयन्ताम् । विष्णु पुरोगाः सर्वेदेवा प्रीयन्ताम् । ब्रह्मपुरोगाः सर्वेवेदाः प्रीयन्ताम् । आदित्यपुरोगाः सर्वेग्रहाः प्रीयन्ताम् । ब्रह्मच ब्राह्मणाश्च प्रीयन्ताम् । श्रीसरस्वत्यौ प्रीयेताम् । श्रद्धामाहेश्वरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवन्तौ विघ्नविनायकौ प्रीयेताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । सर्वाग्रामदेवताः प्रीयन्ताम् । सर्वा इष्टदेवताः प्रीयन्ताम् । पुनरक्षतानां बहिस्त्यागः । हताश्च ब्रह्मविद्विषो हताश्च परिपन्थिनः । हताश्च कर्मणो विघ्नकर्त्तारः शत्रवः पराभवं यान्तु शाम्यन्तु घोराणि शाम्यन्तु पापानि शाम्यन्त्वीतयः । पुनर्मार्जनम् । शुभानि वर्धन्तां शिवा आपः सन्तु । शिवा अतिथयः सन्तु । शिवा ऋतवः सन्तु । शिवा अग्नयः सन्तु । शिवा अतिथयः सन्तु । शिवा आहुतयः सन्तु । शिवावनस्पतयः सन्तु । शिवा ओषधयः सन्तु । अहोरात्रे शिवे स्याताम् । निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् । इति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते क्लृप्तप्रजानां योगक्षेमो भवति ॥ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतु सोमसहिताः आदित्यपुरोगाः सर्वे ग्रहा प्रीयन्ताम् । भगवान्पर्जन्यः प्रीयताम् । भगवान्स्वामी महासेनः प्रीयताम् । भगवान्नारायणः प्रीयताम् । पुण्यं पुण्याहं वाचयिष्ये ब्राह्मणा ब्रुवन्तु व्याच्यताम् । ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पालनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तुनः ॥ भो ब्राह्मणाः मम गृहे अमुक कर्मणि पुण्याहं भवन्तो ब्रुवन्तु ॐ पुण्याहं ॥ १ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः पुनन्तु विश्वा भूतानि जातवेदाः पुनीहि मा ॥ पृथिव्यामुद्धृता यान्तु यत्कल्याणं पुराकृतम् । ऋषिभिः सिद्ध गन्धर्वैः तत्कल्याणं ब्रुवन्तु नः भो ब्राह्मणा मम गृहे अमुककर्मणि कल्याणं भवन्तो ब्रुवन्तु ॥ ॐ कल्याणं ॥२॥ यथेमां वाचं कल्याणि मावदानि जनेभ्यः । ब्रह्मराजन्याभ्या ᳪ शूद्रायचार्य्याय च स्वाय चारणाय च ॥ प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुपमादो नमतु ॥ सागरस्य यथा ऋद्धिर्महालक्ष्म्यादिभिः कृताः ॥ सम्पूर्ण सप्रभावा च तां च ऋद्धिं भवन्तो ब्रुवन्तु ॥ ॐ ऋद्ध्यताम्

॥३॥ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम । दिवम् पृथिव्या अध्या रुहामाविदामदेवान्स्वर्ज्योति । स्वस्तिरस्तु याऽविनाशाख्या पुण्यकल्याण वृद्धिदा । विनायकप्रिया नित्य ताञ्च स्वस्ति ब्रुवन्तु न । भो ब्राह्मणा मम गृहे अमुककर्म्मणि स्वस्ति भवन्तो ब्रुवन्तु ॥ ॐ आयुष्मते स्वस्ति ॥३॥ ततो वरुण जलेनाम्रपल्लवगृहीतेन यजमान ब्राह्मण अभिषिञ्चेयु ॥ ॐ स्वस्तिन इन्द्रो वृद्ध श्रवा स्वस्तिन पूषा विश्ववेदा । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमि स्वस्तिनो बृहस्पतिर्दधातु । पय पृथिव्या पय ओषधीषु पयोदिव्यन्तरिक्षे पयोधा । पयस्वती प्रदिश सन्तु मह्यम् । विष्णोरराटमसि विष्णोश्नप्त्रेस्थो विष्णो स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसि विष्णवे त्वा । अग्निर्देवता वातोदेवता सूर्य्योदेवता चन्द्रमा देवता वसवो देवता बृहस्पति देवता रुद्रो देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता इन्द्रो देवता वरुणोदेवता, मूर्धासिराड् ध्रु वासि॰ध-रुणधर्त्र्यसि धरणीआयुषे त्वा वर्चसेत्वा कृष्यै त्वा क्षेमाय त्वा ॥ ॐ द्यौ शान्तिरन्तरिक्ष ७ शान्ति पृथिवी शान्तिराप शान्तिरोषधय शान्ति वनस्पतय शान्तिर्विश्वेदेवा शान्तिर्ब्रह्म शान्ति सर्व ७ शान्ति शान्ति रेव शान्ति सामाशान्तिरेधि ॥ विश्वानि देवसवित दुरितानि परासुव यद्भद्र तन्न आसुव इत्यभिषेक । ततो यजमानो वरुणदक्षिणासंकल्प कुर्यात् अद्येत्यादि अमुकोऽहं ममामुककर्मण साङ्गफलावाप्तये वरुणदक्षिणार्थमिमानि सोपस्कराणि सदक्षिणादिकानि तानि पूजितब्राह्मणेभ्यो विभज्य दातुमुत्सृजेत् ॥ इति ।

## नान्दीमुख श्राद्धविधिः ।

अथ नान्दीमुखश्राद्धपद्धति प्रारभ्यते ॥ तत्र सावह्नाह्ने मुहूर्त्ते उत्थाय, यथाप्रदेश स्नान सध्यादि नित्यकर्म समाप्य प्रातरष्टो चतुरो वा ब्राह्मणान्निमन्त्रयेत् ॥ ततो वेद्या गणपतिसहिता गौर्य्यादिष डश मातृका प्रतिमास्वपुञ्जलेपान्यतमेष्वधिष्ठानेषु स्थापयेत् ॥ तथा ॥ कृता महालिन्दरचरण म्याचान्त सर्पशोपमवपाणि शुद्धासने प्राङ् मुख उपविश्य कुशात्रययवजलान्यादाय देशकालौ सङ्कल्य ॥ ॐ ममामुककर्माङ्गभूतगणपति सहितषोडशमातृपूजनमहं करिष्ये ॥ इति सङ्कल्पयेत् ॥ तत पुष्पाक्षतानादाय ॥ ॐ गणानान्त्वा गणपति ७ हवामहे प्रियाणान्त्वा प्रियपति ७ हवामहे निधीनान्त्वानिधिपति ७ हवामहे वसोमम ॥ आहमजा निगर्भधमात्वमजासिगर्भधम ॥ ॐ भूर्भुव स्व गणपते इहागच्छ इह तिष्ठ इति गणपति स्थापयेत् ॥ एव

प्रदक्षिण क्रमेण गौर्य्यादिस्थापनम ॥ ॐ भूर्भुवः स्वगौरि इहागच्छ इह तिष्ठ ॥ १ ॥ ॐ भूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ ॥ २ ॥ ॐ भूर्भुवः स्वः मेधे इहा० ॐ भूर्भुवः स्वः शचि इहागच्छ इह तिष्ठ ॥ ३ ॥ ४ ॥ ॐ भूर्भुवः स्व सावित्री हा० ॥ ५ ॥ ॐ भूर्भुवः स्वः विजये इहा० ॥ ६ ॥ ॐ भूर्भुवः स्वःजये इहा० ॥ ७ ॥ ॐ भूर्भुवः स्वः देवसेने० ॥ ८ ॥ ॐ भूर्भुवः स्वः स्वधे इहा० ॥ ६ ॥ ॐ भूर्भुवः स्वः स्वाहे इहा ॥ १० ॥ ॐ भूर्भुवः स्वर्मातर इहागच्छत इह तिष्ठत ॥ ११ ॥ ॐ भूर्भुवः स्वर्लोकमातर इहागच्छत इह तिष्ठत ॥ १२ ॥ ॐ भूर्भुवः स्वः हृष्टे इहा० ॥ १३ ॥ ॐ भूर्भुवः स्वः पुष्टे इहा० ॥ १४ ॥ ॐ भूर्भुवः स्वः स्तुष्टे इहा० ॥ १५ ॥ ॐ भूर्भुवः स्वदात्मकुलदेवते इहागच्छ इह तिष्ठ ॥ १६ ॥ ॐ भूर्भुवः स्वः श्रीरिहागच्छ इह तिष्ठ ॥ १७ ॥ इति गणपति सहिता एता मातृः प्रत्येकमोंकारव्याहृतिपूर्वक मावाह्य स्थापयित्वा ॥ ॐ मनोजूतिर्जुषता-माज्यस्येति प्रतिष्ठां कृत्वा ॥ प्रणवादिनमोन्तेन स्व स्व नाम्ना षोडशोप-चारैः पूजयेत् ॥ ततः केनचित्पात्रेण सगुडं विलीनघृतमादाय ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्र धारं देवस्त्वा सविता पुनातु वसोः पवित्रेण शत धारेण सुप्वा: कामधुक्षः ॥ १ ॥ इति मन्त्रेण मातृणामुपरि भित्तिलग्नाः सप्त पञ्च वाधारारुत्तरोत्तरक्रमेण पातयेत् ॥ ताश्चपूजयेत् ॥ ततः ॐ आयुष्यं वर्चस्य छ रायस्पोपमौद्भिदम् ॥ इद छ हिरण्यं वर्चस्व ज्जैत्राया विशतादुमाम् ॥ १ ॥ नतद्रक्षा छ सिन पिशाचा-स्तरन्ति देवानामोजः प्रथमज छ ह्येतत् ॥ यो बिभर्ति दाक्षायण छ हिरण्य स देवेषु कृणुते दीर्घमायुः ॥ २ ॥ यदावध्नन्दाक्षायणा हिरण्य छ शतानीकाय सुमनस्यमानाः ॥ तन्मऽआवध्नामि शत शारदायायुष्म । ञ्जरदष्टिर्यथासम् ॥ ३ ॥ इति वृद्धि सूक्तं पठेत् ॥ अथ नान्दी श्राद्ध-प्रयोगः ॥ तत्रादौ गोमयोपलिप्ते देशे श्राद्धसामग्रीं संपाद्य प्रागग्रकुशोत्त-रेष्वा सनेषु प्राङ् मुखान् दक्षिणापेक्षमानुदगपवर्गान् पट्दर्भवटून्निवेश्य प्रत्यासनसमीपे तिलतैलेन दीप प्रज्वालयेत् ॥ ततः कर्त्ता प्रक्षालितकर-चरणः स्वासने उदङ् मुख उपविश्य सपवित्रोपकुशः सव्येन आचम्य प्राणानायम्य ॥ सजघनं दक्षिणं जान्वा च्य ॥ ताम्बूलादिकमादाय ॥ ॐ अद्य करिष्यमाणामुक कर्म निमित्तिकाभ्युदयिक श्राद्धे अस्मन्मात्रा-दित्रयश्राद्धसम्बन्धिनः सत्यवसुसंज्ञका विश्वेदेवाः अनेन ताम्बूलादि

---

तीर्थ यात्रागमने–प्रादौघृत श्राद्धंविधेयम् । यात्रान्ते गृहमागत्य-पूर्ववत् दधि श्राद्धंविधेयम् ॥

द्रव्येण कुशयद्रूपा भवन्तो मया निमन्त्रिता ॥ ॐ आमन्त्रिता स्म ॥ इतिसर्वतो दक्षिणगत मात्रादिदेवदर्भ वटु निम न्त्र्य एवमेव तदुत्तरी पित्रादि मातामहादि देवदर्भवटुद्वं च क्रमेण निमन्त्र्य तत ॐ अक्रोधनै शौचपरैरिति पठित्वा स्वागतम् भवता सुस्वागतमिति प्रार्थयेत् ॥ तत पुनस्ताम्बूलादिकमादाय ॐ अद्यामुकगोत्राऽस्मन्मातृपितामही प्रपिता मह्योऽमुकामुक देव्यो नान्दीमुख्य अनेन ताम्बूलादिद्रव्येण कुशयद्रूपा भवत्यो मया निमन्त्रिता ॥ ॐ आमन्त्रिता स्म इति निमन्त्र्य एवमेव पित्रादिमातामहादि दर्भवटुद्वय क्रमेण निमन्त्रयेत् ॥ तत ॐ अक्रोधनै शौचपरैरिति पठित्वा ॥ स्वागत भवताम् सुस्वागतमिति प्रार्थयेत् ॥ ततो गन्धपुष्पादियुत पाद्य गृहीत्वा ॐ अद्याऽस्मन्मात्रादित्रयसम्बन्धिन सत्यवसुसञ्ज्ञका विश्वेदेवा एतत्पादार्घं व स्वाहा नम इति दत्त्वा एवमेव पित्रादि मातामहादिदेवेभ्योप्यर्घं दद्यात् ॥ पुन ओं अमुकगोत्राऽस्मन्माता पितामही प्रपितामह्योऽमुकामुकदेव्यो नान्दीमुख्य एतत्पादार्घं त्रेधा विभज्य व स्वाहा नम इति मातृवर्गेऽर्घं दत्त्वा, पित्रादिमातामहादि वर्गद्वयेऽप्यर्घं क्रमेण दद्यात् ॥ तत ओं अद्याऽस्मन्मात्रादित्रयसम्बधिन सत्य वसुसञ्ज्ञका विश्वेदेवा व स्वाहा नम । इति मातृवर्गदेवेभ्य आच- मनार्थं जल दत्त्वा एवमेव पितृवर्गमातामहवर्गदेवेभ्योप्याचमनं दद्यात् ॥ पुन ॐ अमुक गोत्रास्मन्मातृपितामहीप्रपिता मह्योऽमुकामुकदेव्यो नान्दीमुख्य इदमाचमन त्रेधा विभज्य व स्वाहा नम इति मात्रादिभ्य आचमन दत्त्वा, पित्रादिभ्यो मातामहेभ्यश्चाचमन दद्यात् ॥ तत ओं अत्रामधामेति पठेत् । इति निमन्त्रणम् ॥ तत कर्त्ता स्वपुरत कर्म- पात्रं जलेनापूर्य गन्धपुष्पदूर्वादधियवहरित कुशास्तत्र निक्षिप्य ॥ ओं कर्मपात्रं सम्पन्नमिति ब्रूयात् ॥ ओं सुसपन्नमित्यनुज्ञात ओं अपवित्र पवित्रो वा० ओं पुण्डरीकाक्ष पुनात्विति पठित्वा कुशानीत जलेन आ- त्मीयोपकरणानि प्रोक्ष्य ओं वैष्णव्यै नम ॥ ओं काश्यप्यै नम । ओं भूम्यै नम ॥ इति भूमिं सम्पूज्य ओं विष्णवे नम ॥ इति विष्णुं मनो- वाक्कायैर्नमस्कारं कुर्यात् ॥ ततो दूर्वाकुशयवजलान्यादाय ॥ देश कालौ सङ्कीर्त्य ओं अद्यामुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीना ममुकामुकदेवीना नान्दीमुखीनाम् अमुकगोत्राणामस्मत्पितृपितामहप्रपि तामहानाममुकामुकशर्मणा नान्दीमुखानाम् तथा च अमुकगोत्रा णामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणा सपत्नि कानाममुककर्मनिमित्तकं सत्यवसुसञ्ज्ञक- विश्वेदेवपूर्वकं सपिण्डकर्मा भ्युदयिकश्राद्धमहं करिष्ये इति संकल्प्य ॥ ॐ कुरुष्वेतिब्राह्मणानुज्ञात समरतव्याहृतिकां गायत्रीं त्रिर्जपित्वा विष्णु स्मरेत् ॥ तत ॐ नमो

नमस्ते गोविंद पुराणपुरुषोत्तम ॥ इद श्राद्ध हृषीकेश रक्षता सर्वतो दिश ॥ इति सर्वत्र यवान् गौरसर्षपाश्च विकीर्य ॥ वाम कटि सलग्न वस्त्राञ्चले नीवींबध्नीयात् । तत कूष्माण्ड सूक्तेन पावमानेन च जलमभिमन्त्र्य तेन हरितै कुशै पाकं प्रोक्षयेत् । अथासनादिदानम् ॥ तत्र तावदुदड मुख कुशत्रययवजलान्यादाय ॥ ॐ अद्याऽस्मन्मातृादित्रयश्राद्धसम्बधिन सत्यवसुसज्ञका विश्वेदेवा इदमासन वो नम इति कुशत्रयरूप सयव दक्षिणगतमासन पूर्वाग्रमुत्सृजेत् ॥ एवमेव पित्रादिमातामहादिदेवेभ्योऽप्यासनमुत्तरोत्तर दद्यात् ॥ तत ॐ अद्या मुकगोत्रास्मन्मातृपितामही प्रपितामह्यो नान्दीमुख्य इदमासन त्रेधा विभज्य व स्वाहा इत्युच्चार्य मातृवर्गे देवतीर्थेन पूर्वाग्र कुशत्रयमुत्सृजेत् । एवमेव पित्रादिमातामहादि वर्गद्वयोरपि दद्यात् तत ॐ सत्यवसुसज्ञकविश्वान्देवानावाहयिष्ये इति ब्रूयात् । आवाहय इत्यनुज्ञात सयवकर ॥ ॐ विश्वे देवा सऽआगत शृणुताम ऽइम ७ हवम् ॥ एद बर्हिर्निषीदत इत्यावाह्य ॥ ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरित्यनेन यवान्विकीर्य, ओं विश्वेदेव शृणुतेम ७ हव्म्मेयेऽ अन्तरिक्षेय ऽ उपद्यविष्ठयेऽअग्नि जिह्वाऽ उतवायजत्राऽ आसद्याऽस्मिन् बर्हिषिमादयध्वम् ॥ इति जपेत् ॥ विश्वेदेवोत्पत्तिनाम्नोरज्ञाने ॥ आगच्छन्तु महाभागाविश्वे देवा महाबला ॥ ये यत्र योजिता श्राद्धे सावधाना भवन्तु ते ॥ इति श्लोक पठेत् ॥ तत ओं नान्दीमुखीर्मातृरावाहयिष्ये इत्युचार्य आवाहयेत्यनुज्ञात सयवकर ओं उशन्तस्त्वा निधीमह्युशन्त समिधीमहि । उशन्नुशतऽ आवहमातृर्हविषेऽअत्तवे ओं मातामहान्हविषेऽ अत्तवे इति मन्त्रोहेन यथा क्रम पित्रादीन्मातामहादींश्चावाह्य ॥ प्रदक्षिण यवान्विकिरेत् ॥ ततोदेवपूर्वक पट्सु स्वर्णादिपात्रेषु प्रतिपात्र पवित्र द्वय पवित्र वा निधाय ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये ॥ शय्योरभिश्रवन्तुन ॥ इति प्रत्येक पात्रेष्वपो निषिच्य ॥ ॐ यवोसि यवयास्मद्द्वेषो यवयाराती रिति देवपात्रद्वयेषु यवान्निक्षिप्य यवोसि सोमदैवत्यो गोसवो देवनिर्मित ॥ प्रत्नमद्भि प्रक्ता पुष्टयाना दीमुखाँल्लोकान् प्रीणाहिन स्वाहा ॥ इति मन्त्रेण मात्राद्यर्घपात्रेषु यवान् क्षिपेत् ॥ तत्र सर्वत्र तूष्णीं गन्ध पुष्पाणि च दत्वा ॥ ॐ अर्घपात्र सपत्तिरस्त्विति ॥ अस्त्वर्घपात्रसपत्ति रित्यनुज्ञातो देवार्घपात्र वामहस्ते कृत्वा पवित्रे पलाशादिपत्रे पूर्वाग्रे विन्यस्य ओं यादिव्या आप पयसा सबभूवुर्य्याऽअन्तरिक्षा ऽ उतपार्थिवीर्य्या ॥ हिरण्यवर्णा यज्ञियास्तानऽआप शिवा सर्ट स्योना सुहवा भवन्तु इत्यभिमन्त्र्य कुशत्रययवजलान्यादाय ॥ ओं अद्यास्मन्मात्रादित्रयश्राद्धसंबधिन सत्यवसुसज्ञका विश्वेदेवा एष वोऽर्घो नम इति

जुहोमि स्वाहा इति ।। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।। समूढमस्य पा ꣳ सुरे स्वाहा, इति च पठित्वा ।। ॐ विष्णोहव्य ꣳ रक्ष इत्यनया स्वा॰ ङ्गुष्ठ मयोमुखमनख मन्नेऽवगाह्यदमन्नम् इमा आपः–इदं माज्यम् इदं हविरित्युक्त्वा ।। ॐ अपहताऽअसुरा रक्षा ꣳ सिवेदिषद ।। इति यवान् विकीर्य वामकरेण पात्रं स्पृशन् कुशत्रययवजलान्यादाय ॐ अद्यास्मन्मात्रादित्रयश्राद्धसम्बन्धिनः सत्यवसुसंज्ञका विश्वेदेवा इदमन्न घृताद्युपस्करसहितं परिविष्टं हव्यममृतरूप वो नमः ।। इति संकल्प्यासनदक्षिणा भागे जलमुत्सृजेत् ।। एवमेव पित्रादिमातामहादिदेवेभ्योप्यन्नमुत्सृजेत् ।। पुनः मात्रादिपात्रमालभ्य ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽ अमृतं जुहोमि स्वाहा ।। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।। समूढमस्य पा ꣳ सुरे स्वाहा ।। इति पठित्वा, ॐ विष्णो हव्य ꣳ, रक्ष इत्यन्ने अङ्गुष्ठं निवेश्य ॐ अपहता इत्यन्नपात्र परितो यवान्विकीर्य कुशयवजलान्यादाय ॐ अमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुक देव्यो नान्दीमुख्य इदमन्न घृताद्युपस्करसहितं परिविष्टं हव्यममृतरूपं त्रेधा विभज्य वः स्वाहा नमः इत्युत्सृजेत् ।। एवमेव पित्रादिपात्र मातामहादिपात्रं च क्रमेण पात्रालम्भनादिपूर्वक संकल्प्य दद्यात् ततः ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।। तत्सर्वमच्छिद्रमस्तु इति प्रार्थ्य नांदीमुखान्मात्रादीन्ध्यायन् देवपूर्वकं भोजनपात्रेषु किंचित्किंचिदपो दत्त्वा यथासुखं जुषध्वमितिब्रूयात् ।। ततः प्रागग्रकुशोत्तरासनो प्रविष्टः प्रणवव्याहृति पूर्विकां सकृत्त्रिर्वा गायत्रीं जप्त्वा । ॐ मधु मधु मध्विति च जपेत् ।। न मधुवाता इति क्वचन पितृमन्त्रान् ।। ततः ॐ कृणुष्वपाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँऽइभेन ।। तृष्वीमनुप्रसितिन्द्रूणानोस्तासि विद्ध्यरक्षसस्तपिष्ठैः ।। १ ।। तवभ्रमासऽ आशुया पतन्त्यनुस्पृशधृषता शोशुचानः ।। तपू ꣳ ष्यग्ने जुह्वा पतङ्गा नसन्दितो विसृज विष्वगुल्काः ।। २ ।। प्रतिस्पशोविसृज तूर्णितमा भवा पायुर्विशो ऽ अस्या ऽ अदब्धः ।। यो नो दूरेऽअघशꣳसो योऽ अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ।।३।। उदग्ने तिष्ठ प्रत्या तनुष्वन्या मित्राँ ऽ ओषतात्तिग्महेते ।। योनोऽअरातिꣳ, समिधान चक्रे नीचा तन्धक्ष्यत सन्न शुष्कम् ।। ४ ।। ऊर्ध्वोभवप्रतिविद्ध्या स्मदाविष्कृणुष्व दैव्यान्यग्ने ।। अवस्थिरा तनुहि यातु जूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ।। अग्नेष्ट्वा तेजसा सादयामि ।। ।। इति रक्षोघ्न सूक्तम् ।। ॐ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः ।। पुनन्तु विश्वा, भूतानि जातवेदः पुनीहि मा ।।१।। आप्यायस्व समेतु ते विश्वतः सोम, वृष्ण्यं भवा वाजस्य सङ्गथे ।।२।। शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्म

श्रूणि ॥ राजा मे प्राणोऽ अमृतꣳ, सम्राट् चक्षुर्विराट् श्रोत्रम् ॥३॥ जिह्वा मे भद्र वाङ्महो मनो मन्यु स्वराड् भाम मोदा प्रमोदा ऽ अङ्गुली रगानि मित्रम्मे सह ॥ ४॥ बाहू मेबलमिन्द्रिय ꣳ हस्तौ मे कर्म्म वीर्यम् ॥ आत्माक्षत्रमुरो मम ॥ ५ ॥ पृष्ठीर्म्मे राष्ट्र मुदरमꣳसौ ग्रीवाश्च श्रोणी ॥ ऊरू ऽ अरत्नि जानुनी विशोमेङ्गानि सर्वत ॥ ६ ॥ नाभिर्म्मे चित्त विज्ञानम्पायुर्म्मेऽ पचिति भसत् ॥ आनन्दनन्दा वाण्डौ मे भग सौभाग्य पस जघाभ्या पद्भ्या धर्मो ऽ स्मि विशि राजा प्रतिष्ठित ॥ ७ ॥ पय पृथिव्या पय ऽ ओषधीषु पयो दिव्यन्तरिक्षे पयोधा ॥ पयस्वती प्रदिश सन्तु मह्यम् ॥ ८ ॥ इति पवमानसूक्तम् ॥ ॐ सहस्रशीर्षा पुरुष इत्यादि षोडशर्चपुरुषसूक्तमन्यानि शिवसङ्कल्पप्रभृतीनि पवित्राणि मङ्गलानि च जपेत् । तत सर्वव्यञ्जनोपेतमन्नादुद्धृत्य सयवमादाय वारिणा-प्लाव्य प्रागग्रास्तृत कुशोपरि ॐ अग्निदग्धाश्च ये जीवा येप्यदग्धा कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्तायान्तु परा गतिमिति विकीर्य ॥ आचम्य विष्णु स्मृत्वा पुन किंचित्किंचिदपो दत्वा गायत्रीं मधुमधुमधिविति व जप्त्वा ॐ सम्पन्नमिति ब्रूयात् सुसम्पन्नमित्यनुज्ञात पिण्डानहं करिष्ये ॥ इतिपृच्छेत् ॥ कुरुष्वेत्य नुज्ञातो वालुकाभिश्चतुरस्र प्राक्प्लव मुदक्प्लव वा मण्डलत्रयं कृत्वा तन्मध्ये । ॐ अपहता ऽ असुरा रक्षाꣳसि वेदिषद इति प्रागग्रं रेखात्रय कृत्वा प्रत्येकरेखोपरि, ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुरा सन्त स्वाहया चरन्ति ॥ परा पुरोनिपुरोये भरन्त्यग्नि ष्टाँल्लोकात्प्रणुदात्यस्मादित्यगारान् भ्रामयेत् ॥ तत्र रेखात्रयोपरि समूलान् प्रागग्रानुदगग्रान्वा कुशानास्तीर्य ॐ देवताभ्य इति त्रिर्जपेत् ॥ ततो नवपुटकेषु जलयवगन्धपुष्पाणि कृत्वा पक पुटकं वामहस्ते कृत्वा कुशादीन्यादाय ॥ ॐ अद्यामुकगोत्रेऽस्मन्मातरमुकदेवी नान्दीमुखि अत्रावनेनिक्ष्व ते स्वाहा इति दर्भमूले मात्र अवनेजनं दत्वा एवमेव [पिता महीप्रपितामहीभ्या मध्यामयो क्रमेण दद्यात् ॥ तत ॐ अद्यामुक गोत्राऽस्मत्पितरमुकशर्मन् नान्दीमुख ऽत्रावने निक्ष्व ते स्वाहा इति द्वितीयमण्डलस्थितकुशत्रयमूले पित्रेऽवनेजनं दत्वा एवमेव पिता महप्रपितामहयोस्तत्तत्कुशमध्याग्रयोरवनेजन दद्यात् ॥ एवमेव माता महादिष्वदर्भ मूलमध्याग्रेषु दद्यात् । तत सर्व्वव्यञ्जनोपेत सर्व्वविध मन्नमुद्धृत्य हुत शेषान्नदधि बदरयवै संमिश्रयन्नयपिण्डान बिल्लोप मानिमाय एक पिण्ड कुशाग्रे स्थादाय ॐ अमुकगोत्रेऽस्मन्मातरमुकदेवि नान्दीमुखिएष दधि बदराक्षत मिश्र पिण्डस्ते नम ॥ इत्यवनेजनक्रमेणा वनेजनस्थानेषु मात्रादिभ्य पिण्डान दद्यात् ॥ तत ओं अमुक गोत्राऽ स्मत्पितरमुक शर्मन्नान्दी मुख एष दधि बदराक्षत मिश्र पिण्डस्ते नम ॥

इति पितृस्थाने दद्यात् । ततो दर्भ मूलेषु मूपाणिस्थं पिण्डलेपं विमृज्य हस्तौ प्रक्षाल्याचम्य हरिं स्मरेत् ॥ ततो मात्रादि पिण्डाभिमुखांजलिं वृद्धा ॥ ओं अत्रमातरो मादयध्वं यथा भागमावृषायध्वमिति जपित्वा उदङ् मुखी भूय श्वास नियम्य प्रदक्षिणं परावृत्य, ओं अमीमदन्त मातरो यथा भागमा वृषायिषत् , इति जपेत् ॥ एवं पित्रादि पिण्डाभिमुखो भूत्वा ओं अत्रपितरोमादयध्वमित्यादि जपित्वा मातामहादिपिण्डाभिमुखोभूत्वा ॐ अत्रमातामहादयो मादयध्वमित्यादि जपित्वा ऽ सुनियम्य ॐ अमीमदन्त पितरो यथाभागमावृषायिषत ॥ ॐ अमीमदन्त मातामहा यथा-भागमा वृषायिषतेति जपेत् ॥ ततोऽवनेजनपात्र जलेन ॐ अमुक गोत्रे मातरमुकदेवि नांदि मुखि अत्र प्रत्यवने निक्ष्वते स्वाहा ॥ इति मातृपिंडो-परि प्रत्यवनेजनं दत्वा ॥ एवमेव पितामही प्रपितामहीभ्यां तथा ॐ अमुकगोत्र पितरमुकशर्मन्नांदीमुख अत्रप्रत्यवनेजनंनिक्ष्वते स्वाहा, इति पितृपिंडोपरिदद्यात् ॥ एवमेव पितामहादिभ्यः पंचभ्यस्तत्तत्पिंडोपरिद-द्यात् ॥ ततो नीवीं विस्रंस्य आचम्य ॐ नमो वो मातरो रसाय नमो वो मातरः शेषाय नमो वो मातरो जीवाय नमो वो मातरः स्वाहायै नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो मातरो नमो वो गृहान्नो मातरो दत्तत्तोवो मातरो देष्म ॥ इति मात्रादि वर्गं नम-स्कृत्य ॥ ॐ नमो पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वाहायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरोदत्त सतो वः पित-रादेष्म इति पित्रादि मातामहादि वर्गद्वयं नमस्कुर्यान् ॥ ततः ॐ एतद्वो-मातरो वास इति मात्रादि पिंडेपु सूत्राणि दत्त्वा ॥ ॐ एतद्वः पितरो-वास इति पित्रादि षट् पिण्डेपु प्रति पिण्डं सूत्रंत्रयं दधान् ॥ ततो गन्ध पुष्प धूप दीप द्राक्षामलकमूलयवतांबूल दक्षिणादिभिः प्रतिपिण्डम-भ्यर्च्य ॥ ॐ शिवा आपः सन्तु इति भोजनपात्रेपु किंचित्किंचिज्जलं दत्त्वा ॐ सौमनस्यमस्त्विति पुष्पाणि ॥ अक्षतं चारिष्टं चास्तु इति यवांश्च दधान् ॥ ततः ॐ नान्दीमुख्योमातरः पितामह्यः प्रपितामह्यः प्रीयंतामिति-क्षीर यवोदकमसव्य स्थान देवः ॥ एवमेव पितरः पितामहाः प्रपितामहाः प्रीयंतामिति पित्रादिवर्गे ॥ मातामहाः प्रमातामहाः वृद्धप्रमातामहाः सपत्निकाश्च प्रीयन्तामिति मातामहादिवर्गे च प्रत्येकमघ्योदकं दद्यात् ॥ ततः कृताञ्जलिः प्रार्थयेत् ॥ ॐ अघोरा मातरः सन्तु ॐ अघोराः पितरः सन्तु ॥ ॐ अघोरा मातामहाः सपत्नीकाःसन्त्विति घोक्ता ॥ संविप्राः प्रत्युक्तवः ॥ ॐ गोत्रंनोवर्द्धतां दातारो नोभिवर्द्धन्ता वेदाः संततिरेव च ॥ श्रद्धाचनो माव्यगमन् बहुदेयं चनोऽस्तु ॥ अन्नंचनोबहुभवेदतिर्थीश्चलभे

मही। याचितारश्च नः सन्तु मा च याचिष्म कञ्चन एता सत्या आशिषः सन्त्विति ब्रूयात् सन्त्वित्युक्ते सपवित्रान् कुशानास्तीर्य मात्रादित्रयपिण्डे पित्रादित्रयपिण्डे मातामहादित्रयपिण्डे च कृत्वा ॥ नान्दीमुखीर्मातृपितामही प्रपितामही नान्दीमुखान् पितृपितामह प्रपितामहान् नान्दीमुखान् मातामहप्रमातामह वृद्धप्रमातामहान् सपत्नीकान् स्वाहा वाचयिष्य इति पृष्ट्वा वाच्यतामित्यनुज्ञात ॐ नान्दीमुखो मातृ पितामही प्रपितामह्यो नान्दीमुखाः पितृपितामह प्रपितामहा नान्दीमुखा मातामह प्रमातामह वृद्ध प्रमातामहाः सपत्नीकाश्च प्रीयन्तामिति प्रार्थ्य प्रीयन्तामिति द्विजैरुच्यमानो पिण्डेषु जलं निषिञ्चेत् ॥ तत सस्तव पात्राण्युत्तानीकृत्य द्रव्यदक्षिणां दद्यात् कुशत्रय यवजलान्यादाय, ओं अद्यास्मन्मात्रादित्रय श्राद्ध सम्बन्धि वैदिकवृद्धि प्रतिष्ठार्थमिमां द्राक्षामलकार्द्रक मूलकादिरूपां दक्षिणां विष्णु दैवत्याममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे ॥ इत्युच्चार्य दद्यात् ॥ एवमेव पित्रादि मातामहादि वर्गेष्वपि दक्षिणां दद्यात्। तत ॐ अद्यामुक गोत्राणां मातृ पितामही प्रपितामहीनां नान्दीमुखीनां कृते वृद्ध्यभ्युदयिक श्राद्ध प्रतिष्ठार्थमिमां द्राक्षामलकार्द्रक मूलकादिरूपां दक्षिणां विष्णु-दैवत्याममुक गोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृज ॥ इति मात्रादि वर्गे दक्षिणां दद्यात् ॥ एवमेव पितृवर्गे मातामहवर्गेऽपि दक्षिणां च दद्यात् ॥ तत पिण्डानुत्थापयामि इति पृष्ट्वा उत्थापय इत्यनुज्ञात पिण्डानुत्थाप्य पात्र कृत्वाऽऽद्यायदर्भानुल्मुकं च वह्नौ क्षिपेत् ॥ ततो जलदान पूर्वकम्। ॐ विश्वेदेवाः प्रीयन्तामित्युक्त्वा । प्रीयन्तामित्यनुज्ञात स्वस्ति भवन्तो ब्रुवन्तु इति ब्रूयात् स्वस्तीत्युक्ते प्रणिपत्य ॐ वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ॥ अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ इति मात्रादीन् पित्रादीन् मातामहादींश्च विसृजेत् ॥ तत ॥ आमा वाजस्य प्रसवो जगम्यादेमे द्यावा पृथिवी विश्वरूपे ॥ आमा गन्ता पितरा मातरा चामा सोमोऽमृतत्वेन गम्यात् ॥ इति पठित्वा प्रदक्षिणी कृत्य रक्षादीप निर्वापण पाणिभ्यां कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य पिण्डान् गवादिभ्योऽन्यत्र ऽप्सु वा विप्रान्यभृत घृतान्नेन भोजयेत् ॥ तत उच्छिष्ट मार्जनादि करणानन्तरं वैश्वदेव बलिकर्म कृत्वा ॐ प्रमादात् कुर्वतां कर्म इति पठित्वा कर्मपूर्ति कामो विष्णुं स्मरेत्। ततो येन स्थाने शुनभृत्यबान्धवानिथि संयुक्तोऽश्नीयात् ॥ इत्याभ्युदयिक श्राद्धपद्धति ॥ अथ मातृपित नान्दी-श्राद्धपद्धति ॥ तत्र नाथवा गणपतिमहि षोडशमातृणां पूजन घृतधारा पूजनं च पूर्वोक्तवत् कृत्वा ॐ आयुष्यं वर्चस्यमिति मन्त्रत्रयं पठेत् ॥ तत

उदङ् मुख उपविश्य । आचम्यप्राणा नायम्य ॥ देशकालौ संकीर्त्य अद्य अस्मदमुक कर्म निमित्तक सांकल्पिक नान्दीमुखश्राद्धं करिष्ये ॥ इति संकल्पयेत् ॥ तत दक्षिणोत्तर क्रमेण ॐ सत्यवसु सज्ञका विश्वेदेवा नान्दीमुखा ॐ भूर्भुव स्व इद व पाद्य पादावनेजन पादप्रक्षालन वृद्धिः ॥ तत ॐ अमुक गोत्रामातृपितामह प्रपितामह्यो नान्दीमुख्य ॐ भूर्भुव स्व इद व पाद्य पादावनेजन पादप्रक्षालन वृद्धिः ॥ ॐ अमुक गोत्रा पितृपितामह प्रपिता महा नान्दीमुखा ॐ भूर्भुव स्व इद व पाद्य पादावने जन पाद प्रक्षालनवृद्धि । ॐ अमुकगोत्रा मातामह प्रमाता मह वृद्धप्रमातामहा सपत्निका नान्दीमुखाॐ भूर्भुव स्व इद पाद्य पादावने जन पादप्रक्षालन वृद्धि ॥ अथासन दानम् ॥ स त्यवसुसंज्ञकाना विश्वेषा देवाना नान्दीमुखानाम् ॥ ॐ भूर्भुव स्व इदमासन सुखासन स्वाहा इति कुशत्रय सयवो दक्षिणत पूर्वाग्रमुत्सृजेत् ॥ एव सर्वत्र ॥ ॐ नान्दीश्राद्धे क्षणोक्रियेताम् तथा प्राप्नुता भवन्तौ प्राप्नुता भवन्तौ प्राप्नुवाव इति पठेत् ॥ तत ॐ अमुक गोत्राणा मातृपितामही प्रपिता महीना नान्दीमुखीनाम् ॥ ॐ भूर्भुव स्व इदमासनम् सुखासन स्वाहा, ॐ नान्दी श्राद्धे क्षणे क्रियेता तथा प्राप्नुता भ न्तौ प्राप्नुवाव ॥ ॐ अमुक गोत्राणा पितृपितामह प्रपितामहाना नान्दीमुखानाम् ॐ भूर्भुव स्व इदमासन सुखासन स्वाहा । ॐ नान्दीश्राद्धेक्षणे क्रियेता तथा प्राप्नुता भवन्तौ प्राप्नवाव ॥ ततो गन्धादिदानम् ॥ ॐ सत्यवसु सज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्य ॐ भूर्भुव स्व इद गन्धाद्यर्चन स्वाहा सपद्यता वृद्धि ॥ ॐ अमुक गोत्रेभ्यो मातृपितामही प्रपितामहीभ्य नान्दीमुखीभ्य ॐ भूर्भुव स्व इद गन्धाद्यर्चन स्वाहा सपद्यता वृद्धि ॥ ॐ अमुक गोत्रेभ्य पितृपितामह प्रपितामहेभ्यो नान्दीमुखेभ्य ॐ भूर्भुव स्व इदगन्धाद्यर्चन स्वाहा सपद्यता वृद्धि ॥ ॐ अमुक गोत्रेभ्यो मातामह प्रमातामह वृद्धप्रमातामहेभ्य सपत्निकेभ्यो नान्दीमुखेभ्य ॐ भूर्भुव स्व इदगन्धाद्यर्चन सपद्यता वृद्धि ॥ ततो भोजन निष्क्रय द्रव्य दानम् ॥ ॐ सत्यवसुसज्ञका विश्वेदेवा नान्दीमुखा ॐ भूर्भुव स्व इद युग्म ब्राह्मणभोजन पर्याप्त दास्यमान अन्न तन्निष्क्रय भूत किञ्चिद्धिरण्यममनरूपेण स्वाहा सपद्यता वृद्धि ॥ ॐ अमुक गोत्रा पितृ पितामह प्रपितामहा नान्दीमुखा ॐ भूर्भुव स्व इद मो युग्म ब्राह्मण ॥ तत सक्षीर यवोदकदानम् ॐ नान्दीमुखा सत्यवसु सज्ञकाविश्वेदेवा प्रीयन्ताम् ॐ अमुक गोत्रा मातृ पितामही प्रपितामह्यो नान्दीमुख्य पितृपितामह प्रपितामहा नान्दीमुखा द्वितीयगोत्रामातामह प्रमातामह वृद्धप्रमातामहा नान्दीमुखा सपत्निकाश्च प्रीयन्ताम् ॥ तत

ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवा इति मन्त्रं पठेत् ॥ अथ दक्षिणा दानम् ॥ ॐ सत्यवसु संज्ञकेभ्यो विश्वेभ्योदेवेभ्यो नांदीमुखेभ्य. कृतस्य नांदीश्राद्धस्यफल प्रतिष्ठा सिद्ध्यर्थं द्राक्षामलकयवमूल निष्क्रयी भूतां दक्षिणां दातुमहमुत्सृजे ॥ ॐ अमुक गोत्रेभ्यो मातृपितामही प्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठा सिद्ध्यर्थं द्राक्षामलक यवमूल निष्कयी भूतां दक्षिणां दातु मह मुत्सृजे ॥ ॐ अमुक गोत्रेभ्य पितृपितामह प्रपितामहेभ्यो नांदीमुखेभ्य. कृतस्य नान्दीश्राद्धस्य फल-प्रतिष्ठा सिद्धिऱ्यर्थं द्राक्षामलकयवमूल निष्कयीभूतां दक्षिणां दातुमह-मुत्सृजे ॥ ॐ अमुक गोत्रे भ्यो मातामह प्रमातामह वृद्ध प्रमातामह वृद्धप्रमातामहेभ्य· सपत्निकेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दी श्राद्धस्य फलप्रतिष्ठा सिद्ध्यर्थं द्राक्षामलकयवमूल निष्क्रयीभूतां दक्षिणांदातुमह-मुत्सृजे ॥ माता पिता महीचैव तथैव प्रपितामही ॥ पितापितामहश्चैव तथैव प्रपितामहः ॥ १ ॥ मातामहस्तित्पिता वप्रमातामहकादय· ॥ एते भवन्तु मे प्रीताः प्रयच्छन्तु सुमङ्गलम् ॥२॥ इति प्रार्थयेत् ॥ अस्य नांदीश्राद्धस्यकर्माङ्ग देवताः प्रीयन्ताम् अस्मिन्नांदी श्राद्धेन्यूनातिरिक्ताया विधिः सोपविष्ट ब्राह्मणानां वचनान्नान्दीमुखप्रसादात्सर्वः परिपूर्णोऽस्तु अस्तुपरिपूर्णइति विप्राः ॥ समाप्ताः ॥

## अथ नित्यश्राद्ध प्रयोग ।

आचम्य प्राणानायम्य । ॐ पवित्रेस्थो वै० इतिमन्त्रेण दक्षिण वामहस्तयोरनामिकायां कुशापवित्रे धृत्वा ॥ सङ्कल्पः ॥ अद्येत्यादि एवं विशेषण विशिष्टायां शुभपुण्य तिथौ ममाऽत्मन श्रुति स्मृति पुराणोक्त गुण फल प्राप्त्यर्थं ( अस्मत्पितृपितामह प्रपितामहानां सपत्नीकानां तथा च अमुक गोत्राणां अमुक शर्मणां अस्मन्मातामह प्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नित्यश्राद्ध महं करिष्ये ॥ ततः दक्षिणां दत्वा ।

---

अथ सामग्री

रोली । मौली । सुपारी । ४० । अक्षत । रक्तवस्त्र गज १ । माला जोड़ी । पुष्प । धूप । नैवेद्य । नागर पान । २१ ईलायची । लौंग । मेवा । नारियल । घृत । कपूर । सिंदूर । सर्वौषधी । सुपेद सरसों । कुशा । दूर्वा । पत्ता । दोना । ४० । जव । तिल । तैल । सप्तर्दनग । ४० । दधि । दुग्ध मधु । खांड । आँवला । बेर । दाख । अंगोछा । १२ धोती जोड़ा । १० । केसर । चन्दन । जनेऊ जोड़ा ११ । सुवर्ण दक्षिणा । १ वस्त्रदक्षिणा । १२ । पाक । इति नांदीमुख श्राद्ध सामग्री ॥इति॥

यथा, अमुकगोत्राणामस्मत्पितृ पितामह प्रपितामहानां अमुक शर्मणां सपत्नीकानां दक्षिणां दत्वा भवद्भिः प्रमादः कर्त्तव्यः सुकर्तव्यः । एवं मातामह प्रमातामह वृद्धप्रमातामहानां सपत्नीकानां गोत्रनामोच्चारपूर्वकं दक्षिणां दद्यात् ॥ ततः पित्रादयो मातामहाश्च इदं वः पाद्यमिति पाद्यन्दत्वाऽऽचम्य कुशासने उदङ्मुख उपविश्य पितृणां मातामहानां चेदमासनम् ॥ पित्र्येक्षणः क्रियाताम् । प्राप्नोतु भवान् प्राप्नुवानि । पितरो मातामहाश्च एव वो गन्धः सुगन्धः । इमानि पुष्पाणि सुपुष्पाणि । अयं धूपः सुधूपः अयं दीपः सुदीपः । आच्छादनं दत्वा पूर्णतां वाचयित्वा द्विगुण मामान्नं पात्रे संस्थाप्य प्रोक्ष्य पात्रमालभ्य तिलान्विकीर्य आमान्नेऽङ्गुष्ठं दत्वा । पितरः इदं वः आमान्नं सोपस्करं गयेयं भूः गदाधरो विप्रः ब्रह्मरूपमिदं पितृभ्य अमुक गोत्रेभ्यो अमुक शर्मभ्यो वसुरुद्रादित्य स्वरूपेभ्यः स्वधा मातामहादिभ्य श्चेदमामन्नं स्वधा सम्पद्यतां नमः । दत्तमामान्न मक्षय्यमस्तु । अस्त्वक्षय्यम् । श्रीगयागदाधरः प्रीतो भवतु । ब्रह्मार्पणमस्तु । ॐ मधुव्वाताऽ ऋतायते मधुक्षरन्ति सिन्धवऽः । माद्ध्वीर्न्नऽः सन्त्वोषधीऽः ॥१॥ मधुनक्त मुतो षसो मधुमत्पार्थिव ᳪ रजः । मधुद्यौ रस्तुनऽः पिता ॥२॥ मधुमान्नो व्वनस्पतिर्म्मधुमाँ २ ॥ऽअस्तुसूर्य्यः । माद्ध्वीर्गावो भवन्तु नऽः ॥३॥ (इति मन्त्रा ब्रह्मणेन पठनीयाः) ॥ ॐ मधु मधु मधु ॥ सुप्रोक्षितमस्तु । अस्तु सुप्रोक्षितम् । शिवा आपः सन्तु । सन्तु शिवा आपः । सौमनस्यमस्तु । अस्तु सौमनस्यं । अक्षतं चारिष्टं चास्तु । अस्तु अक्षतं चारिष्टं च । दीर्घमायुःश्रेयः पितरः ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः । पितामहेभ्यः स्वधायिभ्यः स्वधानम् ऽः प्रपिता महेभ्यः ऽः स्वधायिभ्यः + स्वधानमः । अक्षन्नपितरो ममिदन्त पितरो तीतृपन्त पितरऽः पितरऽः शुन्धध्वम् ॥८॥ इति मन्त्रेण स्वस्तीति ब्रूयात् कुशापवित्र त्यागः) अर्पणम्—अनेन मयाकृतेन । नित्यश्राद्ध कर्मणा मम पित्रादि स्वरूपीजनार्दन वासुदेव प्रीयताम् ॐ तरसत् ब्रह्मार्पणमस्तु ॥ इति नित्यश्राद्ध प्रयोगः ॥

## अथ तीर्थश्राद्ध विधिः ॥

तत्र क्रमः । आसनमिश्रदानं च पुनः प्रत्यवनेजनम् दक्षिणा-

---

अङ्कुल गिरुपासुदकादिकं ततेन्वपुष्पमप्यवतां पितृतीर्थेनदेयम् ॥ ४ ॥ पूर्वप्रयोगवत् ॥—अत्र स्थिरेउः गोपीचन्दन तिलाक्षतरवेत सुगन्धि पुष्पाणि सगन्धि पुष्पाणि तुलसीच भृङ्गराजादीनिपितृणां देयानि ॥

चान्न सङ्कल्प्य स्तीर्थ श्राद्धेष्वय विधि ॥ अर्घमावाहनञ्चैवद्विजाङ् गुष्ठनिवेशनम् । तृप्ति पश्न च विकिर तीर्थ श्राद्धे विवर्जयेत् । नावा हन नदिगवन्ध्यो न दोषो दृष्टि सम्भव सकारुण्यञ्च कर्त्तव्य तीर्थश्राद्ध विचक्षणै । तीर्थ श्राद्धे धूरि लोचन विश्वेदेवा पूर्वक अमुकतीर्थ प्राप्ति निमित्तक श्राद्ध करिष्ये । इति सङ्कल्प इति तीर्थस्नान विधि । अथ तीर्थोपवाससङ्कल्प । अद्येत्यादि अमुकशर्माह सकलपापक्षयार्थं अमुक तीर्थे चैत्रोपवास व्रतमह करिष्ये । अद्यस्थित्वा निराहार सर्वभोग विवर्जित मो मोक्षे पुण्डरीकाक्ष शरण मे भवाच्युत इति पठेत् । अथ श्राद्ध । य ब्रह्म वेदान्तविदो वदन्ति परम प्रधान पुरुपस्तथान्ये विश्वो द्गते कारणमीश्वरन्त्या तस्मै नमो विघ्नविनाशनाय ॥ शुक्लाम्बरधर विष्णु शशिवर्ण चतुर्भुजम् प्रसन्न वदन ध्याये त्सर्वविघ्नोपशान्तये ॥ इति नमस्कृत्य दक्षिण भागे भूमो चन्दनेन शखचक्रे लिखित्वा तत्रासनार्थं कुशत्रय धृत्वा तत्रा सनार्थं तत्र कर्मपात्रे संस्थाप्य पात्रे पवित्रम् । ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्व – प्रसवऽ उत्पुनाम्म्य छि दुद्रेणपवित्रेण सूर्य्यस्य रश्मिभि – तस्यते पवित्र पते पवि त्र पूतस्ययत्काम पुनेतच्छकेयम् ॥ इति मन्त्रेण कर्म पात्रे । पवित्रीं निधाय, स्वदक्षिण हस्ता नामिकाया कुश पवित्रीमवधारयेत् ॥ शन्नोदेवीति जलम् । ॐ शन्नोदेवीर भीष्टयो आपो भवन्तु पीतये शंय्यौ रभि श्रवन्तुन ॥ इति जलम् । इति मन्त्रत त् । तिलोपी सोम ऽत्यत्यो गोसवो देवनिर्मित प्रत्नभद्भि पृक्तः स्वधया पितृल्लोकान्प्रीणाहिन स्वाहा । इति तिलान्क्षिप्त्वा । यावो सिति यवान् ॥ ॐ यवोसि यवयास्मद्द्वेषो यवया रातीर्दिवत्वान्तरिक्षा यत्वा पृथिव्यैत्वा शुन्धता ल्लोका पृत्रिषदना मिनिषदनमसि । इति यवान् क्षिपेत् ॥ तत्र वरुणानाहन कुर्य्यात् ॥ ॐ आवाहयाम्यहं देवीं गात्वा त्रैलोक्यमावरम् । यस्यास्मरणमात्रेण सर्वपापप्रणाशनम् ॥ ॐ भू र्भुव स्व वरुणेत्विता इहागन्छ इहातिष्ट सुप्रतिष्ठितो वरदो भव । गन्धाक्षत श्वेतपुष्पाक्षतादि तूर्ष्णी निक्षिप्य । कर्मपात्र सु सम्पन्नमस्तु । अस्तु सुसम्पन्नम् । तेन नलेनात्मान सर्वाश्राद्धसामग्रीं सम्प्रोक्षयेत् । तद्यथा । अपवित्र० । प्राणानायम्य । ॐ पुण्डरीकाक्षाय नम । ३ ॥ अपसव्येन नीवीबन्धनम् । सोमस्य निविरसि विष्णो शर्म्मासि शर्म्म यजमानस्येन्द्रस्य योनिरसि शुपस्या कृषीष्कृधी इति निविबन्धनम् ॥ वामस्कन्धामारोपयेत् । तत सव्येन । ॐ देवताभ्यपितृभ्य महायोगेभ्यएवच नम स्वाहाये स्वधाये नित्यमेव नमो नम । इति त्रिर्जपेत् । अपसव्येन । ॐ श्राद्धकाले गया ध्यात्वा ध्यात्वा देवं गदाधरम् । मनसाच पितृन्

ध्यात्वा तीर्थश्राद्धं समारभेत् ॥ इति स्मृत्वा । सव्येन । प्रतिज्ञा संकल्पः ॥ अद्येत्यादि देशकालौ सङ्कीर्त्य अमुकगोत्राणां अस्मत्पितृपितामह प्रपितामहानां अमुकाऽमुक शर्म्मणां सपत्नीकानां वसुरुद्रादित्य स्वरूपाणां तथाऽस्मन्मातामह प्रमाता मह वृद्ध प्रमाता महानां अमुकाऽमुकशर्म्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां अक्षय तृप्त्यर्थं पार्वण श्राद्ध विधानेन धूरिलोचन संज्ञक विश्वेदेवा पूर्वकं अमुक तीर्थ प्राप्ति निमित्तकं सपिण्डकमामान्नतीर्थं श्राद्धं करिष्ये । कुरु चेति प्रत्युक्तिः । सव्यम् । ततः विश्वेदेवा आसनदानं । अद्येत्यादि अमुक गोत्रोऽस्मत्पित्रादित्रय श्राद्ध सम्बधिनां तथा स्मन्मातादित्रय श्राद्ध-सम्बन्धिना धूरिलोचन संज्ञकानां विश्वेषां देवानां इदमासनमस्तु । ॐ भूर्भुवः स्वः इदमासनमास्यतामास्ये । अपसव्यं कृत्वा । अमुक गोत्राणा-मस्मत्पितृपितामह प्रपितामहानाममुकामुकशर्म्मणां वसुरुद्रादित्य स्वरूपाणां इदमासनमस्तु भूर्भुवः स्वः इदमासनमास्यताम्आस्ये इति आसनं दत्वा । अस्मन्मातृपितामही प्रपितामहीनां अमुकामुकी देवीनां वसुरुद्रादित्य स्वरूपाणां इदमासनमस्तु । भूर्भुवः स्वः इदमासनमास्यतामास्ये । इति आसनं दत्वा । अमुक गोत्राणां अस्मन्मातामह प्रमातामह वृद्धप्रमाता महानां अमुकामुकशर्म्मणां सपत्निकानां वसुरुद्रादित्य-स्वरूपाणां इदमासनमस्तु । ॐ भूर्भुवः स्वः इदमासनमस्तु । ॐ भुर्भुवः स्वः इदमासनमास्यतामास्ये । इति आसनं दत्त्वा । ततः सव्यंकृत्वा । विश्वेदेवा पूजनम् ॐ नमोस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षि-शिरो रुबा हवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटि युगधारिणे नमः । इति मन्त्रेण पाद्य गन्धाक्षतैश्च सम्पूज्य, अपसव्येन । पितृमा-तृणां सम्पूज्य ॐ पितृभ्य इत्यादीनां पितॄणां ओं नवो वः इत्यादीनां मातामहानां च पूजनं कुर्य्यात् । वेदीं कृत्वा । अपसव्यं कृत्वा । ॐ अपहताऽअसुरा रक्षा ७ सि वेदिषद् इति रेखात्रयं कृत्वा । प्रथम रेखा-मने अद्येत्यादिअमुक गोत्रः अस्मित्पिता अमुक शर्मन् वसु स्वरूपपिण्डा-सनेऽत्रनेनिक्ष्व ॥ अद्य अमुक गोत्रः अस्मत्पितामह अमुक शर्मन् रुद्र-स्वरूप पिण्डासनेऽवने निक्ष्व । अद्य, अमुक गोत्रः अस्मत्प्रपितामह अमुक शर्मन् आदित्यस्वरूप पिण्डासनेऽवने निक्ष्वः । द्वितीय रेखामने ॥ अद्य अमुक गोत्रः अस्मन्माता अमुकि देवि वसुस्वरूपे पिण्डासनेऽवने निक्ष्व । अद्य अमुक गोत्रः अस्मत्पितामही अमुकि देवि रुद्र स्वरूपे, पिण्डासनेऽवने निक्ष्व । अद्य अमुक गोत्रः अस्मत्प्रपितामह अमुक शर्मन आदित्यस्वरूप पिण्डासनेऽवने निक्ष्वः । द्वितीय रेखासने ॥ अद्य अमुक गोत्र अस्मन्माता अमुकि देवि वसुस्वरूपे पिण्डासनेऽवने निक्ष्व ।

अद्य अमुक गोत्रः अस्मत्पितामही अमुकि देवि रुद्र स्वरूपे पिण्डासने-ऽवने निक्ष्व । अद्य अमुक गोत्रे अस्मत्प्रपितामहि अमुकि देवि आदित्य स्वरूपे पिण्डासनेऽवने निक्ष्व । तृतीय रेखा सने । माता महादीनां अवनेजनानि दत्वा । सव्येन । भो ब्राह्मण युष्मदनुज्ञया पिण्डप्रदान मह करिष्ये । अपसव्यं कृत्वा । स मोदकं तिल गुड़ पिंड वायवान् पिण्डं गृहीत्वा । अद्येत्यादि अमुक गोत्रः अस्मत्पिता अमुक शर्मन् वसुस्वरूप अस्मिन् तीर्थ श्राद्धे एवं तिल गुड़ पिंडोऽमृतकल्पो मद्दत्तस्तेस्वधा । ॐ अमुक गोत्राय अस्मत्पित्रे अमुक शर्मणे वसु स्वरूपाय । इति प्रथम रेखा मूलेऽवनेजनो परिपिंड दद्यात् । अमुक गोत्रः अस्मत्पितामह अमुक शर्म्मन् रुद्रस्वरूप अस्मिन्तीर्थ श्राद्धे एवं तिलगुड़ पिण्डोऽमृत कल्पो मद्दत्तस्ते स्वधा । अमुकगोत्रः अस्मत् प्रपितामह अमुक शर्मन् आदित्य स्वरूपः अस्मिन्तीर्थश्राद्धे एवं तिल गुड़ पिंडोऽमृत कल्पो मद्दत्तस्ते स्वधा । इयं भूमिर्गयातुल्या इदंमुदकं गाङ्ग-द्वितिय रेखामूले-अमुक गोत्रोऽस्मत् माता अमुकी देवी वसुस्वरूपस्मिन् तीर्थश्राद्धे एष तिल गुड़ पिंडोऽमृतकल्पो मद्दत्तस्ते स्वधा०-इयं भूमिरिति-अमुक गोत्रो अस्मत् पितामही अमुकी देवीरुद्रस्वरूपं स्मिन् तीर्थश्राद्धे एष तिलगुड़ पिण्डोऽमृतकल्पो मद्धस्ते ते स्वधा । इयं भूमिरिति । अमुक गोत्रोऽस्मत् प्रपितामही अमुकी देवी आदित्य स्वरूपा अस्मिनतीर्थश्राद्धे एष तिल गुड़ पिंडोऽमृतकल्पो मद्धस्तेते स्वधा । इयं भूमि रिति० ॥ त्रितयि ॥ रेखासने मूले-अमुक गोत्राय अस्मिन् मातामह अमुक शर्म्मन् सपत्निक वसु-स्वरूप अस्मिन् तीर्थश्राद्धे एष तिल गुड़ पिन्डोऽमृतकल्पो मद्दत्तस्ते स्वधा । इयं भूमिरिति अमुक गोत्राय अस्मत्मातामहाय अमुक शर्म्मणे रुद्रस्वरूपाय सपत्निकाय एष तिलगुड़ पिंडोऽमृतकल्पो मद्धस्तेपे स्वधा । इयं भूमि रिति० ॥ अमुक गोत्र अस्मत् वृद्धप्रमातामह अमुक शर्म्मन् आदित्य स्वरूप सपत्निकाय एष तिलगुड़ पिंडोऽमृतकल्पो मद्धस्तेते स्वधा-इयं भूमिरिति० ॥ ओं लेपभागिन भय भागोस्तु इति लेपभागन्य प्रतिपक्तिलेप भागन्य चदद्यात् । सव्येनाचम्य पुण्डरीकाक्षं स्मरन् ततः अपसव्येन । प्रत्यवनेजनम् । अमुक गोत्रः अस्मत् पिताअमुक शर्म्मन् वसुस्वरूप अस्मिन् तीर्थ श्राद्धे पिंडे प्रत्यवने निक्ष्व ॥ अमुक गोत्रः अस्मत् पितामह अमुकशर्म्मनरुद्र स्वरूप अस्मिन् तीर्थ श्राद्धे पिंडे प्रत्यवने निक्ष्व । अमुकगोत्रः अस्मत् प्रपितामह अमुक शर्म्मन् आदित्य स्वरूप अस्मिन् तीर्थश्राद्धेपिण्डे प्रत्यवने निक्ष्व । अमुक गोत्रः अस्मत् माता अमुकी देवी वसुस्वरूपे अस्मिन् तीर्थश्राद्धेपिंडे प्रत्यवने निक्ष्व । अमुक गोत्रः अस्मत् प्रपिता मही अमुकी देवी रुद्रस्वरूपा अस्मिन्तीर्थ श्राद्धे

पिंडे प्रत्यवने निद्व। अमुक गोत्रः अस्मन् मातामह अमुक शर्म्मन् सपत्निक वसु स्वरूप अस्मिन् तीर्थश्राद्धे पिंडे प्रत्यवने, निद्व॥ अमुक गोत्रः अस्मन् प्रपितामहीअमुकी देवी आदित्य स्वरूपे अस्मिन्तीर्थ श्राद्धे पिंडे प्रत्यवने निद्व। अमुक गोत्रः अस्मत् प्रमाता मह अमुक शर्म्मन रुद्रस्वरूप सपत्निक अस्मिन् तीर्थश्राद्धे पिंडे प्रत्यवने निद्व। अमुक गोत्रः अस्मत् वृद्ध प्रमातामह अमुक शर्म्मन् सपत्निक आदित्यस्वरूपे अस्मिन् तीर्थश्राद्धे पिंडे प्रत्यवने निद्व। गन्धाक्षत पुष्प धूप दीप वस्त्रादिभि पिंडं सम्पूजयेत्। ॐ पितृपितामह प्रपितामहीभ्यो नमः। ॐ मातृ पितामही प्रपिता महीभ्यो नमः। ॐ मातामह प्रमातामह वृद्धप्रमातामहेभ्यः सपत्निकेभ्यो नमः। निर्विसृज्य। सव्यं कृत्वा दक्षिणां दानं देव द्रव्यं सम्पादाय सम्पूज्यः॥ ॐ अद्येत्यादि अमुक गोत्रः पित्रादित्रय तथा मातादित्रय तथा अमुक गोत्र मातामहादित्रय श्राद्ध सम्बन्धिनां धूरि लोचन संज्ञकानां विश्वेषांदेवानां प्रीतये कृतेत द्देश देविकं पूर्वकं तीर्थप्राप्तनिमित्तकं श्राद्धकर्म्मणां सांगतासिद्धये इमां सुवर्ण निष्कयं ब्राह्मणं दास्ये। ॐ तत्सत्र मम तथा अमुक गोत्राणां पितृपितामह प्रपिता महानां अमुकामुक शर्म्माणां तथा मातृ पितामही प्रपितामहीनां तथा अमुक गोत्राणां अस्मत्माता मह प्रमातामह वृद्धप्रमातामहाय अमुकाऽमुक शर्म्मणां सपत्निकानां वसु रुद्रादित्य स्वरूपाणां तीर्थश्राद्धनिमित्तकं इदं रजत निष्कयं ब्राह्मणान्दास्ये॥ तत्सत्र मम॥ विश्वेदेवाग्रे अन्नं संस्थाप्य। ॐ अद्येत्यादि अमुक गोत्रः पित्रा दित्रय तथा मातामहादित्रय श्राद्धसम्बन्धिभ्यो धूरिलोचन, विश्वेभ्यो देवेभ्यो इदमान्नं सोदकं सोपस्करं निषिद्ध वर्जअमृत स्वरूपं ब्राह्मणस्य तृप्तिपर्य्यन्तं यथा विभाग वः स्वधा॥ यथा सुखेन भुङ्ध्वं भुङ्महि। अपसव्यम्। ॐ येचेह पितरो येच नेहयांश्च विद्मयां २ वचन प्रविद्मत्वंवेत्थ यतिते जात वेदः स्वधामियँज्ञ ६ सकृतञ्जुपस्व इति पठित्वा। मधु ३। अद्येह अमुक गोत्रेभ्यः अस्मत्पितृ पितामह प्रपितामहेभ्यः अमुकामुक शर्म्मभ्यः सपत्निकेभ्योः वसु रुद्रादित्य स्वरूपेभ्यः तीर्थश्राद्धे इदमामान्नं सोदकं सोपरकरं निषिद्ध वर्ज्जं अमृत स्वरूपंब्राह्मणस्य तृप्ति पर्य्याप्तं यथा विभागं वः स्वधा। तथा अमुक गोत्रेभ्यो मातामह प्रमातामह वृद्धप्रमातामहेभ्योः अमुकाऽमुक शर्म्मभ्यः सपत्निकेभ्यो वसुरुद्रादित्य स्वरुपेभ्यः इदं मामान्नं सोदकंसोपरकरं निषिद्धवर्ज्जं अमृत स्वरूपं ब्राह्मणस्य तृप्ति पर्य्याप्तं यथा विभागं वः स्वधा। सव्येन। पिनृ गायत्रीं जपेत् — देव वाम्य-इति त्रिवारं जपेत्। अपसव्य अक्षयोदक दानं॥ अद्येह अमुक गोत्राऽस्मत्पित्रादित्रय श्राद्धसम्बन्धिनां तथा अमुक गोत्रा स्मन्मातामहादित्रय

श्राद्ध सम्बन्धिना श्रीरिलोचनसञ्ज काना विश्वेषां देवाना तीर्थप्राप्ति निमित्तक श्राद्धे इदमन्नोदकादियद्दत्त तदक्षय्यमस्तु ॥ अस्त्वक्षयम् । एव पितामह प्रपितामहयो । अथामुक गोत्रस्यास्मन्मातामहस्य अमुक शर्म्मण सपत्निकस्य वसुस्वरूपस्य अस्मिन् तीर्थश्राद्धे इदमन्नोदकादि यद्दत्तं तद् क्षय्यमस्तु । अस्त्वक्षय्यम् । एव प्रमातामहयोरपि । सव्येन । अघोरा पितर सन्तु सन्तु गोत्रन्नो वर्द्धन्ता २ सन्ततिर्वर्द्धतां वेदा वर्द्धन्ता वर्द्धन्ता दातारो नोपि वर्द्धन्ता वर्द्धन्ता श्राद्धाचनो मास्यव्यगमत्-मागात् । अन्नञ्चनो वहुभवेत् । भवतु अतिथीञ्चलभेमहीं क्षमष्व या चिताञ्चन सन्तु सन्तु, मास्मयाचिष्मकञ्चन मायाचिया इत्याशिष प्रतिगृह्य । स्वविलक सत्यानुष्ठान सम्पन्ना सर्वदायज्ञवृद्धय पितृमातृ परारचैव सन्तवस्मत्कुलजगिरा इति पठित्वा । देवताभ्य इति त्रिर्जपा ॥ इद श्राद्ध विसर्जयेन् । अद्येह अमुक गोत्राणा इति उच्चार्य्य घूरि लोचन विश्वेदेवा पूर्वक इद श्राद्ध, तीर्थश्राद्ध विधिहीन श्रद्धाक्रिया रहित तत्सु कृतमस्तु यन्न्यूनातिरिक्त तत्सवविष्णो प्रसादात् ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु अस्तुपरिपूर्णम् ॥ उत्तिष्ठ ब्राह्मणस्पते इति पठित्वा विसृज्य आमा वाजस्येति प्रदक्षिणीकृत्य नीविंविसृज्य । आचम्य यस्य स्मृत्येति पठेत् अच्युताय नम इति तीर्थश्राद्ध विधि । तीर्थवासी ब्राह्मणो यजमान चन्दन पितृप्रसादाञ्च दद्यात् । पुन कर्ता अयोध्या मथुरामाया का० ॥ इति ॥

## अथ शय्यादानम् ।

दीप प्रज्वाल्याचम्य गणेशपूजा कृत्वा-दक्षिणोत्तरा शय्या स स्थाप्य—तत्रादौ सारदारुमयीं दृढा दन्तपत्रे हेम-पट्टैरलङ्कृता हसतूली प्रतिच्छन्ना शुभ्रगण्डोपधानिका प्रच्छादनपटी युता गन्धधूपादि वासिता पुष्प ताम्बूल कुङ्कुम कर्पूरागरुचन्दनदीपकोपानच्छत्रचामरव्यजनासन सप्तधान्यघृतपूर्ण कुम्भादिसहिता शय्यामासाद्य, तत्र हैम काञ्चन-पुरुष स्थापयेत् । तत पूर्वाभिमुख उदङ्मुखो वा उपविश्य । आचम्य प्राणानायम्य । अद्येत्यादिदेशकालौ सङ्कीर्त्याऽमुकोऽह यथोक्त फला वाप्तये । इष्टदेवताया प्रीतये शय्यादानं करिष्ये । (इति सकल्प ) । पुन शय्यादानप्रतिग्रहार्थं ब्राह्मणस्य पूजनपूर्वक वरण करिष्ये इति सकल्प्य भूमि देवाय जन्माखिन्नं विप्र पुरुषोत्तम प्रत्यक्ष यज्ञपुरुष अर्चाय प्रति गृह्यताम् । गन्धादिभि सम्पूज्य । एभिर्गन्धाक्षतम् पुष्पपूगीफल द्रव्यवासो लंकरणादिभि करिष्यमाण शय्यादान प्रतिग्रहार्थं त्वामह वृणे । वृतो

रमीति प्रत्युक्ति ततो लक्ष्मीनारायणप्रतिमा पूजन कुर्यात्। अद्येह अ-मुकोऽ हकरिष्यमाण शय्यादानकर्म्मणः पूर्वांगत्वेन सुवर्णप्रतिमाया लक्ष्मीनारायणयो पूजनमहं करिष्ये। प्रतिमा मग्न्युत्तारण पूवक-पञ्चामृतैः संस्नाप्य। एतन्त इति प्रतिष्ठा॥ ध्यानम्। दक्षिणाधः करे पद्मशस्त मूर्द्ध करे न्यसेत्। वामोर्द्धे च भवेद्चक्र लक्ष्मी पृष्टे कर परं। दक्षिणास्तु भुजे दिव्या पृष्टे देवस्य चक्रिणः वामेप्येक गतालक्ष्मी रत्नपात्रकराभवेत्। इति ध्यात्वा षोडशोपचारे सम्पूज्य॥ ततो लक्ष्मीनारायण प्रतिमा शय्यो परिस्थापयित्वा-शय्या सपूज्य कृताञ्जलि पुटो भूत्वा, शय्या प्रदक्षिणीकृत्य प्रमाण्यदेव्योनम। इति चतुर्दिशं मणम्य, सकल्प कुर्यात्। अद्येहाऽमुकोहं यथोक्तफलवाप्ति कनकोज्वल नानारत्न समकीर्णं नानाद्रव्योपसंयुक्त नानादिव्यापसनमेव्य विमान रोहण पूर्वक पष्टि सहस्रवर्ष पर्य्यन्त इन्द्रलोकवासत्प्राप्तिकाम, इष्ट देवताया प्रीतये, इमा शुभ गण्डोपधानिका प्रच्छादनपटयुतां गन्धपुष्पादिवासिता सुपूजित लक्ष्मीनारायण प्रतिमायुता। उच्छीर्षक स्थापित घृतकुम्भपूर्ण-ताम्रकलशोभिता, पार्श्वस्थापित ताम्बूल कुंकुम मृगमद कर्पूरागरुचन्दन जातापत्र जाताफल लवगपूगीफन नालिकर दापिकोपानह छत्रचामर दशादुरपरकरवर्ती पाकादि पात्रान्नादुरपरस्वर्ती सालकारा चतुष्कोणेषु यथा क्रम सस्थापित घृतकुंकुम गोधूम जलपूर्णपात्र युता, प्रजापति देवतया, अमुक गोत्राय। अमुक वेदाध्यायिने अमुक शर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। ॐ तत्सत्र मम दानवाक्य, यथान कृष्ण शयन शून्यं मागरजातया शय्या ममाप्य शून्यास्तु शय्या जन्मनि जन्मनि। ब्राह्मण शय्योपरि स्थित्वा, प्रतिगृह्णयात्। कृतस्य शय्या दानस्य सागता सिद्ध्यर्थ इद सुवर्णं अग्नि दैवत ब्राह्मणाय तुभ्यमहं सम्प्रददे। तत्स न्नमम। ततो भूयसी सकल्प। ब्राह्मणान्। भोजयित्वा। प्रणिपत्य विसर्जयेत्॥ इति शय्यादानविधि॥

## अथ भूमिदान विधिः॥

ताम्रपात्रे देयभूमि सम्बन्धि मृत्पिण्ड संस्थाप्य विधि ना अर्घं संस्थाप्य सकल्प। अद्येत्यादि-अमुकोऽहं यथोक्त फलावाप्तये भूमिदान करिष्ये। भूमिदानकर्मणः पूर्वांगत्वेन भूमे यथामिलितोपचारैः पूजन-महं करिष्ये। ध्यानम्॥ शुक्लवर्णं महाकाया, दिव्याभरणभूषिता। चतुर्भुजासौम्यवपुश्चन्द्रांशुस्त्व दशप्रभा। रत्नपात्र शस्यपात्रं पात्रमोषधिसंयुतम्। पद्मंरेख कर्त्तव्यं भूयो यावद वन्दन, स्निग्नामाना चतुर्णा-

प्राकार्यां तृप्तगतामहो, इतिध्यात्वा, भूम्यै नमः ॥ इति गन्धाक्षत पुष्पैः संपूज्य । दान संकल्प । अद्येहाऽमुकोहं सकलपाप क्षयपूर्वकं यथोक्त फलावाप्तये, इमां सुपजिवाभूमिं लयोत्पत्तियोग्या विष्णु देवत्या अमुक गोत्रायऽमुक शर्म्मणे ब्राह्मणाय दास्ये । तत्सन्न मम ॥ दान वाक्यम् । यथा भूमि प्रदानस्य, कलानार्हन्ति षोडशी, दानान्यन्यानि मे शान्ति र्भूमिदानाद्भवत्विह । कृतस्य भूमिदानस्य साङ्गता सिद्ध्यर्थं इद सुवर्ण अग्निदैवतं दान प्रतिष्ठात्वेन तुभ्यं संप्रददे । तथा इमां दक्षिणा भूमिं दान कर्मणः साद् गुण्यार्थं । ब्राह्मणेभ्यो त्रिविभज्य दास्ये, तथा माधव प्रीतये सिद्धान्नेन आमान्नेन वा यथा सख्याकान् ब्राह्मणान्भोजयिष्ये इति सकल्प अभिषेकतिलक मन्त्र पाठादिकं कुर्यात् । इति भूमिदानम् ॥

## एकोदिष्ट श्राद्ध विधिः ॥

अथैकोदिष्ट श्राद्धविधि । तत्र पास्कर सूत्रम् ॥ अथैकोदिष्ट मेकोर्घं एकं पवित्रमेक. पिण्डोना वाहन नाग्नौ करण नात्र विश्वेदेव । स्वदितमिति तृप्ति प्रश्न सुस्वदितमितिइतरे ब्रयुरुपतिष्ठतामित्यक्षय स्थाने-ऽभिरम्यतामिति विसर्गोभिरमतास्म इति तरे ॥ तत्र मध्याह्ने स्नात्वा, धौतवाससी परिधाय श्रद्धाङ्ग तर्पणं कृत्वा, श्राद्धदेशे गत्वा, दीप प्रज्वा-ल्याचम्य । पवित्रपाणिर्भूत्वा विष्णुं सम्पूज्य, हस्तौ सहतीकृत्वा । ॐ यम्त्रह्मवेदान्तविदो वदन्ति पर प्रधान पुरुष तथान्ये । विश्वोद्गते कारणमीश्वरम्वा तस्मै नमो विघ्नविनाशनाय । अभीप्सितार्थसिद्ध्यर्थं पूजते । त्रिदशैरपि । सर्वविघ्नच्छिदेतस्मै गणाधिपतये नम । इति पुष्प-ञ्जलिं दत्वा, ब्राह्मणं तैलाभ्यगं कारयित्वा सस्नाप्य । कुशोसि कुश-पुत्रोसि । ब्राह्मणा निर्मितपुरा । त्वय्यर्चिते सोचितोस्तु यस्याहं नाम कीर्तय । एतन्त इति पठित्वा । ॐ एतन्ते देव सवितर्य्यज्ञम्प्राहु वृहस्पतय । ब्रह्मणे तेन यज्ञमवतेनयज्ञ पठिन्तेन मामव मनाजूर्ति र्जुषता माज्यस्य, बृहस्पतिर्यज्ञमिमं तन्नोत्वरिष्ट यज्ञ ७ समिमन्दधातु विश्वेदेवासऽ इहमादयन्तोनोम् प्रतिष्ठ । ॐ भूर्भुव स्व पितृमान्, सम्बन्धि ब्रह्मन् सुप्रतिष्ठितो भव । ततोऽपसव्यमुविधाय । तिलान् गृहीत्वा, अद्य इत्त्यादि अमुक गोत्रस्या स्मत्पितु अमुक शर्म्मणो वसुस्वरूपस्य सावत्सरीकैको-दिष्टश्राद्ध श्राद्धे ब्रह्मन् भवान् मयानिमन्त्रित । निमन्त्रितोस्मीति इत्युर्वत्र । हस्ता सहतौ कृत्वा । अत्रोपन्ने शौच परै सततं ब्रह्मचारिभिः, भवितव्य भवद्भिश्च मया च श्राद्धकारिणा । सर्वायास विनिर्मुक्तैः कामक्रोध विवर्जितै भवितव्यं । मत इत्तोषितने श्राद्ध कर्मणि सत्यम ।

आगंतवः सुस्वागतम् । अपसव्येन, एतद्वः पाद्यमस्तु । ¹यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठ पुष्करे तत्फलं पाण्डव श्रेष्ठ विप्राणां पाद शौचने । इति पठित्वा । पादपूजायां अत्र सुगंधं अक्षताः पुष्पाणि तुलसीदलानि च समर्प्य । पादार्घदानम् सव्येन ॥ भूमौ शंखचक्रादिकं लिखित्वा आसनं आसने पात्रं, पात्रे पवित्रं, पवित्रेस्थौ वैष्णव्यो । शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शय्योरभिस्रवंतुनः । इति जलम् । तिलोसि सोम दैवत्यो गोसवो देव निर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितृल्लोकान् प्रीणाहिनः स्वाहा । इति तिलान् प्रक्षिप्य । गन्धपुष्पाक्षतादि प्रणवेन तूष्णीं वा यथाधिकारं निक्षिप्य । भो ब्राह्मणाः पादार्घपात्र सम्पत्तिरस्तु । अस्तु सम्पत्तिः । इति प्रत्युक्तिः । अपसव्येन । पितृब्राह्मण पादार्चनं विधाय त्रं नमः गन्धोस्तु स्वधा । अक्षताः पुष्पाणि तुलसीदलानि नमः । अद्येह अमुक गोत्रास्मत्पितुः अमुक शर्मन् वसुस्वरूप अद्यकर्तव्ये साम्वत्सरीकैकोद्दिष्टक्षयाह श्राद्धे ब्रह्मन्नेषते पादार्घोऽस्तु । पादार्घदानाचमनम् । सव्येन । स्वयमाचम्य अपसव्येन । ब्राह्मणमाचामयेत् । सव्येन । श्राद्धदेशोपवेशनं इत्युदङ्मुखं उपवेशयेन् । ततः कर्मपात्र पूरणम् । ॐ भूरसि भूमिरस्य दितिरसि विश्वधाया विश्वस्य भुवनस्यधर्त्री पृथिवीं यच्छ पृथिवीं दृ ꣳ ह पृथिवी म्माहि ꣳ सीः । भूमौ शंखचक्रादिकं लिखित्वा । आसनं आसने पात्रं पात्रे पवित्रम् । पवित्रस्थौ वैष्णव्यौ, शन्नोदेवीरिति जलम् । यवोसियव यास्म द्वेषो यवयारातिर्दिवस्त्वान्व रिक्षायत्वा । पृथिव्यैत्वाशुन्धन्तांल्लोकाः पितृसदनाः पितृसदनमसि । तिलोसीति तिलान् । गन्ध पुष्पाक्षतादितूष्णीं निक्षिप्य । कर्मपात्रं सुसंपन्नमस्तु, अस्तु सुसम्पन्नम् । तेन जलेनात्मानं संप्रोक्ष्य प्राणायामं विधाय । पुण्डरीकाक्षाय नमः ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतो पिवा । यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः । हस्तौ संहतौ कृत्वा । दैवताभ्यः पितृभ्यश्च महायोगिभ्यएव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः । इति त्रिः पठित्वा ३ ।

---

स्नान सङ्कल्पः । यवंकुशजलान्यादाय । ॐ विष्णु २ अद्येत्यादुच्चार्य्यामुकगोत्रोऽमुक राशिरमुक शर्म्माहं । अपसव्यं विधाय । तिल मोटकादित्वा अमुक गोत्रस्यास्मित्पितुरमुकशर्मणः वसुस्वरूपस्यामुक गोत्राया अस्मन्मातु, अमुकी देव्याः वसुस्वरूपायाः अक्षय तृप्तिकामनाय साम्वत्सरीकैकोद्दिष्ट क्षयाह श्राद्धाधिकार सिद्धयर्थं आत्मनः कायशुद्धयर्थं गयाह स्नानमहं करिष्ये, कुरुष्व । अमुक गोत्राणाः अस्मन्मातुः अमुकी देव्याः वसुस्वरूपाया यः शूरैरपि क्वचिदित्यपि पाठोलभ्यते ।

सप्तव्याधादशार्णेषु मृगा कालं जरे गिरौ । चक्रवाका मरद्वीपे हंसा सरसि मानसे । तेपिजाता कुरुक्षेत्रे ब्राह्मणा वेदपारगा । प्रस्थिता दीर्घ मध्वान यूय स्मिवसीन्थ । श्राद्धकाले गया ध्यात्वा ध्यात्वा देव गदाधर इति पठित्वा । अपसव्य विधाय मनसा च पितृन्मातृ ) ध्यात्वा । तत अमुकगोत्रस्य अस्मत्पितु अमुक शर्मणे वसुस्वरूपस्य सावत्सरिकैकोद्दिष्ट चयाहश्राद्ध समारभे इति पठेत् । मव्येन पचक्रोश गयाक्षेत्र क्रोशमेकं गयाशिर । यत्र यत्र स्मरिष्यामि पितॄणामक्षयम् । ततोऽपसव्येन । तिलमादक गृहीत्वा वामकक्षा । ॐ सोमस्य नीविरसि विष्णो शर्म्मासि शर्म्मयाजमानस्येन्द्रस्य योनिरसि सुसस्या कृषीव कृधी इति नीवीं बध्वा । ततोदिग्बन्धनम् । मोदकान् गृहीत्वा । अग्निष्वात्ता पितृगणा प्राचीरक्षतु मेदिशम् तथा बर्हिषद् पान्तु याम्यां येपित्तरथा । प्रतीची माज्यपा पातु उदीचीं मयि सोमपा । विदिशश्चगणा सर्व्वे रक्षन्तूर्ध्व मही पिवा रक्षोभूत पिशाचेभ्यस्तथै वासुर दोषत । सर्वतश्चा धिरस्तेषा यमोरक्षा करोतुमे । तिलारक्षतु इति । जान्दर्भारक्षन्तु राक्षसान् पङ्क्तिं वैश्रोत्रियो रक्षेदतिथि सर्वरक्षक । अथ ऊर्ध्वं चकाणेषु हविष्मतश्च सर्वदा । तत सव्येन साग्रान् कुशान् गृहीत्वा । कर्मं पात्रस्थ जलमभि-लोडयेत् । ॐ यद्देवादेव हेडज नेवासश्च कृमाव्वयम् । अग्निर्म्मात्तस्मा देन सो विश्वानमुचत्यंछहस यदि दिवा यदि नक्तमेना छ सिचकृमाव्व यम् । ०वायुर्म्मा तस्मादेनसो विश्वान मुचत्वंछहस याद जाग्र यदि-स्वप्नछेपनाछसिचकृव्वयम् । सूर्य्योमातस्मा देनसो विश्वान् मुंचतवछहस । गायत्र्याजा । ततो दर्भतिलयुत तज्जल गृहीत्वा, पियानमुतार्च्य । शूद्रदि-दृष्टिदूषित पाक पूतोऽस्तु । गायत्र्याज्ञ सप्तोदय । प्रतिज्ञा । ॐ विष्णु ३ नम परामात्मने श्री पुराण पुरुषोत्तमाय । अत्र । पृथिव्या जम्बूद्वीपे भरतखण्डे, आर्यावर्त्ते पुण्यक्षेत्रे । हिमवत्पर्वते वङ्गेशे । ब्रह्मणे द्वितीय परार्द्धे । श्रीश्वेतवाराहकल्पे वैव स्वतमन्वन्तरे, अष्टाविंशतितमे कलियुगे कृतत्रेता द्वापराते कलियुगस्य प्रथमचरणे पञ्चाब्दाना मध्य, अमुकनाम सवत्सरे, अमुकायने, अमुकर्तौ, अमुकमासे, अमुक पक्षे तिथौ अमुक गोत्रोत्पन्न, अमुक राशि, अमुक शर्म्माह, अपसव्य । अमुकगोत्रस्या ऽस्मत्पितु अमुक शमणो वसुस्वरूपस्य अक्षय तृप्ति कामनया अर्घ्यपिण्ड सहित, पक्विद्वतयाह श्राद्धविधिना पक्वान्नेन सावत्सरीकैकोद्दिष्ट चयाह श्राद्ध करिष्ये । ॐ कुरुष्व । इति प्रत्युक्ति । तत आसन । तिलमोदक गृहीत्वा । अद्ये अमुक गोत्राम्याऽस्मत्पितु अमुक शर्म्मणो वसुस्वरूपस्य – अस्मत सावत्सरीकैकोद्दिष्ट चयाह श्राद्धे इदमासनमस्तु । सव्यन । भूर्भुव स्व इद मासनमास्यता मास्ये । ततो दरतार्घे संपादनम् ।

भूमौ शंख चक्रादिकं लिखित्वा आसनं आसने, पात्रं पात्रे, पवित्रम् पवित्रेस्थो वैष्णव्यौ० शन्नो देवी रिति जलम्। तिलोसीति तिलान् गन्ध पुष्पाक्षतादि तूष्णीं निक्षिपेत्। भो ब्रह्मन् पित्रर्घपात्रं सम्पन्नमस्तु अस्तु सपन्नम्। हस्तार्घं। सव्येन। पवित्रं गृहीत्वा। विप्रहस्ते समर्प्य, सपवित्रेषु हस्तेषु ॐ यादिव्या आपः पयसा संबभूवुर्या ऽ अन्तरिक्षा ऽ उतपार्थवोर्या: हिरण्यवर्णा यज्ञियास्तानऽ आप. शिवाः श ᳪ स्यो नाः सुहवा भवन्तु। अद्येह, अमुक गोत्रः अस्मत्पिता अमुक शर्म्मन्। वसुस्वरूप, अस्मिन् साम्वत्सरीकैकोद्दिष्ट क्षयाह श्राद्धे, एषतेहस्तार्घोऽस्ति। पुनः प्रत्यर्घचं। अर्घोदकं श्रियं दद्यात्पुत्र पौत्रादि वर्द्धनम्। यस्मातस्माच्छिवंमेस्यादिह लोके परत्र च। इति मूर्द्धिन अभिषिंचय। अपसव्येन, पितृ वामभागे। कुशानास्तीर्य्य। तदुपरि सपवित्रम् अर्घपात्रम्। पितृभ्यः स्थानमसीतिन्युवजं कृत्वा तदुपरिस्वधा वांचनीयान् स पवित्रान् त्रीन्-कुशान् दक्षिणाग्रान् संस्थाप्य। आचारात् शुन्धन्तां लोकाः पितृषदना पितृषदन मसीति संप्रोक्ष्य। पितृभ्यः स्वधायिभ्य इति पूजनम्। ततोऽगुष्ठं पवित्रे त्यक्त्वा। पितृब्राह्मणार्चनंविधावत्रनमः ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः, प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्न पितरो मीमदन्त पितरो तीतृपन्त पितरः पितरः शुंधध्वम्। गन्धोऽस्तु स्वधा। अक्षताः पुष्पाणि तुलसीदलानि। धूप दीप वस्त्र भूषण ताम्बूलादि दत्वा पुनः पवित्रे करे कृत्वा। अद्येह अमुक गोत्रः। अस्मित्पितः। अमुकशर्म्मन्। वसुस्वरूप अस्मिन्साम्वत्सरीकैकोद्दिष्ट क्षयाह श्राद्ध विप्रार्चन विधाविमानि गन्धाक्षत, पुष्प, तुलसीदल दीप, वासो भूषण ताम्बूलादीनि मद्दत्तानि ते स्वधा। विप्रार्चन विधेः सर्वपरिपूर्णमस्तु। अस्तु परिपूर्णम्। गन्धादि दानाचमनम्। सव्येन। स्वयमाचम्य। अपसव्येन। ब्राह्मणमाचामयेत्। सव्येन। अच्युत स्मरणम्। ततो विष्णवे नैवेद्यं परिवेश्य समर्पयेत्। नाभ्या ऽ आसीदन्तरिक्ष ᳪ शीर्ष्णोद्यौः समवार्त्तत पद्भ्यां भू० ॥ इति नैवेद्यं। अपसव्यं विधाय। यथाचक्रायुधो विष्णुस्त्रैपरिरक्षति। एवं मण्डलमस्माकं सर्वभूतानिरक्षतु। इति भस्मना चतुष्कोण मण्डलं विधाय। तदुपरि भोजनपात्रं संस्थाप्य। सव्यंप्रणिधाय। अन्नं परिवेश्य। गायत्र्या अन्नं संप्रोक्ष्य। अपसव्येन। अन्वाचितवाम जानु:।

---

अमुक गोत्रायाः अस्मत्मातुः अमुकी देव्याः वसुस्वरूपायाः × अमुक गोत्रायाः अस्मत्मातुः अमुकी देव्याः वसुस्वरूपायाः × अमुक गोत्रे अस्मत्मातः अमुकी देवि वसुस्वरूपे ।+

स्वस्तिका कृतिना ऊर्द्ध मुखेन। दक्षिणो परिस्थितेन । वाम हस्तेन। मधु मधु इतिपात्रमालम्य जपति। पृथिवीत्ते पात्रं। द्यौरपिधानं ब्राह्मणस्य मुखे। अमृतेऽमृतं जुहोमि। विष्णो कव्य ७ रक्ष अपा दाक्षिण्येन तिलान्विकीर्य्य। अपहता ऽसुरारक्षा ७ सि व्वेदिपदः। अंगुष्टमहणम्। इदं विष्णुर्व्विचक्रमेत्रेधा निदधे पदम् समूढमस्य पा ७ सुरे। इदमन्नं इमाआपः इदमाज्यं इदं शाकादिकं सर्वं कव्यम्। अद्येह अमुक गोत्राय अस्मत्पित्रेऽमुक शर्म्मणे वसुस्वरूपाय साम्वत् सरीकैकोद्दिष्ट चयाह श्राद्धे। इदमन्नं इमा आपः। इदमाज्यं इदं शाकादिकं यत्तरिविष्टं। यत्परिवेक्ष्यमाणंब्राह्मणास्यातृप्ति पर्यन्तं। ब्राह्मणेभ्य आतृप्तिदास्यमान मन्न च अमृतस्वरूपं मद्दत्तं तेस्वधा। ॐ येचेह पितरो येच नेह यांश्च विद्मयां २८ उचनप्र० इति पोशानदत्वा। भो ब्राह्मणा यथा सुखेन भुञ्ज्वम्। भुंजमहे। ततः सव्येन प्रणव व्याहृति पूर्विका। गायत्रीं मक्षिति मधुमतीं ऋक् त्रयञ्च पठेत्। ॐ मधु ३ मधुवाताऽ ऋतायते। मधुक्षरन्ति सिन्धवः। माध्वी० ॥ ॐ मधु ३ यथा शक्त्या पितृ शुक्तं, आशुः शिशान० इत्यादि पुरुष सूक्तं सप्तदशर्चोरुचिस्तवादीनश्नतसु ब्राह्मणेषु पठेत्। ततस्तुलसी शर्करा गव्यदुग्धात्म मधुतिल गङ्गाजल- युतमन्नंतंशादि पात्रे कृत्वा। कर्मपात्रोदकं विष्णुनिवेदितं भक्तमपि- दत्त्वा। अपसव्येन पिण्डनिर्माय। विकिरदानं। नैऋत्यां दिशि कुशत्रय भूमौ क्षिप्त्वा आसनं। असंस्कृत प्रमीतानां त्यागिनां कुलभागिनां। उच्छिष्टभागधेयानां दर्भेपुविकिरासनम्। इत्यासनम् दत्वा। सजल तिलमोदक युतमन्नं विकिरेत्। अग्निदग्धाश्चयेजीवा येप्य दग्धाःकुलेमम भूमौदत्तेन तृप्यन्तु तृप्ता यान्तु परांगतिम्। येषान्नं पचते माता येषांन पचते पिता। उच्छिष्टं ये च कांक्षन्ति। तेभ्योऽन्नं दत्तमक्षयम्। उच्छिष्ट भागधेयेभ्योनमः। इति गन्धाक्षत पुष्पैः पूजनं। अंगुष्ट पवित्रे त्यक्त्वा। हस्तौ पादौ प्रक्षाल्य। सव्येनाचम्य। ततः श्राद्ध देशमागत्य। अन्येऽगुष्ट पवित्रे करयोः कृत्वा चमेत्। अपसव्येन। ब्राह्मणहस्ते सकृद्यो दत्त्वा। सव्येन। पूर्ववेदगायत्रीमधुमतीं मक्षिति च जपित्वा। भो ब्राह्मणा अस्मिन् पाकमध्ये यत्किंचिद्रोचते तत्प्रतिगृह्यताम्। सुस्वदितं। शेषान्नेन किं क्रियताम्। इष्टैः सहभुज्यतां। अपसव्येन। पिण्डदानार्थं वेदिका लेपनं गोमयेन अपहताः असुरारक्षा ७ सिव्वेदिपदः। इति रेखा करणं कुशेन। उलमुकमूधारणम्, ॐ येरूपाणि प्रतिमुञ्चमानाः। असुरा संत. स्वधया चरन्ति परापरो निपुरो ये भरंत्यग्निष्टां ल्लोकात्प्रणुदात्यस्मात्। अवनेजनम्। सतिलमोदक जलं गृहीत्वा। अद्येह अमुक गोत्रः। अस्मत्पितः अमुक शर्म्मन्। वसुस्वरूप। अस्मिन्साम्वत्सरीकैकोद्दिष्ट

क्षयाह श्राद्धे पिण्डासने अवनेनिच्व तत उपमूल लूनकुशास्तरणम्। सव्येन । पदस्मरणम् ईशान विष्णुकमलासन कार्तिकेय वह्नित्रयार्क रजनीश गणेश्वराणा, क्रौंचामरेज्य कलशौद्भवकाश्यपानां पादान्नमामि सतत पितृ मुक्तिहेतो । गङ्गागयाभ्यान स्मृत्य। गङ्गायै नम गयायै नम । गदाधराय नम । कुरुक्षेत्राय नम । श्रीतीर्थराजप्रयागाय नम । पितृस्वरूप ध्यात्वा । भो ब्राह्मण युस्मदनुज्ञया पिण्डप्रदानमह करिष्य। ॐ कुरुष्व तनोपसव्येन । तिलमोटकयुत। पिण्ड गृहीत्वा । वाम जान्वाच्य। अद्येह अमुक गोत्र अस्मत्पित । अमुक शर्म्मन् वसुस्वरूप। अ स्मत्साम्वत्सरीकैकोद्दिष्ट क्षयाह श्राद्धे । एषाऽन्न पिण्डोऽमृत स्वरूपो मद्दत्तस्ते स्तु। इय भूमिर्गयातुल्या । इदमुदक गाङ्ग गङ्गोदकेऽसति गङ्गाजल तुल्य वा अमुक गोत्राय 'गोत्रायै' अस्मत्पित्रे । ( अस्मिन्मात्रे ) अमुक शर्म्मणे ( अमुकीदेव्यै' वसुस्वरूपायवसुस्वरूपायै । आचारात् । लेप भागिनामय भागोऽस्तु। इति लेप भाग पिण्डपार्श्वे दद्यात्। पिण्डास्तरण कुशेप । करोन्मार्जन कृत्वा । हस्त प्रक्षालनम् । सव्येन । उदङ्मुखेनत्र मरुन्नियमन । तत परावृत्य । अपसव्येन । अमीमदन्त पितरो यथा भाग मा वृषायिषत । तत प्रत्यवने जनम् । अद्येह — अमुक गोत्र अस्मत्पित । अमुक शर्मन् वसुस्वरूप अस्मिन् साम्वत्सरीकैकोद्दिष्ट क्षयाह श्राद्धे पिण्डे प्रत्यवने निद्व । किंचिन्नीविविस्र सनम् । नमोव इति षडञ्जलिकरणम् । ॐ नमो व पित्तरोरसाय नमोव पितर पोषाय० ॥ त्रिगुणित सूत्रदानम् । एतद्व पितरो वास आधत्त । ऊर्ज्जकरणं कर्मपात्रोदकेन । ॐ ऊर्ज्जव्वहन्तीरमृत घृत पय कीलाल परिश्रुतम् स्वधास्थ तर्पयत मे पितॄन । सव्येन । दैवताभ्य इति त्रिर्जप भो ब्राह्मण युष्मदनुज्ञया पिण्डार्चनमह करिष्ये । ॐ कुरुष्वेति प्रत्युक्ति । तत अपसव्येन । पिण्डार्चा । पिण्डार्चनविधावत्रनम । गन्धोस्तु स्वधा । अक्षता पुष्पाणि तुलसी दलानि । पितृभ्य स्वधायिभ्य स्वधानम पितामहेभ्य स्वधायिभ्य स्वधानम प्रपिता० ॥ वस्त्र । धूप, दीपौ, नैवेद्य, ताम्बूल भूषण च समर्प्य । अद्येह अमुक गोत्र अस्मत्पित्त अमुक शर्मन्–वसुस्वरूप अस्मिन्साम्वत्सरीकैकोद्दिष्ट क्षयाह श्राद्धे । पिण्डार्चनविध विमान गन्धाक्षततुलसीदल वासो धूप, दीप, नैवेद्य, ताम्बूल भूषणानि

---

अमुकगोत्र अस्मन्मात अमुकीदेवावसुस्वरूप –अमुकगोत्रे अस्मन्मात अमुकादेवा वसुस्वरूप ।

अमुकगोत्र अस्मन्मात अमुकीदेवा वसुस्वरूपे –अमुकगोत्रे अस्मन्मात अमुकादेवीवसु स्वरूप ।

मंदत्तानि तेस्वधा । सव्येन । पिण्डार्चन विधेः सर्वपरिपूर्णमस्तु । अस्तु परिपूर्णम् । ततः पिण्डाम भूमौ सुप्रोक्षितमस्तु । अस्तु सुप्रोक्षितम् । शिवा आपः सन्तु २ । विप्रकरे जलदानं । अपांमध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् । ब्राह्मणस्य करे न्यस्ता शिवा आपो भवन्तु मे । सौमनस्यमस्तु । अस्तु सौमनस्यम् । लक्ष्मीर्वसति पुष्पेषु । लक्ष्मीर्वसति पुष्करे । लक्ष्मीर्वसति सदा गोष्ठे सौमनस्यं सदास्तुमे । अक्षता चारिष्टं चान्तु । अक्षतं चास्तु मे नित्यं शांति पुष्टिकरं परम् । यद्यच्छ्रेयस्करं लोके । तत्तदस्तु सदा मम । ततः कुशैः कर्मपात्रोदकेन । मूर्द्धन्याभिषेकं कुर्य्यात् । मम कुले दीर्घमायुरस्तु । अस्तु शान्ति रस्तु । अस्तु पुष्टिरस्तु अस्तु वृद्धिरस्तु । यच्छ्रेयस्तदस्तु । यत्पापं रोगः शोको दुःखः दारिद्र्यं तत्प्रतिहतमस्तु, अमृताभिषेकोऽस्तु । ततोऽक्षयोदक दानम् । अक्षय्यन्तु विप्रकरएव अपसव्येन । अद्येह + अमुक गोत्रस्य अस्मत्पितुः अमुक शर्म्मणो वसुस्वरूपस्य । *अस्मिन्सांम्वत्सरीकैकोदिष्ट क्षयाह श्राद्धे । इदमन्नोदकादिकं* यद्दत्तं तदक्षयमस्तु । अस्तु । अक्षय्यम् । सव्येन प्रार्थनाशीर्ग्रहणम् । अघोराः पितरः सन्तु २ । गोत्रन्नो वर्द्धतां । दातारोनोभि वर्द्धन्ताम् । वेदाः वर्द्धन्ताम् वर्द्धन्ताम् । सन्तदि वर्द्धन्ताम् । श्रद्धा च नोमा व्यगमत् मागाः । बहुदेयं चनोऽस्तु । अस्तु अन्नं चनो बहुभवेत् भवतु । अतिथिन्चलभेमहि लभध्वम् । याचितारश्चनः सन्तु मास्मयाचिष्मकंचन माया- चेथाः एता एव आशिषः सत्याः सन्तु २ । ततः स्वधावाचनम् । सव्येन । भो ब्राह्मणः युष्मदनुज्ञया स्वधां वाचयिष्ये वाच्यताम् । अपसव्येन । स्वधावाचनीयान् त्रीन् कुशान् पिण्डो परि संस्थाप्य । तिलमोटकंजलञ्च गृहीत्वा । अद्येह + अमुक गोत्रेभ्यो ऽ स्मत्पितृभ्यो ऽ अमुकशर्मभ्यो वसुस्वरूपेभ्योऽअस्मिन् साम्वत्सरीकैकोदिष्ट क्षयाह श्राद्धे । ब्रह्मन् मधु स्वधोच्यताम् अस्तुस्वधा । स्वधावाचनीये ष्वपोनिषं चति । ॐ ऊर्जंवहन्तिरमृतं घृतं पयः कीलालं परिश्रुतम् । स्वधास्य तर्पयत मे पितृन । दुग्धेनाप्यूर्जकरण माचारात् । केचिन्मते नीराजनम् । उत्तानं पात्रं कृत्वा ॥ पितरः स्वर्गलोके प्रस्थिता भवन्तु । सव्येन दक्षिणाम- कल्पः । अद्येह अमुक गोत्रस्य । अस्मत्पितुः अमुक शर्मणे वसु स्वरूपस्य । अक्षय तृप्ति प्राप्त्यर्थं कृतस्यास्य । साम्वत्सरीकैकोदिष्ट क्षयाह श्राद्धस्य । साङ्गता सिध्यर्थं न्यूनातिरिक्त परिपूरर्यर्थं इदं रजतं वा

---

अमुक गोत्रायाः ऽ अस्मन्मातुः अमुकी देव्याः वसुस्वरूपायाः ॥ अमक गोत्रयाः अस्मन्मातुः अमुकी देव्याः वसु स्वरूपायाः ॥ गोत्राभ्यः मन्मातृभ्यः अमुकीदेवीभ्यः वसुस्वरूपाभ्यः ।

रजतनिपत्रयिणीं इमां दक्षिणा श्राद्धभोक्तृ ब्राह्मणेभ्योऽन्येभ्योपि विभज्य दातुमुत्सृजे । ॐ तत्सन्न मम । सत्यानुष्ठान सम्पन्ना. सर्वदायज्ञ-वृद्धय पितृमातृपराश्चैव । सत्त्वसमन् इजतानारा , अक्षता., पान्तु स्वाशितु भवन्तो ब्रवन्तु । स्वस्तीतिविप्रोक्ति । विशेष पूजाः । पितृभ्य स्वधायिभ्य इति । आयु प्रजाधनं विद्या । स्वर्गं मोक्षंसुखानिच । प्रयच्छन्ति तथा राज्य न्नृणां प्रीता पितामहा । आयु. पुत्रान् यशः स्वर्गं । कीर्तिंपुष्टिबलं श्रियम् । पशून् सुखं धनं धान्य प्राप्नुयां पितृपूजनात् । ततोपसव्येन । पिण्डमुत्थाप्य । सव्येनाघ्राय अपसव्येन । पात्रान्तरेनिधाय । पिण्डस्थाने शंखचक्रादिक लिखित्वा । गन्धपुष्पपात्रतै पूजयेत् । पिण्डस्थाने अत्रन्नम गन्ध अक्षता पुष्पाणि । सव्येन तत्र दीपं सस्थाप्य । षट् ऋतून् पूजयेत् । ॐ वसन्ताय नम । ॐ ग्रीष्माय नमः । ॐ वर्षाभ्यो नम । ॐ शरदे नम. । ॐ हेमन्ताय नमः । ॐ शिशिराय नम. । ततो हस्तौ संहतौ कृत्वा । पातु पितृगणा. सर्वे यस्मात्स्थानादुपागता । सर्वे ते हृष्टमनस सर्वान् कामान्ददन्तुमे । ये लोका दानशीलाना । येलोका पुण्य कर्मणाम् । सम्पूर्णान्सर्वभोगैस्तु । तान् व्रजध्वसुपुष्कलान् । इहास्माकं शिवंशांतिरायुरारोग्यसम्पदः । वृद्धि सन्तानवर्गस्य जायतामुत्तरोत्तरा । दीपस्थाने दीप । अपसव्येन । पिण्ड-स्थाने पिण्डा । अमऋचरम भुद्द्य । य कश्चित्पितृरूपेण । तिष्ठते परमेश्वर । सोऽयंश्राद्ध प्रदानेन तृप्तिं यायतु शाश्वतीम् । गयाया पितृ-रूपेण स्वयमेको जनार्दन । यं दृष्ट्वा पुण्डरीकाक्ष मुच्यते च ऋण-त्रयात् । पञ्चक्रोश गयाक्षेत्रं । कोशमेकं गयाशिर । यत्रयत्रस्मरिष्यामि पितृणा दत्तमक्षयम्. शमीपत्रप्रमाणेन पिण्ड दद्याद्गयाशिरे, उद्धरेत्सप्त गोत्राणा कुलमेकोत्तर शतम् । पितु शत गुणंपुण्यं सहस्रं मातु रुच्यते । भगिन्या शतसाहस्रं, सोदर्य्ये दत्तमक्षयम् । सव्येन । अद्यदिने अपरमपि आमं पक्वहिरण्यं उदयास्तमय्यैर्न, यद्दत्तं यदारण्ये तत्गङ्गाद्वारे अमृतौ भूतले स्वधा । देवताभ्य पितृभ्यश्च, महायोगीभ्यएवच । नम स्वदायै । नित्य मेव नमो नम । त्रि पठित्वामन्त्र व्याधा दशार्णेषु । मृगा कालंजरेगिरौ चक्रवाका शरद्वीपे, हसा सरसिमानसे । तेपि जाता कुरुक्षेत्रे, ब्राह्मणा वेदपारगा । प्रस्थितादीर्घमध्वानं यूयं किंमवसीदथ । श्राद्धकाले गयां ध्यात्वा ध्यात्वादेवगदाधरम । मनसा चपितृध्यात्वा । मातरं वा ततो-पसव्येन । अमुकगोत्रस्य अस्मत्पितु अमुकशर्मणो । अमुकवस्वरूपस्य साम्वत्सरिकैकोद्दिष्टश्राद्ध श्राद्धं निमृते । सत्यम् । इदंश्राद्धंमया विधिहीनं-कालहीनं, वाक्यहीनं, श्रद्धाहीनं, दक्षिणाहीनं, भावनाहीनं यत्कृतं तत् सुसृतमस्तु । प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।

ब्राह्मण वचनात्सर्वं परिपूर्णमस्तु । अस्तु परिपूर्णम । अपसव्येन । कुशेन विप्रस्पर्शः । उत्तिष्ठेति ब्राह्मणमुत्थापयेत् । ॐ उत्तिष्ठब्राह्मणस्पते देवयं तत्वेमहे । उपयन्तुमरुतः स्वधानवऽइन्द्रप्ययशर्म वाचा । इति ब्राह्मण-मुत्थाप्य । स्थानान्तरे निधाय । अभिरम्यताम् । इतिविसर्जयेत् । अभि-रतारम । इति प्रत्युक्तिः । सव्येन । कर्मपात्रं गृहीत्वा । आमावाजस्ये त्यनुव्रज्य । प्रदक्षिणी करणम् । ॐ आमाव्वाजस्यप्रसवो जगम्या । देमेद्यावा पृथिवीविश्वरूपे । आमागन्ताम्पितरा मातरा चामासोमोऽ-मृतत्वेनयस्यात् इत्यनुव्रज्यप्रदक्षिणीकृत्वा नमस्कुर्य्यात् । कर्मपात्रं विप्रपा-दग्रेनिनीत्वा । अपसव्येन । कुशब्राह्मणस्यशिरवा मोचनंकृत्वा । नीवीं विसृज्य पाणिना दीपं निर्वाप्य सव्येनाचम्य । यस्यस्मृत्या च नामोक्त्या । तपोयज्ञ क्रियादिषु न्यूनं संम्पूर्णतां याति सद्योवन्दे तमच्युतम् । ॐ अच्युताय नमः ३ कायेनवाचा मनमेन्द्रियैर्वा बुद्ध्यात्मना वानु सृतिः स्वभावात् । करोमि यद्यत्सकलंपरस्मै नारायणेति समर्प्पयेत् । चतुर्भिश्-चतुर्भिश्च द्वाभ्यां पञ्चभिरेवच हूयतेच पुनर्द्वाभ्यां तस्मैयज्ञात्मनेनमः । अद्यमे सफलं जन्म-अद्यमे सफलं तपः । अद्यमे गोत्रजाः सर्वे यातावोऽ नुग्रहादिवम् । पत्रशाकादि दानेनक्लेशिता यूयमी दृशः ४ तत् क्लेशमिह संजातं विस्मृत्यक्षन्तुमर्हथ । सूक्तस्तोत्र जपं त्यक्त्वा । पिण्डाघ्राणञ्चदक्षि-णाम् । आह्वानंस्वागतंचार्घं विना च परिवेषणम् । विसर्जनं सौमनस्य । माशिषं प्रार्थनं तथा । पित्रामन्यन् प्रकर्त्तव्यं प्राचीना वीतिनासदा ॥ इति एकोदिष्टश्राद्धविधिः ।

## अथ पार्वणश्राद्धप्रयोगः ।

तत्रा पराह्णे स्नात्वा । मध्याह्न सङ्कल्पः । यवकुश जलान्यादाय । ॐ विष्णु ३ । नमः परमात्मने श्रीब्रह्मपुराण पुरुषोत्तमाय तत्सदिह पृथिव्यां जम्बूद्वीपे भरतखण्डे आर्य्यावर्त्ते पुण्यक्षेत्रे हिमवत्पर्वतैकदेशे ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेत वाराहनाम्निकल्पे कृतत्रेताद्वापरान्ते अष्टा-विंशति मे कलियुगे कलियुगस्य प्रथमचरणे वैवस्वतनाम मन्वन्तरेप-प्रभवादानामध्येऽमुक नामसंम्वत्सरे दक्षिणायने शरदृतौ ( भाद्रश्चेत् वर्षा ऋतौ ) आश्विनमासे कृष्णपक्षे यथानाम नक्षत्र योग करण मुहूर्त वारान्वितायामुक वारान्वितायांममुकपुण्यतिथौ । अमुकगोत्रोत्पन्नोऽमुक-राशिऽमुकशर्माऽहं । अपसव्यं कृत्वा तिलमोटकसहितं जलं गृहीत्वा । अमुक गोत्राणामस्मत्पितृपितामह प्रपितामहानाममुकामुक शर्मणां-सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामक्षयतृप्ति प्राप्तिकामनया पुरूरवो-

द्रवसंज्ञकविश्वेदेवपूर्वकं सकलपापक्षयार्थं पार्वणश्राद्ध विधिना ऽ मुकपार्वणश्राद्धाधिकार सिद्धयर्थमात्म शुद्धयर्थं ॥ मध्याह्नस्नानमहं करिष्ये ॥ ॐ कुरुष्वेतिप्रत्युक्तिः ॥ इति सङ्कल्प्य ॥ धौतवाससी परिधाय तर्पणं कृत्वा ॥ श्राद्ध देशेगत्वा । दीपं प्रज्वाल्याचम्य पवित्रपाणिर्भुत्वा । शुक्लां वरधर विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदन ध्याये त्सवविघ्नोपशान्तये । इति विष्णु सम्पूज्य हस्तौ संहतौकृत्वा । ॐ यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं स्तथान्ये । विश्वोद्गतेःकारण मीश्वरंवा तस्मै नमो विघ्नविनाशनाय । अभीप्सीतार्थसिद्धयर्थं पूज्यते + त्रिदशैरपि सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः । इति पुष्पाञ्जलिं दत्वा । ब्राह्मणान् तैलाभ्यङ्गपूर्वकंमण्डलाद्बहिः संस्नाप्य प्रतिष्टा । एतन्ते देवसवितर्य्यज्ञम्प्राहुर्बृहस्पतये ब्रह्मणेतेन यज्ञ मवतेनयज्ञपतिन्तेन मानव मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं यज्ञ छं समिमं दधातु । विश्वेदेवासऽइहमादयन्तामो ३ म्प्रतिष्ट । ॐभूर्भुवस्वः । वैश्वदैविक कुशब्राह्मन सुप्रतिष्ठितोभव । एवं पैतृक ब्राह्मणादीनामपि । ॐ एतन्त इति पठित्वा । ॐ भूर्भुवः । पित्रादित्रय श्राद्धसम्बन्धि कुशब्रह्मन् सुप्रतिष्ठतो भव । कुशोसि कुशपुत्रोसि ब्रह्मणा निर्मितः पुरा । त्वय्यर्चिते सोर्चितोस्तु यस्याहं नामकीर्तये । एव मातामह ब्राह्मणस्यापि प्रतिष्ठा । मातामह सम्बन्धि कुशब्रह्मन् सुप्रतिष्ठितोभव । कुशोसिकुशपुत्रोसीति पठित्वा । यवान् गृहीत्वा अद्येहेत्यादि । अमुकसम्वत्सरे । दक्षिणायने । शरदृतौ अश्विन मासे । महालयापरपक्षेकन्यांगतेसवितरि । ( भाद्रे सिंहस्थिते इतिपठेत् ) अमुकतिथौ । अमुकगोत्राऽस्मत्पित्रादित्रय श्राद्धसम्बन्धिनां । अमुकगोत्राऽस्मन्मातामहादित्रय श्राद्धसम्बन्धिनां । पुरूरवो मार्द्रवसंज्ञकानां । विश्वपान्देवानां । अद्यकर्त्तव्ये । अमुक पार्वणश्राद्धे । वैश्वदैविक क्षणे । कुशब्रह्मन् त्वं मया निमन्त्रितः निमन्त्रितोऽस्मीति प्रत्युक्ति । हस्तौ संहतौकृत्वा अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्य भवद्भिश्च मयाच श्राद्धकारिणा । सर्वायास विनिर्मुक्तैः कामक्रोध विवर्जितैः । भवितव्यं भवद्भिर्नोद्यतने श्राद्धकर्मणि आगतंवः सुस्वागतम् । एतद्वः पाद्यमस्तु । यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्टपुष्करे । तत्फलं पाण्डवश्रेष्ठ विप्राणाम्पादपूजने । ततोपसव्येन । तिलान् गृहीत्वा । अद्येह अमुक सम्वत्सरे दक्षिणायने शरदृतावाश्विने मासि । महालयापरपक्षे । कन्यांगते सवितरि । अमुकातिथौ । अमुक गोत्राणां । अस्मत्पितृ पितामहप्रपितामहानां । अमुकामुक शर्म्मणां । सपत्निकानां वसुरुद्रादित्य स्वरूपाणां । अद्य कर्त्तव्ये । अमुक पार्वणश्राद्धे, पित्रा-

दित्रय श्राद्धकृत्ये कुशानक्षन् त्व मया निमन्त्रित निमन्त्रितोऽस्मि । इति प्रत्युक्ति । बहुत्वेतु भो ब्राह्मण भवतो मया निमन्त्रिता निमन्त्रिता स्म । अक्रोधनैरिति पठित्वा । सव्येन । आगतव सुस्वागतम् । अपसव्येन । एतद्व पाद्यमस्तु । परफलमिति पठेत् । ततो मातामहाना । अपसव्यम् । अद्येहेत्यादि अमुक गोत्राणा । अस्म न्मातामह प्रमातामहवृद्धप्रमाता महाना । अमुकामुक शर्मणा सपत्निकाना । वसुरुद्रादित्य स्वरूपाणा । अद्यकर्त्तव्ये । अमुक पार्वणश्राद्धे । मातामहादित्रय श्राद्धकृत्ये । कुशाक्षन् त्वमया निमन्त्रित ॥ निमन्त्रितोऽस्मि । इति प्रयुक्ति ॥ अक्रोधनैरिति पठित्वा । स येन । आगंतव सुस्वागतम् । अपसव्येन । एतद्व पाद्यमस्तु । यत्फलमिति पठेत् । सव्येन पादार्घं सपाद्यगन्धपुष्पाक्षतादि तूष्णीन्निक्षिप्य । पादार्घपात्र गृहीत्वा । अद्येह अमुक सम्वत्सरे । अमुकायने । अमुकर्त्तौ । अमुकमास । अमुकपक्षे । अमुक तिथौ । अमुक गोत्राऽस्मत्पित्रा दित्रय श्रामन्तन्धिन । अमुकगोत्राऽस्मन्मतामहादित्रय श्राद्धसम्बन्धिन । पुरूरवो मार्द्रव संज्ञक विश्वेदेवा + अद्यकर्त्तव्ये अमुक पार्वणश्राद्धे । वैश्वदेविक ब्रह्मन्नेपत्त पादार्घोऽस्तु । तत पैतृककर्म । अपसव्येन । पादार्घं सपाद्य । हस्ते गृहीत्वा । अद्येह अमुक सम्वत्सरे दक्षिणायने । शरदृतौवाश्विने मासे । महालयापरपक्षे । कन्यागते सवितरि । अमुक तिथौ । अमुक गोत्रा अस्मत्पितृ पितामहप्रपिता मह । अमुकामुक शर्म्माण सपत्निका । वसुरुद्रादित्यस्वरुपा । अद्यकर्त्तव्ये । अमुक पार्वणश्राद्धे पित्रादित्रय श्राद्धसम्बन्धि कुशाक्षन्नेपते पादार्घोऽस्तु । अद्येह । अमुक मम्वत्सरे । दक्षिणायने । शरदृतौ वाश्विने मासे । महालया परपक्षे कन्यागते । सवितरि । अमुकतिथौ । अमुक गोत्रा । अस्मन्मातामह प्रमातामह वृद्धप्रमातामहा । अमुकामुक शर्म्माणा सपत्निका । वसुरुद्रा दित्य स्वरूपा । अद्यकर्त्तव्ये । अमुक पार्वणश्राद्धे । मातामहादित्रय श्राद्धसम्बन्धि कुशाक्षन्नेपते पादार्घोऽस्तु । पादार्घदानाचमनम् । सव्येन । स्वयमाचम्य । विश्वेदेवा नाचामयेत् । अपसव्येन । पितॄनाद्यण मातामह ब्राह्मणानाचामयेत् । सव्येन । श्राद्ध देशोपवेशनम् । ब्रह्मन्नुत्तिष्ट । अत्रोपविश्यतामिति । प्राङ्मुखं । वैश्वदेविक ब्राह्मणम् । अपसव्येन । उदङ्मुख । पित्रादि ब्राह्मणेनुपवेशयेत् सव्येन । तत अर्घपात्रपूरणम् । भूमिं स्पृशेत् । भूरसि भूमिरस्यदितिरस्य विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं द ꣳ ह पृथिवीं म्माहि ꣳ सी । भूमौ गन्धरक्तादिर्भं लिखित्वा । आसन आसने पात्रम् । पात्रे

---

+ क्वचित् पादार्घे स्नानमिच्छन्ति ।

पवित्रम् पवित्रेस्थोवैष्णव्यौ० ॥ शन्नोदेवीरितिजलम् । शन्नोदेवीरभिष्टयऽ आपो० । यवोसि यवयास्म द्वेषोयवया राती द्विवेत्वान्तरिक्षा यस्त्वापृथिव्यैस्त्वा शुन्धन्तांल्लोकाः पितृषद्नाः पितृषदनमसि । इति यवान्क्षिपेत् । तिलोसि सोम दैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिःपृक्तः स्वधया पितृल्लोकान्प्रीणाहिनः स्वाहा । गन्धपुष्पाक्षतादि तूष्णीं निक्षिप्य । कर्मपात्रं सुसम्पन्नमस्तु । अस्तु सुसम्पन्नम् । तेन जलेनात्मान सम्प्रोक्ष्य । श्राद्धसामग्रीश्च सम्प्रोक्ष्य । प्राणायामं विधाय । पुण्डरीकाक्षाय नमः ३ । ॐ अपवित्रः पवि० । हस्तौ संहृतौ कृत्वा । देवताभ्यः पितृभ्यश्च । महायोगीभ्य एवच । नमः स्वहायै स्वधायै नित्यमेव नमोनमः । इति त्रिः पठित्वा ÷ सप्तव्याधा दशार्णेषु मृगाः कालं जरे गिरौ चक्रवाकाः सरद्वीपेहंसाः सरसि मानसे तेपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रास्थिता दीर्घ मध्वानं यूयं किमवसीदथ । श्राद्धकाले गयांध्यात्वा ध्यात्वादेवंगदाधरम् । मनसा च पितृन्ध्यात्वा । ततोपसव्येन । अद्येहत्याद्युल्लिख्य । अमुक गोत्राणां । अस्मत्पितृपितामह प्रपितामहानां । अमुकामुक शर्माणां सपत्नीकानां वसुरुद्रा दित्यस्वरूपपाणां । तथाऽमुक गोत्राणां अस्मन्मातामह प्रमातामह वृद्धप्रमातामहानां । अमुकामुकशर्मणां सपत्निकानां वसुरुद्रादित्य स्वरूपाणां । अक्षयतृप्ति प्राप्त्यर्थं पुरूरवो मार्द्र व सञ्ज्ञक विश्वेदेव पूर्वकम् । अमुक पार्वणश्राद्धं समारभे । सव्येन । पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । अनन्त गर्भिणं साग्रं क्रोशं द्विदल मैवच, प्रादेशमात्र विज्ञेयं पवित्रं यत्रकुत्रचित् । सप्तव्याधा दशार्णेष्विति पठनेष्यऽपसव्यमस्ति कुत्र चित् । यत्रयत्र स्मरिष्यामि । पितृ्णां दत्तमक्षयम् । ततोऽपसव्येन । तिलमोटकं गृहीत्वा । वाम कट्याम् । आरोपयेत् ॐ सोमस्य नीविरसिविष्णोः शर्म्मासि शर्म्म यजमानस्येन्द्रियस्य योनिरसि सुसस्याः कृषीस्कृधि । इति नीवीं बध्वा ततो दिग्बंधनम् । मोटकानगृहीत्वा । अग्निष्वात्ताः पितृगणाः प्राचींरक्षन्तु मे दिशम् । तथा वर्हिषदः पान्तु यामीये पितरस्तथा । प्रतीची माज्यपापान्तु । ऊदीचीमपि सोमपाः । विदिशश्च गणा. सर्वैरक्षन्तूर्द्ध मधोपिवा । रक्षोभूतपिशाचेभ्यस्तथैवा सुरदोषतः, सर्वतश्चाधिपस्तेषां, यमोरक्षां करोतुमे । तिलारक्षन्तु दितिजान्दर्भारक्षन्तु राक्षसान । पंक्तिं वैश्रोत्रियोरक्षेदतिथिः सर्वरक्षकः । अत ऊर्द्ध चं कोणेषु हविष्मं तरच सर्वदा । ततः सव्येन । सामान्कुरान् गृहीत्वा । कर्मपात्रस्यं जलमभि लोडयेत् । ॐ यद्देवादेवहेडनं देवामश्चकमाव्वयम् । अग्निर्म्मा तस्मादेन सो व्विश्वान्मुञ्चत्व ॐ हस. । यद्दिवायदि मैना ॐ सिचकृमाव्वयम् । व्वयुर्मा तस्मादेनसो व्विश्वान्मु०चत्व ॐ हस. । यदिजाग्रदयदिस्व प्नऽएना ॐ सिचकृमा व्वयम् । सूर्य्यो

मातस्मा देनसो विश्वास्मुक्त्वा ७ हसः। गायत्र्याच। ततो दर्भतिल युतम्। तज्जलं द्विबन्धे। सव्यमस्ति। एकेवाम्पुस्तके।) गृहीत्वा। पाकविधानमुत्तार्घ्यं। शूद्रादि बृष्टिदूषिन् पाकपूतोस्तु श्राद्धयोग्यो भवतु। इति गायत्र्यान्न सम्प्रोक्ष्य। अथ प्रतिज्ञा। यवकुश जलान्यादाय। ॐ विष्णुः ३ नमः परमात्मने श्रीपुराण पुरुषोत्तमाय। अत्र पृथिव्यां जम्बूद्वीपे भरतखण्डे। आर्य्यावर्तैकदेशान्तर्गतानां मध्ये। अमुकनामसंम्वत्सरे। दक्षिणायने शरदृतौ (भाद्रत्वेन् वर्षा ऋतौ।) आश्विन मासे। महालया परपक्षे कन्यागते सवितरि। अमुकतिथौ। अमुक गोत्रोत्पन्नः। अमुक राशिः। अमुक शर्म्माहं। अपसव्यम्। तिलमोटकव्वगृहीत्वा। अमुक-गोत्राणां। अस्मत्पितुपितामह प्रपितामहानां। अमुकामुक शर्म्मणां सपत्नीकानां वसुरुद्रादित्य स्वरूपाणां। तथामुकगोत्राणां। अस्मन्मातामह प्रमातामह वृद्धप्रमात महानां अमुकामुक शर्म्मणां सपत्निकानां। वसु-रुद्रादित्य स्वरूपाणां। अक्षय तृप्तिकामनया पुरुरवो मार्द्रव सञ्ज्ञक विश्वेदेव पूर्वकं अर्घपिण्डसहित पक्वान्नेन पावणश्राद्ध विधिनामुक-पार्वणश्राद्धं करिष्ये। ॐ कुरुष्व इति प्रत्युक्तिः। ततः सव्येनासनम्। ऋजु कुशद्वय यवानादाय। अद्येहेत्येयादि। अमुक नामसम्वत्सरे। दक्षिणायने शरदृतौ आश्विन्य मासे महालयापरपक्षे। कन्यांगते सवितरि। अमुकतिथौ। अमुक गोत्राऽस्मत्पित्रादित्रय श्राद्धसम्बन्धिना। तथामुक गोत्रासमन्मातामहादित्रय श्राद्धसम्बन्धिनां पुरुरवो मार्द्रवसंज्ञ-कानां। विश्वेषां देवानां इदमासनमस्तु। ॐ भूर्भुवः स्वः इदमासनमा-प्यताम् आसामहे। तवोपसव्येन तिलमो टकं गृहीत्वा। पैतृकं कर्म। अद्यहेत्यादि। अमुक नाम सम्वत्सरे। दक्षिणायने। शरद ऋतौ आश्विन मासे। महा लयापरपक्षे। कन्यांगते सवितरि अमुक तिथौ। अमुक गोत्राणां। अस्मत्पितृपितामह प्रपितामहानां। अमुकामुकशर्मणां। सपत्निकानां वसुरुद्रादित्यस्वरूपाणां। अमुकपार्वणश्राद्धे पित्रादित्रय श्राद्धसम्बन्धिकुशासनम्। इदमासनमस्तु। सव्येन। भूर्भुवःस्वः इदमासन मास्यताम्। आसे। अपसव्यम्। पुनस्तिलमोटकम् गृहीत्वा। अद्येह। अमुक गोत्राणां अस्मन्मातामह प्रमातामह वृद्धप्रमातामहानां। अमुकामुक शर्म्माणां। सपत्निकानां वसुरुद्रादित्यस्वरूपाणां। अमुक पार्वण-श्राद्धे। मातामहादित्रय श्राद्धसम्बन्धि कुशासनम्। इदमासनमस्तु। सव्येन भूर्भुवः स्वः इदमासन मास्यताम्। आसे ततः आवाहनम्। सव्य विधाय। कुशद्वययवान गृहीत्वा। अद्येह। अमुक गोत्रा स्मत्पित्रादित्रय श्राद्धसम्बन्धिनः तथामुक गोत्रास्मन्मातामहादित्रय श्राद्धसम्बन्धिनः पुरूरवो मार्द्रव सञ्ज्ञकान्विश्वान्देवानहमावाहयिष्ये।

ॐ आवाहय इति प्रत्युक्तिः । ॐ विश्वदेवास ऽ आगत शृणुताम् ऽ इम ᳪ हवम् । एदंव्वर्हिर्निषीदत । इत्यावाह्य प्रदक्षिणं यवान विकीर्य । ॐ व्विश्वेदेवाः शृणुतेम ᳪ हवम्मे येऽअन्तरिक्षे य ऽ उपविष्ठ । येऽअग्निजिह्वाऽ उतवा यजत्राऽ आसद्यास्मिन्वर्हिषि मादयध्वम् । आगच्छन्तु महाभागा विश्वेदेवामहाबलाः । ये यत्र विहिता श्राद्धे सावधाना भवन्तुते ॐ आगच्छत । ततोपसव्येन पितॄनावाहयेत् । तिलमोटकं गृहीत्वा । अद्येह । शरद् ऋतौ । अश्विनमासे महालयापरपक्षे कन्यां गते सवितरि । अमुकतिथौ । अमुक गोत्रान् । अस्मत्पितृ पितामह प्रपितामहानां अमुका अमुकशर्म्मणः सपत्निका नावसुरुद्रादित्य स्वरूपान् पितॄन् । आवाहयिष्ये । ॐ आवाहय । ॐ उशन्तस्त्वा निधि मह्यु शंतः समिधीमहि । उशन्तु शतऽआवह पितॄनूहविषेऽअत्तवे । इत्यावाह्याऽ प्रदक्षिण तिलान् विकीर्य-आयन्तुनः पितरः सोम्या सोग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोफिब्रुन्तुतेव चन्त्वस्मान् । ये मया निमन्त्रिताः पूर्वं पितरः पितृपक्षगाः । आश्रित्य पितृ कार्येषु सावधाना भवन्तुते । आगच्छन्तु । इति जपेत् । मातामहानावाहयेत् । अपसव्येन । तिलमाटकं गृहीत्वा । अद्येह । शरदृतौ । आश्विनमासे महालया परपक्षे । कन्यांगते सवितरि अमुकतिथौ । अमुकगोत्रान् । अस्मन्मातामह प्रमातामह वृद्धप्रमातामहान् । अमुकामुक शर्म्मणः सपत्निकान्वसुरुद्रादित्य स्वरूपाणाम् मातामहानावाहयिष्ये । ॐ आवाहय । उशंतस्त्वेत्य नया वाह्याऽप्रदक्षिणं । तिलान् विकीर्य । आयन्तुनः इति जपेत् । आगच्छन्तु । ततः सव्येन । हस्तार्घस्थापनम् । देवाम द्वावेकवा । ततो भूमौ शंखचक्रादिकं लिखित्वा । आसनम् आसने पात्रं । पात्रे पवित्रम् । पवित्रेस्थौ व्वैष्णव्यौ सवितुर्व्वः प्रसव ऽ उत्पुनाम्य्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । इति पवित्रम् निक्षिपेत् । शन्नोदेवीरभिष्ठयऽ आपोभवन्तु

---

(यमः) समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि । मूलेन लोकाञ्जयति शक्रस्यतु महात्मनः । (व्यासः) तर्पणादीनि कार्य्याणि पितॄणां यानि कानिच तानिस्युर्द्विगुणैर् दर्भैस्सप्तपत्रैरवपेपतः । अथ वर्ज्याः कुशाः श्राद्धप्रदीपे । पिण्डार्था स्तरणेच तर्पणविधौ त्याजानिवृक्ताः कुशाःशद्गर्भाः अस्थिघृताश्च पथियै मुक्तौ मलोत्सर्जने । नो वो ब्रह्मगुणो मयास्थित परे दग्वास्तया वन्दिना इति वर्ज्याः । दर्भादीन्स्वयमा हरेत्कृपलानीते स्तुकार्यां क्रिया । कुशाभावेकाशः । अन्योपिसन्ति विस्तरमयान्न लिखितम् ।

पीतये। शय्योरभिश्रवन्तुन.। इति जलम्। यवोसीति यवान् गन्धपुष्पाक्षतादि प्रणवेन तूर्ष्णी वा यथाधिकार निक्षिप्य। एवं रीत्या त्रीणि पित्रार्घ्य पात्राणि। आसनं। आसने पात्रं पात्रं पवित्रम्। पवित्रेस्थौव्येष्णव्याविति। शन्नोदेवीरिति जलम्। तिलोसीति तिलान्। गन्धं पुष्पाक्षतादि प्रणवेन तूर्ष्णी वा निक्षिप्य। ततः भो ब्राह्मणदेवार्घ पात्रपरिपूर्णोस्ताम्। इति प्रत्युक्तिः। एकार्घ्यं देवार्घ्यं पात्रं परिपूर्णमस्तु। अस्तु परिपूर्णम्। ॐ एवं रीत्या पित्रादीनामपि। पित्रर्घ्यं पात्राणि परिपूर्णानिसन्तु। सन्तु यथा माता महार्घ्य पात्राणि परिपूर्णानि सन्तु। २ ततः सव्यंविधाय। पवित्रं गृहीत्वा। विप्रहस्ते समर्घ्यं। सपवित्रेपु हस्तेपु ॐ यादिव्याऽ आपःपयसा संवभूवुर्याऽ अन्तरिक्षाऽ उत पार्थि वीर्याः हिरण्य वर्णा यज्ञियास्तानऽ आपः शिवाः शंथ स्योनाः सुहवा भवन्तु। अद्येह अमुक सम्वत्सरे। दक्षिणायने। शरद् ऋतौ आश्विनमासे महालया परपक्षे कन्यागते सवितरि। अमुक तिथौ अमुक गोत्राऽस्मत्पित्रादित्रय श्राद्ध सम्बन्धिनः। तथामुक गोत्रास्मन्मातामहादित्रय श्राद्धसम्बन्धिनःपुरुर वार्द्रव सञ्ज्ञकविश्वेदेवाः ⊛ अमुक पार्वणश्राद्धे एपवो हस्तार्घोऽस्तु। पुनः प्रत्यर्घंच। पैतृक कर्म। सव्येन। सपवित्रेपु हस्तेपु यादिव्या इति पठित्वा। अपसव्येन। अर्घ्यपात्रं गृहीत्वा। अद्येह। अमुक गोत्र। अस्मत्पितः अमुक शर्म्मन् सपत्निक वसुस्वरूप। अमुकपार्वणश्राद्धे एपते हस्तार्घोऽस्तु सव्येन। पुनः प्रत्यर्घंच। पुनः सपवित्रेपु हस्तेपु या दिव्या इति पठित्वा। अपसव्यं विधाय, अर्घ्यपात्रं गृहीत्वा। अद्येह। अमुक गोत्रः। अस्मत्पितामह। अमुक शर्मन् सपत्निक रुद्र स्वरूप। अमुक पार्वण श्राद्धे। एपते हस्तोर्घोऽस्तु। सव्येन पुनः प्रत्यर्घंच। पुनः सपवित्रेपु या दिव्या इति पठित्वा। अपसव्येन। अर्घ्यपात्र गृहीत्वा। अद्येह। अमुक गोत्र। अस्मत्प्रपितामह। अमुक शर्मन् सपत्निक। आदित्य स्वरूपं। अमुक पार्वणश्राद्धे। एपते हस्तोर्घोऽस्तु। सव्येन पुनः प्रत्यर्घंच। सपवित्रेपु हस्तेपु या दिव्या इति पठित्वा। अपसव्येन। हस्तार्घपात्र गृहीत्वा।

---

अथ विश्वेदेवाःतत्र शावबृहस्पतिः। इष्ट श्राद्धे भून् दक्षौ मत्यमादी स्वेवम्। नैमित्ति केका एकाक्षेका मेनधुरिलाचनौ। पुरूरवा मार्द्रवश्च पार्वणे समुदाहृता। यत यतेषा नाम न ज्ञायते। तत्र श्लोका उच्चारणीयः। आगच्छान्विति।

⊛ विश्वेदेव विषय शंख बृहस्पति वचनं पूर्वमुक्तं तत्र पुरूरवो मार्द्रवश्चेति पाठे पुरूरवमाद्रवश्चेति वैदिकाः।

अद्येह अमुक गोत्र । अस्मन् मातामह । अमुक शमन् सपत्निक वसुस्वरूप । अमुक पार्वणश्राद्धे एपते हस्तार्घोऽस्तु । सव्येन । पुनः प्रत्यर्घंच । सपवित्रेषु हस्तेषु यादिव्या इति पठित्वा । अपसव्येन । हस्तार्घपात्रं गृहीत्वा अद्येह । अमुक गोत्रः अस्मन्मातामह । अमुक शर्मन् सपत्निक रुद्रस्वरूप । अमुक पार्वणश्राद्धे एपत हस्तार्घोऽस्तु । सव्येन । पुनः प्रत्यर्घंच सपवित्रेषु हस्तेषु यादिव्या इति पठित्वा । अपसव्येन । हस्तार्घ पात्रं गृहीत्वा । अद्येह । अमुक गोत्र । अस्मद्वृद्धप्रमातामह अमुक शर्मन् सपत्निक । आदित्यस्वरूप । अमुक पार्वण श्राद्धे एपते हस्तार्घोऽस्तु । सव्येन । पुनःप्रत्यर्घंच । ततः सर्वान संश्रवान् प्रथमे पितृ * पात्रे समवनीय । अर्घोदकं श्रिय दद्यात्पुत्रपौत्रादि वर्द्धनम् । यस्मोत्तस्माच्छ्रियं मेस्या दिह लोके परत्रच । इति मूर्द्धिनि अभिषिच्य । अपसव्येन । पितृवामभागे कुशानास्तीर्य । तदुपरि सपवित्रं पित्रर्घपात्रं मातामहार्घपात्रंच पितृभ्यः स्थान मसीति न्युवजं कृत्वा । तदुपरि स्वधावाचनीयान् सपवित्राम त्रीन्कुशान्दक्षिणाग्रान् संस्थाप्य । आचारत् । ॐ शुन्धतांल्लोकाः पितृषदनाः पितृषदन मसीति संप्रोक्ष्य । पितृभ्यः स्वधायिभ्य इतिपूजनम् । ततोङ्गुष्ठ पवित्रे त्यक्त्वा सव्येन पूजनं । विश्वेषां देवानाम् अर्चनविधावत्रं नमः । इति विश्वेदेव ब्राह्मणहस्ते जलं दत्वा । नमोस्त्वनंताय सहस्रमूर्तये सहस्र पादाक्षिसिरोरुवाहवे । सहस्र नाम्ने पुरुषाय शाश्वते सहस्रकोटि युगधारिणे नमः । अनेन गन्धादिभिःपूजनम् । गन्धोऽस्तु स्वाहा । यवाः पुष्पाणि । तुलसीदलानि अपसव्येन । पितृणाम् । संविन्धकुशविप्रस्य । अर्चनविधावत्रंनमः । ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः अक्षन्नपितरो मीमदन्तपितरो तीतृपन्त पितरः पितरः शुंधध्वम् । अनेनपितृणाम् पूजनम् । नमो वः पितरो रसायेति मावाम-

---

* अत्र श्राद्ध माष्यम् । प्रथमे पात्रे संश्रवान् समवनीय । पात्रं न्युवजं कृत्य पितृभ्याः स्थानं मसीति पात्रेण तत प्रथमं पात्रं न्युवजं करोति भूमौ । तिल कुशान्दक्षिण मूलान्निक्षिप्य तेषां मुपरिन्यवज मधोमुखं करोति गन्ध्यादिभिः पूजयेदित्युशनाः वैश्यदैविक पात्र संश्रवा अपि प्रथमे पात्रे निक्षिप्यन्ते-एवं मातामह प्रथम पात्रेऽपि संश्रवान् समवनीय न्युवजं कृत्वा वक्ष्यमाणं कुर्यात । अत्र प्रथम पात्रं दैवपात्र माहुः । तदुक्तम् । पितृपात्रं तदुत्तानं कृत्वा । विप्रान्विसर्जयदिति । आवृतास तत्रतिष्ठति पितरः शौनको ब्रवीत । सं श्रव शब्देनार्घ पात्रलग्नापावयवाऽभिधीयन्त नहस्तदन्तच्युताः ।

ह्यानां श्राद्धसम्बन्धि कुशविप्रार्चनविधावत्र नमः शेषं पूर्ववत् । गन्धास्तु स्वधा । अक्षताः पुष्पाणि तुलसीदलानि । धूप दीपौ पुनः पवित्रकरे कृत्वा । सव्येन । यवकुशान जलञ्च गृहीत्वा । अद्येह । अमुक गोत्रा-स्मत्पित्रादित्रय श्राद्ध सम्बधिनः तथाऽमुक गोत्रास्मन्मातामहादित्रय श्राद्ध सम्बन्धिनः । अमुक पार्वणश्राद्धे । पुरूरवार्द्रव संज्ञकाः विश्वेदेवाऽर्चन-विधाविमानि गन्धाक्षत पुष्पतुलसीदल धूपदीपवासोभूषणादीनि मद्दत्तानि यथा विभागं वः स्वाहा । विश्वेदेवसम्बन्धि कुशविप्रार्चन विधेः सर्वं परिपूर्णमस्तु । अस्तु परिपूर्णम् । ततोपसव्येन । तिला-मोदक युतं जलं गृहीत्वा । अद्येह । अमुक गोत्राः । अस्मत्पितृ पितामह प्रपिता महाः । अमुकामुक शर्मणः सपत्निका वसु-रुद्रादित्य स्वरूपाः । अमुकपार्वणश्राद्धे । कुशविप्रार्चन विधा-विमानि जलगन्धाक्षतपुष्पतुलसीदलधूपदीपवासोभूषणादीनि मद्दत्तानि यथा विभागवः विप्रार्चन विधिरमवैं परिपूर्णमस्तु । अस्तु परि-पूर्णम् । गन्धान दिद्यानाचमनम् । सव्येन स्वयमाचम्य । विश्वेदेवब्राह्मण-माचामयेत् । अपसव्येन-पित्रादिब्राह्मणा माचामयेत् मातामहादि-ब्राह्मणानप्याचामयेत् । सव्येन । अच्युतस्मरणम् । ततः यथा चक्रायुधो विष्णुस्त्रैलोक्यम्परिरक्षति । एवंमण्डलमस्मांक सर्वभूतानि रक्षतु । इति विश्वेदेवब्राह्मणसमीपे । अपसव्येन । पितृमातामहब्राह्मणसमीपे भस्मना मण्डले कार्य्ये । भस्मना चतुष्कोणमण्डलानि विधाय ॐ तेषामुपरि भोजनपात्राणि संस्थाप्य । पितृद्विजसमीपे जलपात्रं संस्थाप्य । घृताक्त-मन्नं विहितमादाय उद्धृत्य सम्प्रोक्ष्य पृच्छति । भो ब्राह्मणा युष्मदनुज्ञया जन्ने, अग्नौ करणमहं करिष्ये । ॐ कुरुष्व । विप्रपाणौ जलेवाग्नौकरण-होमः । ÷ अपहोमः ÷ अपसव्येन । तिलमोदकयुतमन्नं गृहीत्वा । ॐ अग्नये कव्यवाहनाय स्वाहा । इदमग्नये कव्य वाहनाय । ॐ सोमाय पितृमते स्वाहा । इदं सोमाय पितृमते । किञ्चिद्धुतशेषं पित्रादि-ब्राह्मणेभ्यो दत्त्वा । शेषं पिण्डार्थे स्थापयेत् । ततः सव्येन । परिवेषणाम् ।

---

ॐ अग्नौकरणहोमश्च कर्त्तव्य उपवीतिना । अपसव्येन वा कार्यो दक्षिणाभिमुखेन च । इति छन्दोगपरिशिष्टे । कातीयानां त्वपसव्यमेव पितृ-पितृयज्ञवद्धु धुरवेति सर्वातिदेशात् । अन्य तु छन्दोगपरम् । छन्दोगा शुद्धुः सव्येनापसव्येन वाहुतः । इति वृद्धयाज्ञवल्क्योक्तेः । अग्नौकरणं च पश्चाद्य मातामहादिभिर्भिन्नम् । निरग्नेर्न रचितं कृतमप्यकृतम्भवेत् । चतुष्कोणं द्विजातीनां त्रिकोणं क्षत्रियस्य तु । मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् । इति मनुः ।

प्रथमं विष्णवे नैवेद्यम् । ॐ नाभ्याऽआसीदन्तरिक्ष ॐ शीर्ष्णोद्यौः समवर्त्तत पद्भ्यांभूमिर्दिशः श्रोत्रात्तथा लोकां २ ॥ अकल्पयन । विष्णो साङ्गसपरिवार सवाहन इदं अमृतस्वरूपन्नैवेद्यं गृहाण स्वाहा इति निवेद्य। ततो वैश्वदैविकपूर्वकं सुशीतजलसहितो-ष्णान्न परिवेषणम् । रजतादि पात्रेपुकुर्य्यात् गायत्र्या अन्नंसम्प्रोक्ष्य। अन्वाचितदक्षजानुः स्वस्तिकाकृतिनाऽधोमुखेन वामोपरि स्थितेन दक्षिणहस्तेन ⊛ मधु३ इति पात्रमालभ्य जपति । पृथिवी तेपात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमितेऽ मृतं जुहोमि। विष्णो हव्यॅरक्ष। इति प्रादक्षिण्येन यवान् विकार्य । अपहताऽअसुरा रक्षांसिवेदिषदः अङ्गुष्ठग्रहणम् । ॐइदं विष्णुर्विचक्रमे त्रेधानिदधे पदम् । समूढमस्य-पाठंसुरे । इदमन्नम् । इमा आपः इदमाज्यम् । इदं शाकादिकं सर्व हविः। अद्येह: अमुकसम्वत्सरे। दक्षिणायने शरद ऋतौ अश्विनमासे महालयापरपक्षे । कन्यागते सवितरि । अमुकतिथौ। अमुकगोत्रास्मत्पित्रादित्रय श्राद्धसम्बन्धिभ्यः तत अमुगोत्रा अस्मन्मातामहादित्रयश्राद्धसम्बन्धिभ्यः पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यांऽस्मिन् अमुकपार्वणश्राद्ध इदमन्न इमा आपः इदमाज्यं इदं शाकाः दिकं यत्परिविष्टं यत्परिवेष्यमाणं ब्राह्मणस्यातृप्तिपर्यन्तं अमृतस्वरूपं मद्दत्तं यथाविभाग वः स्वाहा। इति भूमौ जलं प्रदद्यात् । ब्राह्मणहस्तदाने प्रत्यवायः। ॐ ये देवासो दिव्यैकादशस्थपृथिव्या मद्ध्यॆकादशस्थ। अपसु क्षितौ महिनैकादशस्थ तेदेवासो यज्ञमिमं जुषध्वम् । इति पठित्वा । विप्रहस्ते जलमर्पयेत् नमो देवेभ्यः । तथा गायत्र्याऽन्नं सम्प्रोक्ष्य। अपसव्यम् कृत्वा। अन्वाचितवामजानुः । स्वस्तिकाकृतिना ऊर्द्ध्वमुखेन दक्षिणोपरिस्थितेन वामहस्तेन मधु३। इति पात्रमालभ्य जपति पृथ्वीते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते। अमृतं जुहोमि। विष्णो कव्यॅरक्ष। अप्रादक्षिण्येन तिलान्विकीर्य। अपहताऽअसुरारक्षाॅसिवेदिषदः। अङ्गुष्टग्रहणम् इदं विष्णुरिति पठित्वा। इदमन्नम्। इमा आपः । इदमाज्य । इद शाकादिकं सर्वं कव्यम् । अद्येह। अमुकगोत्रेभ्योऽस्मत्पितृपितामह प्रपितामहेभ्यः । अमुकामुकशर्मभ्यः सपत्निकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः । अमुकपार्वणश्राद्धे । इदमन्नं। इमा आपः। इदमाज्यं । इदं शाकादिकं यत्परिविष्टं यत्परिवेष्यमाणं

---

⊛दैवे नुत्तानहस्ताभ्या,उत्तानाभ्यान्तु पैतृके। दवे सव्यमपः कृत्वा अपसव्यन्तु-पैतृके इति वचनात् ॥-॥ पृथ्वीपात्रमिति पात्रभिमन्त्रणम्। कृत्वेदं विष्णुरित्येन्ने द्विजाङ्गुष्ठं निवेशयेत्। ( स्मृतिसङ्ग्रहे ) २) १) या,

ब्राह्मणस्यातृप्तिपर्यन्तं ब्राह्मणेभ्य आतृप्तिदास्यमानमन्नंचअमृत स्वरूपं मद्दत्तं यथाविभागं वः स्वधा । ॐये चेह पितरो येचनेहयांश्चविद्म मया ३ ॥ऽ उचनप्रविद्मत्वं व्वेत्थ यतिते जातवेदस्वधाभिर्य्यज्ञ छं सुकृतं जुपस्व । इति पितृब्राह्मणहस्ते । आपोशानं, दत्वा✻ पुनः मातामहपात्रे । उत्तानाभ्यां पाणिभ्यां । मधु३ इति पात्रमालभ्य जपति । पृथिवी ते पात्रमिति । विष्णोकव्यंछं रक्ष । इति । आपादक्षिण्येन तिलान्विकीर्य । अपहताऽअसुरा रक्षा छं सि व्वेदिपदः अङ्गुष्टमहणं इदं विष्णुरिति पठित्वा । इदमन्नं । इमा आपः । इदमाज्यं । इदं शाकादिकं सर्वं कव्यं । पुनः । तिलमोदकं जलञ्च गृहीत्वा । अद्येह । अमुकगोत्रेभ्यः । अस्मन्मातामह प्रमातामह वृद्धप्रमातामहेभ्यः । अमुकाअमुक शर्मभ्यः । सपत्निकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः । अमुकपार्वणश्राद्धे । इदमन्नं । इमा आपः । इदमाज्यं । इदंशाकादिकं यत्परिविष्टं यत्परिवेष्यमाणं ब्राह्मणस्यातृप्तिपर्यन्तं ब्राह्मणेभ्य आतृप्तिदास्य मानमन्नं च । अमृतस्वरूपं मद्दत्तं यथाविभागं वः स्वधा । येचेह पितर इति पठित्वा इति मातामहब्राह्मणहस्ते । अपोशानं दत्वा यथासुखेन भुङ्ध्वम् । इत्याज्ञां दद्यात् भुंज्महे । इति विप्रोक्तिः ततः सव्येन । प्रणवव्याहृतिपूर्वकं गायत्रीन्मधुमतीस्त्र्यृचत्रयं च पठेत् । ॐमधु ३। मधुव्वाताऽऋतायते मधुक्षरंति सिन्धवः माध्वीर्नः सन्त्वोषधीः । मधुनक्तमुतोषसो मधुमत्पार्थिव छं रजः मधुद्यौरस्तु नः पिता । मधुमान्नोव्वनस्पतिर्म्मधुमाँ ३॥ऽ अस्तु सूर्य्यः । माध्वीर्गावो भवन्तुनः मधु ३ यथाशक्त्या पितृसूक्तं आशुः शिशान इत्यादि सप्तदशर्चां रुधिरतत्रादीनश्नत्सु विप्रेषु पठेत् तत स्तुलसीशर्करागव्यदुग्धाज्यमधुतिलगंगाजलयुतमन्नंतात्रपात्रे कृत्वा । एकमन्नोदकं विष्णुनिवेदितमक्रमग्नौ करणान्नशेषमपि दत्त्वा । अपसव्येन । पिण्डान्निर्माय । विकिरदानम् ✻ नैर्ऋत्यान्दिशि कुशात्रयं भूमौ क्षिप्त्वा । आसनम् । असंस्कृतप्रमीतानां त्यागिनां कुलभागिनाम् । उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् । इत्यासनं दत्त्वा ।

---

आपोशानं वामभागे सुरापानसमं भवेत् । दक्षभागे तु यः कुर्यात्सोमपानफलं लभेत् । + ( प्रचेताः ) आपोशानप्रदोपान्त सावित्री त्रिर्जपेदथ । मधुवाता इति त्र्यृचं मध्वित्येवत् त्रिकन्तथा । + प्रचेताः भुञ्जानेषु तु विप्रेषु स्वस्वकुम्भावसानकम् । जपेदभिमुखो भूत्वा विष्णुञ्चैव विशेषतः । इत्थ मरीचिः । श्राद्धमुक्तमात्रेषु पिण्डान् कुर्वीत पार्वणे । पिण्डोपघाते अग्निमार्जार मूषक स्वगो विप्रे च स्त्रियौ इने पुनः पिण्डप्रदातव्या अन्नेन पाकेन पद्दत्तात् ।

सजलतिलमोटकयुतमन्नं विकिरेत् । अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् । येषान्न पचते माता येषान्न पचते पिता । उच्छिष्टं ये च कांक्षन्ति तेभ्योऽन्नंदत्तमक्षयम् । उच्छिष्ट भागधेयेभ्य नमः । इति गन्धाक्षतपुष्पैः पूजमन् । अङ्गुष्ट-पवित्रे त्यक्त्वा हस्तौ पादौ प्रक्षल्य । सव्येनाचम्य । ततः श्राद्धदेशमागतय । अन्ये अङ्गुष्ट पवित्रे करे कृत्वाचमेत् । अपसव्येन । पितृपूर्वं । सकृत्सकृदापो दत्त्वा । सव्येन । विश्वेदेवब्राह्मणहस्तोऽपि चुलुकदानम् । पूर्वमद्गायत्रीं । मधुमतीं मध्विति च जपित्वा भो ब्राह्मणा अस्मिन्पाकमध्ये यत्किञ्चिद्रोचते तत्प्रतिगृह्यताम् । तृप्ताः स्थः । तृप्ताःस्मः । शेषान्नेन किं क्रियताम् इष्टैः सभुज्यताम् । अपसव्येन पिण्डदानार्थं वेदिकालेपनं गोमयेन । अपहता इति रेखाकरणं कुशेन + ॐअपहतोऽअसुरा रक्षा छं सिव्वेदिपदः । उल्मुकधारणम् । ॐ येरूपाणि प्रतिमुञ्चमानाऽसुराःसन्तः स्वधया चरन्ति । परा पुरा निपुरो ये भरंत्यग्निल्टॉल्लोकात्प्रणुदात् त्यस्मात् सतिलजलमोटकं गृहीत्वा । अद्येह । अमुकसम्वत्सरे । दक्षिणायने शरदऋतौ आश्विन मासे । महालया परपक्षे कन्यागते सवितरि । अमुकतिथौ । अमुकगोत्रः अस्मत्पिता । अमुकशर्मन् । सपत्निक वसुस्वरूप । अमुकपार्वणश्राद्धे पिण्डासने अवनेनिक्ष्व । अद्येह । अमुकगोत्रः । अस्मत्पितामहः । अमुकशर्मन् सपत्निकरुद्रस्वरूपः । अमुकपार्वणश्राद्धे । पिण्डासने अवने निक्ष्व । अद्येह् । अमुकगोत्रः । अस्मत्प्रपितामह । अमुकशर्मन् सपत्निक आदित्यस्वरूप अमुकपार्वणश्राद्धे पिण्डासने । अवनेनिक्ष्व । ततः । उपमूललूनकुशास्तरणम् ÷ । सव्येन । पद्स्मरणम् । ईशान विष्णुकमलाशनकार्तिकेयवह्नत्रपार्करजनीशगणेश्वराणां क्रौंचामरेज्यकलशोद्भवकाश्यपानां पादन्नमामि सततं पितृ-

---

❀ ( क ) ततस्सर्वाशनं पात्रे गृहीत्वा विविधं बुधः । तेषामुच्छेषणस्थाने विकिरं निक्षिपेद्भुवि । ( कात्यायनः ) विकिरोतर गायत्र्यादिजपं तृप्तिप्रश्नं चाह । ( आश्वलायनः ) स्फ्येन लेखमुल्लिखेत् । अपहता असुरा रक्षांसिवेदिषद इति । ब्रह्माण्डपुराणे विशेषः । निहन्मि सर्वंयदमेध्यमंत्रहताश्च सर्वे । सुरदानवा मया । रक्षांसि यक्षाश्च पिशाचसङ्घा हता मया यातुधानाश्च सर्वे । एतन्मन्त्रेण सुसंयतात्मा दर्भेण वेदीं विलिखेदिति । पिण्डपितृयज्ञे कात्यायनः ) दक्षिणेनोल्लिख्यपहता । इत्यररेण वा । अपवेदाया दक्षिणात्वेन पुरस्ता करोति ये रूपाणीति । आश्वलायनः)
४ सदाच्छिन्नैरवस्तीर्येति ।

मुक्ति हेतो। गङ्गा गया गदाधरादीन् संस्मृत्य। गङ्गायै नमः। गदधराय नमः। कुरुक्षेत्राय नमः। ॐ श्री तीर्थराजाय प्रयागाय नमः। पितृस्वरूपं ध्यात्वा। भो ब्राह्मणा युष्मदनुज्ञया पिण्डप्रदानामहं करिष्ये। ॐ कुरुष्व। ततोऽपसव्येन। तिलमोदकयुतं सजलं पिंडं गृहीत्वा। वामजान्वाच्य। अद्येह। दक्षिणायने। शरदृतौ आश्विनमासे। महालयापरपक्षे। कन्या गते सवितरि। अमुकतिथौ अमुकगोत्रः। अस्मत्पितः। अमुकशर्मन् सपत्निक वसुस्वरूप। अमुकपार्वणश्राद्धे। एषोऽन्नपिण्डोऽअमृतस्वरूपो मद्दत्तस्तेऽस्तु। इयं भूमिर्गयातुल्या। इदमुदक गांगम्। गङ्गोदके ऽसति गङ्गाजल तुल्यं वा। अमुक गोत्राय। अस्मत्पित्रे। अमुकशर्मणे सपत्निकाय वसुस्वरूपाय। अद्य ह। अमुक गोत्र। अस्मत्पितामह अमुक शर्मन् सपत्निक रुद्रस्वरूप। अमुकपार्वणश्राद्धे। एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु। इय भूमिर्गयातुल्या इदमुदक 'गाङ्ग' (गङ्गाजलतुल्यं) वा। अमुकगोत्राय। अस्मत्पितामहाय अमुकशर्मणे। सपत्निकाय। रुद्रस्वरूपाय। अद्येह अमुकगोत्र। अस्मत्प्रपितामह। अमुकशर्मन्। सपत्निक। आदित्यस्वरूप। अमुकपार्वणश्राद्धे। एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु। इयं भूमिर्गयातुल्या इदमुदऽगाङ्ग (गङ्गाजलतुल्यम्) वा। अमुकगोत्राय। अस्मत्प्रपितामहाय। अमुकशर्मणे। सपत्निकाय। आदित्यस्वरूपाय। अद्येह। अमुकगोत्र। अस्मन्ममातामह। अमुकशर्मन्। सपत्निक वसुस्वरूप। अमुकपार्वणश्राद्धे। एषोऽन्नपिण्डोऽमृत स्वरूपो मद्दत्तस्तेऽस्तु। इय भूमिर्गयातुल्या इदमुदक गाङ्ग, (गङ्गाजलतुल्यम्) वा। अमुकगोत्राय अस्मन्मातामहाय। अमुकशर्मणे सपत्निकाय वसुस्वरूपाय अद्येह। अमुकगोत्र अस्मत्प्रमातामह। अमुकशर्मन् सपत्निक रुद्रस्वरूप। अमुकपार्वणश्राद्धे। एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु। इयं भूमिर्गयातुल्या इदमुदक गाङ्ग (गङ्गाजलतुल्य) वा। अमुकगोत्राय। अस्मत्प्रमातामहाय। अमुकशर्मणे सपत्निकाय रुद्र स्वरूपाय। अद्येह अमुकगोत्र। अस्मत् वृद्धप्रमातामहाय। अमुकशर्मणे सपत्निकाय। आदित्यस्वरूपाय। लेपभागिनामयं भागोऽस्तु। इति लेपभागं पिण्डपार्श्वे दद्यात्। प्रतिपिण्डं प्रतिवर्गं वा कुलाचारात्। पिण्डास्तरणकुशेषु करोन्मार्जनं कृत्वा हस्तप्रक्षालनम्। सव्येन।

---

× (दर्भास्तरणानन्तरमाह सुमन्तुः) अमत्रिवर्ग निम्वेति पुरुष पुरुषम्वति। त्रिश्रिरेकेन हस्तेन विदधीतावनेजनम्। कात्यायनेन बर्हिस्तरण सूत्रयमवनेजन-मुक्तम्। तत्र यथा शौदक्षयवरया।

पिण्डदानाचमनम् ❀ करे पुष्पाणि संगृह्य । उदङ्मुखेन । अपसव्येनात्र पितर इति जपः । ॐ अत्र पितरो मादयध्वं यथाभाग मा वृषायध्वम् । उदङ्मुखेनैव । सव्येन । मरुन्नियमनम् । ततः परावृत्य । अपसव्येन । अमीमदन्त पितरो यथा भागमावृषायीसत । पिण्डोपरि पुष्पं दत्वा । ततः प्रत्यवनेजनम् । अद्येह अमुकनाम सम्वत्सरे दक्षिणायने । शरद ऋतौ आश्विनमासे । कन्यागते सवितरि । महालयापरपक्षे । अमुकतिथौ । अमुकगोत्र । अस्मत्पितः अमुकशर्मन् सपत्निक वसुस्वरूप । अमुकपार्वणश्राद्धे । पिण्डे प्रत्यवने निक्ष्व । अद्येह अमुकगोत्र । अस्मत्पितामह । अमुकशर्मन् सपत्निक । रुद्रस्वरूप अमुकपार्वणश्राद्धे । पिण्डे प्रत्यवने निक्ष्व । अद्येह अमुकगोत्र । अस्मत्प्रपितामह । अमुकशर्मन् सपत्निक । आदित्यस्वरूप । अमुकपार्वणश्राद्धे पिण्डे प्रत्यवने निक्ष्व । अद्येह । अमुकगोत्र । अस्मन्मातामह । अमुकशर्मन् । सपत्निक वसुस्वरूप । अमुकपार्वणश्राद्धे । पिण्डे प्रत्यवने निक्ष्व । अद्येह अमुकगोत्र । अस्मत्प्रमातामह । अमुकशर्मन् सपत्निक रुद्रस्वरूप अमुकपार्वणश्राद्धे । पिण्डे प्रत्यवने निक्ष्व । अद्येह । अमुकगोत्र अस्मद् वृद्धप्रमातामह । अमुक शर्मन् सपत्निक । आदित्यस्वरूप अमुकपार्वणश्राद्धे । पिण्डे प्रत्यवने निक्ष्व । किंचिन्नीवीविस्रंसणम् । नमो वः इति षडञ्जलीकरणम् । ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नो वो गृहान्न पितरो दत्त सतो वः पितरोः मेतद्वः पितरो व्वासः ॥ सूत्रदानम् ❀ एतद्वः पितरो वास इति । ऊर्जकरणकर्म-पात्रोदकेन । ॐ ऊर्जं व्वहन्तिरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयेत मे पितॄन् । सव्येन । देवताभ्य इति त्रिर्जपेत् । भो ब्राह्मण युष्मदनुज्ञया पिण्डार्चनमहं करिष्ये । ॐ कुरुष्व । अपसव्येन । पिण्डार्चा पिण्डार्चनं विधावत्रं नमः । गन्धास्तु स्वधा । अक्षताः ।

---

❀ मनु–पुष्पपिण्डा स्ततस्तां स्तुप्रयतो विधिपूर्वकम् ॥ तेषु दर्भेषु तं हस्तं विमृज्यालेपभागिना ❀ मनुः ) आचम्योदक परावृत्य त्रिराचम्य शनै शनैः । षडृतूंश्चन मस्कुर्यात् पितॄन् नैवचमन्त्रवित ।

❀ ( श्राद्धचिन्तामणौ नारी ) एतद्वः वास इति जपन् पृथक् पृथक् । अमुकामुकगोत्रै तचुभ्यं वासः पठेदबुधः ( वस्त्र मासं ) कौशेयं क्षौमकार्पासं दुकूलं महतं तथा श्राद्धे ह्येतानि यो दद्यात् कामनाप्नोति चोत्तमान् । ( ब्राह्म ) गन्ध पुष्पाधिः धूपश्च । दीपश्च विनिवेदयेत ( देवश्च ) दक्षिणां सर्वभोगश्च । ( मतिरिक्तमदारयेत् ) ।

पुष्पाणि तुलसीदलानि । ॐ पितृभ्यः । स्वधायिभ्यः । स्वधानमः । पितामहेभ्यः ॥ स्वधायिभ्यः । स्वधानमः । प्रपितामहेभ्यः । स्वधायिभ्यः स्वधानमः । अत्रन्न् पितरो मीमदन्त पितरो तीतृपन्त पितरः । पितर. शुंधध्वम् । वस्त्रम् । धूपदीपौ नैवेद्यम् । ताम्बूलम् । भूषणञ्च समर्प्य—तिलमोटकं जलञ्च गृहीत्वा । अद्येह । अमुकगोत्राः । अस्मत्पितृपितामहप्रपितामहाः । अमुकामुकशर्माणः । सपत्निकाः वसुरुद्रादित्यस्वरूपाः । तथामुकगोत्राः । अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः । अमुकामुकशर्माः । सपत्निकाः । वसुरुद्रादित्यस्वरूपाः । पिण्डार्चनविधाविमानि गन्धाक्षतपुष्पतुलसीदलवासोयुग्दीपनैवेद्यताम्बूलभूषणानि तुलसीपत्राणि च मद्दत्तानि यथाविभाग वः स्वधाः । पिण्डार्चनविधेः सर्वं परिपूर्णमस्तु अस्तु परिपूर्णम् । सव्येन । पिण्डापभूमौ सुप्रोक्षितमस्तु । अस्तु सुप्रोक्षितम् । शिवा आपः सन्तु सन्तु । विप्रकरे । जलं अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् । ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे । सौमनस्यमस्तु । अस्तु सौमनस्यम् । लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे । लक्ष्मीर्वसते सदागोष्ठे । सौमनस्य सदास्तु मे । अक्षताश्चारिष्टमन्तु । अक्षतञ्चास्तु मे नित्यं शान्तिपुष्टिकरं परम् । यद्यज्जयस्करं लोके तत्तदस्तु सदा मम । ततः कुशैः कर्मपात्रोदकेन मूर्द्धाभिषेकं कुर्यात् । ममकुले दीर्घमायुरस्तु । अस्तु शान्तिरस्तु । अस्तु पुष्टिरस्तु । अस्तु वृद्धिरस्तु । अस्तु यच्छ्रेयस्तदस्तु । यत्पापं रोगः शोको दुःखं दारिद्र्यं । तत्प्रतिहतमस्तु । अमृताभिषेकोऽस्तु । ततोऽक्षय्योदकदानम् । अक्षय्यन्तु । विप्रकर एव ❀ अपसव्येन तिलमोटकसहितं जल गृहीत्वा । अद्येह । अमुकसम्वत्सरे । दक्षिणायने । शरद ऋतौ । आश्विनमासे । महालयापरपक्षे । कन्यागते सवितरि । अमुकतिथौ । अमुकगोत्रस्य । अस्मत्पितुः । अमुकशर्मणः । सपत्निस्य । वसुस्वरूपस्य । अमुकपार्वणश्राद्धे । इदमन्नोदकादिकं । यद्दत्तं तदक्षय्यमस्तु । अस्तु अक्षय्यम् । अद्येह । अमुकगोत्रस्य । अस्मत्पितामहस्य । अमुकशर्मण. सपत्निकस्य । रुद्रस्वरूपस्य । अमुकपार्वणश्राद्धे । इदमन्नोदकादिकं । यद्दत्तं । तदक्षय्यमस्तु । अस्तु । अक्षय्यं । अद्येह । अमुकगोत्रस्य अस्मत्प्रपितामहस्य । अमुकशर्मण. । सपत्निकस्य । आदित्यस्वरूपस्य । अमुकपार्वणश्राद्धे । इदमन्नोदकादिकं । यद्दत्तंतदक्षय्यमस्तु । अस्तु अक्षय्यम् ।

---

( वृद्ध श्राद्धे.तम. ) पितृणां नामगोत्रेण करे देयं तिलोदकम् । प्रत्येकं पितृतीर्थेन अक्षय्यमिदमस्तीति ।

अद्येह । अमुकगोत्रस्य । अस्मन्मातामहस्य । अमुक शर्मणः ।.सपत्निकस्य वसुस्वरूपस्य । अमुक पार्वणश्राद्धे । इदमन्नोदकादिकं । यद्दत्तं । तद्-क्षय्यमस्तु । अस्तु । अक्षय्यम् । अद्येह । अमुकगोत्रस्य । अस्म प्रमातामहस्य । अमुकशर्मणः सपत्निकस्य । रुद्रस्वरूपस्य । अमुकपार्वण-श्राद्धे । इदमन्नोदकादिकं । मद्दत्तं । तदक्षय्यमस्तु । अस्तु अक्षय्यम् । अद्येह् । अमुकगोत्रस्य । अस्मद्वृद्धप्रमातामहस्य । अमुकामुकशर्मणः सपत्निकस्य । आदित्यस्वरूपस्य । अमुकपार्वणश्राद्धे । इदमन्नोदकादिकं । मद्दत्तां । तदक्षय्यमस्तु । अस्तु । अक्षय्यम् । सव्येन । यवकुश जलमादाय । अद्येहाऽमुकगोत्र । अस्मत्पित्रादित्रयश्राद्धसम्बन्धिनां । तथाऽमुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिनां पुरुरवो माद्रवसंज्ञ कानां । विश्वपांदेवानां अस्मिन् पार्वणश्राद्धं वैश्वदेविककृत्ये । इदमन्नादकादिकम् । यद्दत्तं । तदक्षय्यमस्तु । अस्तु अक्षय्यम् । इति ततः प्रार्थना शीर्ग्रहणम् । अघोरा पितरः सन्तु । सन्तु । गोत्रन्नो वर्द्धन्ताम् । वर्द्धताम दातारो नोभिवर्द्धन्ताम् । वर्द्धन्ताम् । वेदाः वर्द्धन्ताम् । वर्द्धन्ताम् । सन्तति वर्द्धताम् । वर्द्धताम् श्रद्धाचनो माव्यगमत् । मागाः वहुदेयं च नोस्तु । अस्तु । अन्नञ्च नो वहु भवेत् । भवतु । अतिथींश्च लभेमहि । लभध्वम् । याचितारश्च नः । सन्तु । सन्तु । मास्मयाचिष्म कञ्चन । मा याचेथाः । एता एव । आशिषः । सत्या. । सन्तु । सन्तु.। ततः स्वधा वाचनम् + भो ब्राह्मण युष्मदनुज्ञया स्वधां वाचयिष्ये । वाच्यताम् । अपसव्येन । स्वधावाचनीयान् त्रीन् कुशान् । पिण्डोपरि संस्थाप्य । सजलतिलमोटकं गृहीत्वा । अद्येह् । अमुकनामसम्वत्सरे । दक्षिणायने । शरदृतौ । आश्विनमासे । महालयापरपक्षे । कन्यागते । सवितरि । अमुकतिथौ । अमुकगोत्रेभ्योऽस्मत्पितृभ्योऽमुकशर्मभ्यः । सपत्निकेभ्यो वसु स्वरूपेभ्यः । अमुक पार्वण श्राद्धे । ब्राह्मण । मधु मधु स्वधोच्यताम् । अस्तु स्वधा । अद्येह् । अमुकगोत्रेभ्यः । अस्मत्पितामहेभ्यः । अमुकशर्मभ्यः । सपत्निकेभ्यः । रुद्रास्वरूपेभ्योः ऽमुकपार्वण-श्राद्धे । ब्राह्मणा मधु मधु स्वधोच्यतां । अस्तु स्वधा । अद्येह् । अमुक-गोत्रेभ्योऽस्मत्प्रपितामहेभ्योऽमुकशर्मभ्यः । सपत्निकेभ्यः । आदित्यस्वरू-पेभ्योऽमुकपार्वणश्राद्धे । ब्राह्मणा मधु मधु स्वधोच्यतां । अस्तु स्वधा । अद्येह । अमुकगोत्रेभ्योऽस्मन्मातामहेभ्योऽमुकशर्मभ्यः । सपत्निकेभ्यो

---

( गोभिलः ) अघोराः पितरः सन्त्वित्युक्ते स्वधां वाचयिष्ये इति पृच्छति । पितृभ्यः स्वधोच्यतामित्युक्तेऽस्तुस्वधेत्यु च्यमानो धारां दद्यात् ऊर्जं वहन्तीरिमृतं मिति ।

रुद्रस्वरूपेभ्यो ऽमुकपार्वणश्राद्धे ब्राह्मणा मधु मधु स्वधोच्यतां अस्तु स्वधा। अद्येह। अमुकगोत्रेभ्योऽस्मत्प्रमातामहेभ्योऽमुकशर्मभ्यः। सपत्निकेभ्यो रुद्रस्वरूपेभ्यो ऽमुकपार्वणश्राद्धे ब्राह्मणा मधु मधु स्वधोच्यतां। अस्तु स्वधा। अद्येह। अमुकगोत्रेभ्योऽस्मद् वृद्धप्रमातामहेभ्योऽमुकशर्मभ्यः। सपत्निकेभ्य आदित्यस्वरूभ्योऽमुकपार्वणश्राद्धे। ब्राह्मणा मधु मधु स्वधोच्यताम्। अस्तु स्वधा। स्वधावाचनीयेष्वपोनिषंचति। ॐ ऊर्ज्जं व्वहन्तीरमृतं घृतम्पयः कीलालम्परिश्रुतम्। स्वधास्थ तर्पयत मे पितॄन्। दुग्धेनाप्यूर्जकरणमाचारत्। केचिन्मते नीराजनम्। उत्तानं पात्रं कृत्वा + पितरः स्वर्गलोके प्रस्थिता भवन्तु। सव्येन। दक्षिणासङ्कल्पः। देयद्रव्यं सम्प्रोक्ष्य पूजनं कार्यम्। हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे। अद्येह। अमुकसंम्वत्सरे। अमुकायने। अनुकर्तौ। अमुकमासे। अमुकपक्षे। अमुकतिथौ। अमुकतिथौ। अमुकगोत्रोत्पन्नः। अमुकराशिः। अमुकशर्म्माहं। अमुक गोत्राणाम्। अस्मत्पितृ पितामह प्रपितामहानां। अमुकामुकशर्मणाम्। सपत्निकानाम्। वसुरुद्रादित्यस्वरूपाणाम्। तथामुकगोत्रणाम्। अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम्। अमुकामुकशर्मणाम्। सपत्निकानां। वसुरुद्रादि यस्वरूपाणाम्। अक्षयतृप्तिप्राप्त्यर्थं। पुरूरवोमाद्रवसंज्ञक विश्वेदेवापूर्वकं। कृतस्यास्य अमुकपार्वणश्राद्धकर्मणः। साधु गुण्यार्थम्। इदं रजतं। सोमदैवतं रजतनिष्क्रयिणीं दक्षिणाम्। वा श्राद्धभोक्तृभ्याब्राह्मणेऽन्येभ्योऽपि दातुमुत्सृजे। ॐतत्सन्नमम्। पुनः सुवर्णं संम्पोक्ष्य। हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे। इति संम्पूज्य। यवकुशानादाय। अद्येह। अमुकगोत्राऽस्मत्पित्रादित्रयश्राद्धसम्बन्धिनां। तथामुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिनां। पुरूरवोमाद्रवसंज्ञकानां। विश्वेषां देवानां प्रीतये। वैश्वदेविक कर्मणः। साधुगुण्यार्थम्। इद सुवर्णम्अग्निर्दैवतम्। मनसोपदिष्टां दक्षिणां वा ब्राह्मणेभ्यो दातुमुत्सृजे। ॐ तत्सन्न मम। स्वस्ति भवन्तो ब्रुवन्तु। स्वस्तीति विप्रोक्तिः। विश्वेदेवाः प्रीयन्ताम्। इति मृहीति। विश्वेदेव ब्राह्मणा घोषणा प्रीयतां यो विश्वेदेवाः स्वविलकं सत्यानुष्ठानसम्पन्नाः। सर्वदा यज्ञबुद्धयः॥ पितृ-

( नागखण्डे ) उत्तान मर्घ्यपात्रन्तु कृत्वा दद्याच्च दक्षिणम्। हिरण्यमन्देवतानांचपितॄणां रजतन्तथा ( कालिकायामाचार्यः ) दद्यायज्ञोपवीतं यताम्बूलं दक्षिणा तथा।

मातृपरश्चैव ॥ सं्वस्मत् कुलजा नराः ॥ अक्षताः पान्तु ॥ अशौ-र्म्हणमितिब्राह्मणापर्णपुष्पाणि सङ्गृह्य ॥ विशेषपूजनं ॥ सव्येनैव ॥ पितृभ्यः ॥ स्वाधायिभ्य इति ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्ति तथा राज्यन्नृणां प्रीताः पितामहाः । आयुःपुत्रान् यशः स्वर्गं कीर्तिम्पुष्टिं बलं श्रियम् । पशून् सुखं धनं धान्यं प्राप्नुयां पितृपूजनात् । ततोऽपसव्येन । पितामहपिण्डमुत्थाप्य । सव्येनाघ्राय । पात्रान्तरे निधाय । पिण्डस्थाने शङ्खचक्रादिकं लिखित्वा । गन्धपुष्पाक्षतैः ॥ पङ्क्तृन्पूजयेत् । पिण्डस्थाने अत्रनमः सुगन्ध । अक्षताः पुष्पाणि । सव्येन । तत्र दीपं संस्थाप्य । ॐ वसन्तायनमः । ॐ ग्रीष्माय नमः । ॐ वर्षाभ्यो नमः । ॐ शरदे नमः । ॐ हेमन्ताय नमः । ॐ शिशिराय नमः । हस्तौसं हतौ कृत्वा । यान्तु पितृगणाः सर्वेयस्मात् स्थानादुप गताः । सर्वेते हृष्टमनसः सर्वकाम-प्रपूरकाः । ये लोका दानशीलनां ये लोकाः पुण्यकर्मणाम् । सम्पूर्णान् सर्वभोगैस्तु तान्व्रजध्वं सुपुष्कलान् । इहास्माकं शिवं शान्तिरायुरारोग्य-संपदः । वृद्धिः सन्तानवर्गस्य जायतामुत्तरोत्तरा । दीपस्थाने दीपः अपसव्येन । पिण्डस्थाने पिण्डः । असंचर मभ्युदय कुर्यात् । यः कश्चित् पितृरूपेण तिष्ठते परमेश्वरः । सोऽयं श्राद्धप्रदानेन तृप्तिं लभतु शाश्वतीम् । गयायां पतृरूपेण स्वयमेको जनार्दनः । यं दृष्ट्वा पुण्डरी-काक्षं मुच्यते च ऋणत्रयात् । पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गया-शिरः । यत्र यत्र स्मरिष्यामि पितॄणान्दत्तमक्षयम् । शमीपत्र-प्रमाणेन पिण्डन्दद्याद्गयाशिरे । उद्धरेत्सप्त गोत्राणां कुलमेकोत्तरं शतमम् । पितुः शतगुणं पुण्यं सहस्रं मातुरुच्यते । भगिन्यां शतसाहस्रं सोदर्य्ये दत्तमक्षयम् । सव्येन । अद्य दिने अपरमपिश्रामं पक्वं हिरण्यं उदयास्तमयपर्य्यन्तं यद्दत्तं यद्दास्ये । तत् स्वर्गद्वारे । अमृतीभूयवः स्वधा । देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः३। सप्त व्याधा दशार्णेषुमृगाः कालंजरे गिरौ । चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे । तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ । श्राद्ध-काले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । मनसा च पितॄन् ध्यात्वा । ततोऽपसव्येन । अद्येहेत्याद्युच्चार्य्य अमुकगोत्राणामस्मत्पितृपितामह-प्रपितामहानाम् । अमुकामुकगोत्राणां सपत्निकानां । वसुरुद्रादित्यस्व-रूपाणां । तथा अमुकगोत्राणां । अस्मन्मातामह । प्रमातामह । वृद्ध-प्रमातामहानां अमुकामुकशर्म्मणां सपत्निकानां । वसुरुद्रादित्य-स्वरूपाणां । अक्षयतृप्त्यर्थं पुरूरवोमाद्रवसंज्ञक । विश्वेदेवपूर्वकं ।

अर्चपिण्डसहित । अमुकपार्वणश्राद्ध । विसृजे । सव्यम् । इदममुक पार्वणश्राद्ध । विधिहीन । कालहीन । वाक्यहीन । श्रद्धाहीन । दक्षिणा हीन । यत् कृत । तत् कृतमस्तु । प्रमादाल्लोभाद्भयाद्वा यन्नकृत । तत् श्रीभगवद्विष्णो ब्राह्मणवचनात् । सर्वं परिपूर्णमस्तु । अस्तु परिपूर्णम् । कुशेन विप्रस्पर्श । पितृब्राह्मणपूर्वकम् । ब्राह्मणानुत्थापयेत् । पितृमाता महब्राह्मणयोरपसव्यनोत्थापनम् । सव्येन । वैश्वदैविकब्राह्मणस्य । ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुत सुदानवऽइन्द्रप्राशूर्भवासचा । इति । ब्राह्मणानुत्थाप्य पात्रान्तरे निधाय । ॐ व्वाजेवाजेवतव्वाजिनो नोनधनेषु विप्राऽअमृताऽऋतज्ञा अस्यमध्व पिवत मादयध्वनृप्तायातपथिभिर्देवयानै । इति विसृज्य कर्मपात्र गृहीत्वा आमावाजस्येत्यनुव्रज्य । प्रदक्षिणीकरणम् । ॐ आमा वाजस्यप्रसवो जगम्यान्मे द्यावापृथिवीविश्वरूपे । आमागताम्पितरामातराचामासोमोऽमृतत्वेनगम्यात् । इत्यनुव्रज्य । प्रदक्षिणीकृत्य । नमस्कुर्यात् । कर्मपात्र विप्रपादाग्रे निनीय । अपसव्येन । नीवीं विसृज्य । पाणिना दीप निर्वाप्य । त्रीन् समुद्रान् समस्तपन् स्वर्गान्पाम्पतिर्वृषऽइष्टकानाम् । पुरोषव्वसान सुकृतस्यलोके तत्र गच्छ यत्र पूर्वेपरता सव्यं विधायाचम्य । हस्ते जल गृहीत्वा । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यून सम्पूर्णता याति सद्यो वन्दे तमच्युतम् । ॐ अच्युताय नम ३ । चतुर्भिश्च २ द्वाभ्या पचभिरेव च हूयते च पुनर्द्वाभ्या तस्मै यज्ञात्मने नम ॥ प्रमादात्कुर्वता कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णो सम्पूर्णं स्यादिति श्रुति ॥ अद्य मे सफल जन्म अद्य मे सफलं तप । अद्य मे गात्राणि सर्वे याता वैकुण्ठदाद्दिवम् ॥ पत्रशाकादि दानेन क्लेशिता यूयमीदृशा । तत्क्लेशमिह संजात विस्मृत्य क्षन्तुमर्हथ । मूक्तोस्तोमजय स्वचत्वापिण्डामाणं च दक्षिणाम् । आह्वानं स्वागतं चार्घं विना च परिवेषणम् ॥ विसर्जनसौमनस्य माशिषप्रार्थनं तथा । पितृमन्यत्क्रचंय प्राचीनावीतिना सदा ॥ दैवपूर्वमिद श्राद्ध पितृपूर्वविसर्जनम् । सर्वकर्मापसव्येन दक्षिणाग्रनवर्तितम् ॥ इति ॥

## गुप्तकाशी गुप्तदान प्रयोग

गुप्तकाश्या पुरावृत्तं तीर्थस्थानमथा शुभा । वरवनायनिवासमध्य

* ( पाल्म ) वाचनात् इति अपनकुशमेवः विसर्जयन् ( प्रतोला ) ... कृत्वा पितृपूर्वविसर्जनम् । ( अन्यत्र ) आमावाजेति मन्त्र ... पठित्वा च प्रदक्षिणम् ।

लोकमङ्गलदायकम् ॥ १ ॥ कर्णयामि समासेन सावधानेन वै शृणु । यच्छ्रुत्वा सर्वपापानि विलय यान्ति यात्रिणाम् ॥ २ ॥ पुराणवचन चेत्थ शिवाराधनमानसैः ॥ सिद्धैस्त स्थापनं पूर्वं कृत सिद्धाश्रम तत ॥ ३ ॥ केचिद्वदन्त्याधुनिका विश्वनाथस्य सङ्गते । यदा यवनराजोऽसौ काशी गन्तु प्रचक्रमे ॥ ४ ॥ तदान्तर्हितो देवो गुप्तकाशी तत स्मृता । न चेत्तद्विना शक्य स्थानाख्यान भवेदिदम् ॥ ५ ॥ कुन्तलश्यामलो मन्ये विनाख्यानेन वै कथम् । न वा पूर्वप्रणीतेषु ग्रन्थेष्वित्यपि दृश्यते ॥ ६ ॥ तस्मान्मन्ये शङ्करेण गङ्गायमुनयोरिह । गुप्ति रूप सुविज्ञाय यदा कृत्वा च मन्दिरम् ॥ ७ ॥ प्रतिष्ठाप्य च भूगाथ तदाख्यायि ततस्त्विदम् । अन्यथा पूर्वग्रन्थेषु कथ नाम न दृश्यते ॥ ८ ॥ स्थानमासाद्य लोकेन धार्मिकेण तथाविध । गुप्तदान च कर्त्तव्य यथाविभवविस्तरैः ॥ ९ ॥ स्वर्णवस्त्रसु निःस्वैर्नारिकेलादिभि फलै । गुप्तदान प्रकर्त्तव्य यात्रासफल मानसैः ॥ १० ॥ आदौ कायिकशुद्ध्यर्थं धेनुदानमपि फलम् । चोत्तम मुनिभि प्रोक्त सर्वदा शुभकर्म्मणि ॥ ११ ॥ एव कृत्वैव यात्रार्थी समाराध्य च विश्वपम् । ययाद्वेवं ततो द्रष्टुं केदारं वर्त्म तत ॥ १२ ॥ एव कृत्वैव यात्रार्थी केदारे लभते शिवम् । निर्धूय सर्वपापानि कृपया शङ्करस्य च ॥ १३ ॥ ततो गुप्तदानकर्ता यात्रार्थी ( र्थिनी वा ) सामग्रीं ( १ ) सम्यक् सम्पाद्य प्रत्यूषे च तत्र गङ्गायमुनयोर्धाराद्वयेन पूजनपूर्वक सङ्कल्पस्नान कुर्यात् । शुद्धवस्त्र परिधाय श्रीविश्वनाथाय नम नम केदारेश्वराय नदरीश्वराय चेति नमस्कृत्य मन्दिरप्राङ्गण एवोपविश्य तीथ पुरोहितकर्तृकाचम्य विष्णु ३ त्रिराचम्य सिद्धम् ३ ॐ अपवित्र पवित्रो वा सर्वावस्था गतोऽपि वा । य स्मरेत्पुण्डरीकाक्ष स बाह्याभ्यन्तर शुचि ॥ इत्यनेन वामहस्तजलमभिमन्त्र्य शिरसि निक्षिपेत् । ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिता । येभूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया । इति भूतशुद्धि सविधाय । अस्य श्री आसनमन्त्रस्य मेरुपृष्ठ ऋषि सुतल छन्द कूर्म्मो देवता आसने विनियोग । ॐ हिरण्यवर्णां सुभगा हिरण्यकश्यपुर्महीं तस्या हिरण्या दापये सत्या अकरं नम । इत्युक्त्वान् ॐ भूर्भुव स्व पृथिवि ! इहागच्छेह तिष्ठ पाद्यादीनि समर्पयामि पृथिव्यै नम सम्पूज्य । ॐ पृथिवि त्वया धृता लोका देवि त्व विष्णुना धृता । त्व च धारय मा भद्रे पवित्र कुरु चासनम् ॥ इति सम्प्रार्थ्य जलपूजन पूर्वक सूर्यं पूजयेत् ततो गणपतिं नमस्कृत्य च शरीरशुद्ध्यर्थं गोदान

[ १ ] सामग्री मुद्रया, रजत, ताम्रइन गाला, घ नी, माला, स्वर्णपात्र तदभाव रजत, तदभावे कांस्यपात्र, अभावे ताम्रपात्र, ग न्ध पुष्पादि ।

कुर्यात् अथवा गोप्रत्याम्नायीभूतं द्रव्यं तीर्थपुरोहिताय दत्त्वा तत्कुर्यात्। ततो गुप्तदानसामग्री पाद्यगन्धाक्षतपुष्पधूपादिभिस्तत्तन्मन्त्रोच्चारणपूर्वकं समर्प्य सङ्कल्पं कुर्यात्–ॐ नमः परमात्मने पुराणपुरुषोत्तमाय श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्याद्य ब्रह्मणो द्वितीये प्रहरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तान्तर्गतगुप्तवाराणस्याः क्षेत्रे हिमवत्पर्वतैकदेशे केदारखण्डान्तर्गतसुमेरुद्रदक्षिणपार्श्वे मन्दाकिन्यास्तटे समीपे वा षष्टिसंवत्सराणां मध्येऽमुकनाम्नि संवत्सरे अमुकायनेऽमुकर्तौ अमुकमासे पक्षे तिथौ वारे नक्षत्रे योगे च अमुकराशिस्थिते सूर्ये चन्द्रे भौमे बुधे गुरौ शुक्रे शनौ राहौ केतौ एवं गुण वशेषणविशिष्टायां तिथौ–अमुकगोत्रोत्पन्न अमुकराशि अमुकवेदाध्यायी अमुकवेदशाखाप्रवरसूत्रादिभियुत अमुकपुत्रोऽमुकपौत्रोऽमुकदेशग्रामवास्तव्योऽहं अमुकशर्मा वर्मा वा गुप्तो वा श्रीकेदारबदरीश्वरादि देवदर्शनार्थी यात्री ममात्मनः सकलदुरितोपशमनार्थं तथेह जन्मनि जन्मान्तरे वा कृतकायिकमानसिकवाचिकपापनिवारणाय त्रिविधतापोपशमनार्थं श्रुतिस्मृतिपुराणोक्तसत्फलावाप्तये सूर्यादिनवग्रहजनितसर्वारिष्टनिवृत्तये राजद्वारे सभादिषु सर्वत्र विजयहर्षादिमनोवाञ्छितप्राप्तये पुत्रपौत्रादिआयुरारोग्यलाभाय च धनधान्यादिसमृद्धये श्रीकेदारबदरीश्वरप्योत्तराखण्डयात्रायामस्याम् गुप्तवाराणस्याञ्चात्र यात्रा सफलीकरणाय गुप्तदानरूपेणेदं हिरण्यमग्निदैवत्यं रजतं चन्द्रदैवतं ताम्रमर्कदैवतं विष्णुदैवतं वा कारयन्तीशदैवत्यं नारिकेलं वनस्पतिदैवत्यं वस्त्रादिकं तत्तदैवत्यं अमुकपुरोहिताय तुभ्यं सम्प्रददे–इति संकल्प्य तद्दानं तत्रत्य तीर्थपुरोहिताय दत्त्वा तदाशीर्वचनं सोभिषेकं लब्ध्वा च विश्वनाथं षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य भक्त्या प्रणम्य क्षमा याचयेत् त्रि परिक्रमेच्चेति शुभम्। इति गुप्तदान।

प्रयोगविधि अत्र शय्यादानकरणमपि महत्फलम्। अत शय्यादानकरणार्थिभिर्याात्रिभिस्तत्प्रयोगविधिरस्यामेव पद्धतौ–अन्यत्रावलोकनीय इति।

## अथ शिवाथर्वशीर्षम्।

( शिर उपनिषत् ) ॐ देवाह वै स्वर्गलोकमायंस्ते रुद्रमपृच्छन् को भवानिति। सोऽब्रवीदहमेकः प्रथममासीद्वर्तामि च नान्य

कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तर प्राविशत्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्च प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहम धश्चोर्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्यहं ऋगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रञ्च वहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वेभ्यो मामेव स सर्व समो यो मां वेद स देवान् वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्मब्राह्मणैश्च गां गोभिर्ब्राह्मणान् ब्राह्मणेन हविर्हविषा आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा। ततो ह वै ते देवा रुद्रमपृच्छन् ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति ॥ १ ॥ ॐ यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ॥ १ ॥ ॐ यो वै रुद्रः स भगवान् यश्च विष्णुः तस्मै वै नमो नमः ॥ २ ॥ ॐ यो वै रुद्रः स भगवान् यश्च स्कन्दस्तस्मै वै नमो नमः ॥ ३ ॥ ॐ यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै० ॥ ४ ॥ यो वै रुद्रः स भगवान् यश्चाग्निस्तस्मै० ॥ ॥ यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै० ॥ ६ ॥ यो वै रुद्रः स भगवान् यश्च सूर्यस्तस्मै० ॥ ७ ॥ यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै० ॥ ८ ॥ यो वै रुद्रः स भगवान् येऽष्टौ ग्रहास्तस्मै० ॥ ९ ॥ यो वै रुद्रः स भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै० ॥ १० ॥ यो वै रुद्रः स भगवान् यश्च भूस्तस्मै० ॥ ११ ॥ यो वै रुद्रः स भगवान् यश्च भुवस्तस्मै० ॥ १२ ॥ यो वै रुद्रः स भगवान् यश्च स्वस्तस्मै० ॥ १३ ॥ यो वै रुद्रः स भगवान् यश्च महस्तस्मै० ॥ १४ ॥ यो वै रुद्रः स भगवान् या च पृथिवी तस्मै० ॥ १५ ॥ यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै ॥ १६ ॥ यो वै रुद्रः स भगवान् या च द्यौस्तस्मै० ॥ १७ ॥ यो वै रुद्रः स भगवान् याश्चापस्तस्मै० ॥ १८ ॥ यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै० ॥ १९ ॥ यो वै रुद्रः स भगवान् यश्च कालस्तस्मै० ॥ २० ॥ यो वै रुद्रः स भगवान् यश्च यमस्तस्मै० ॥ २१ ॥ यो वै रुद्रः स भगवान् यश्च मृत्युस्तस्मै० ॥ २२ ॥ यो वै रुद्रः स भगवान् यच्चामृतं तस्मै० ॥ २३ ॥ यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै० ॥ २४ ॥ यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै ॥ २५ ॥ यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै० ॥ २६ ॥ यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै० ॥ २७ ॥ यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै० ॥ २८ ॥ यो वै रुद्रः स भगवान् यच्च कृष्णं तस्मै ॥ २९ ॥ यो वै रुद्रः स भगवान् यच्च

कृत्स्नं तस्मै० ॥ ३० ॥ यो वै रुद्र स भगवान् यच्च सत्य तस्मै० ॥ ३१ ॥ यो वै रुद्र स भगवान् यच्च सर्वं तस्मै० ॥ ३२ ॥ ७ ॥ भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधात्रिधा वृद्धिस्त्व शान्तिस्त्व पुष्टिस्त्व हुतमहुत दत्तमदत्त सर्वमसर्वं विश्वमविश्वं कृतमकृत परमपर परायणश्च त्वम् । अपामसोममृता अभूमा गन्म ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदराति किमु धूर्तिरमृत मर्त्यस्य सोमसूर्य पुरस्तात्सूक्ष्म पुरुष । सर्वं जगद्धित वा एतदक्षर प्राजापत्य सौम्यं सूक्ष्म पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्य सौम्येन सूक्ष्म सूक्ष्मेण वायव्य वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नम । हृदिस्था देवता सर्वा हृदि प्राणा प्रतिष्ठिता । हृदि त्वमसि यो नित्य तिस्रो मात्रा परस्तु स । तस्योत्तरत शिरो दक्षिणत पादौ य उत्तरत स ओङ्कार य ओङ्कार स प्रणव य प्रणव स सर्वव्यापी य सर्वव्यापी सोऽनन्त योऽनन्तस्तत्तारं यत्तार तच्छुक्ल यच्छुक्ल तत्सूक्ष्म यत्सूक्ष्म तद्वैद्युत यद्वैद्युत तत्पर ब्रह्म यत् पर ब्रह्म स एक य एक स रुद्र यो रुद्र स ईशान य ईशान स भगवान् महेश्वर ॥१॥ अथ कस्मादुच्यते ओङ्कार । यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओंकार । अथ कस्मादुच्यते प्रणव । यस्मादुच्चार्यमाण एव ऋग्यजुसामाथर्वाङ्गिरस ब्रह्मब्राह्मणेभ्य प्रणामयति नामयति च तस्मादुच्यते प्रणव । अथ कस्मादुच्यते सर्वव्यापी । यस्मादुच्चार्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्त । यस्मादुच्चार्यमाण एव तीर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्त । अथ कस्मादुच्यते तार । यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम् । अथ कस्मादुच्यते शुक्ल । यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते सूक्ष्म । यस्मादुच्चार्यमाण एव सूक्ष्म भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युतम् । यस्मादुच्चार्यमाण एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म । यस्मात् परमपर परायणञ्च बृहद् बृहत्या बृंहयति तस्मादुच्यते पर ब्रह्म । अथ कस्मादुच्यते एक य सर्वान् प्राणान् सम्भक्ष्य सम्भक्षणेनाज संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणा प्रत्यञ्च उदञ्च प्राञ्चोऽभिव्रजन्त्येके तेषा सर्वेषामिह सङ्गति साकं

स एकोऽभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः। अथ कस्मादुच्यते रुद्रः। अथ कस्मादुच्यते ईशानः यः सर्वान्देवा २। नीशते ईशानी-भिर्जननीभिश्च शक्तिभिः। अभित्वा शूर नो नुमो दुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्रतस्थुष इति तस्मादुच्यते ईशानः। अथ कस्मादुच्यते भगवान् महेश्वरः। यस्माद्भक्तान् ज्ञानेन भजत्यनुगृह्-णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्म ज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः। तदेतद्रुद्रचरितम् ॥ ४॥ एषोह देवः प्रदिशोऽनु सर्वाः पूर्वोह जातः स उ गर्भे अन्तः स एव जातः स जनिष्यमाणः प्रत्यङ् जना तिष्ठति सर्वतोमुखः। एको रुद्रो न द्वितीयाय तस्मै य इमॅंल्लोकानीशत् ईशनीभिः। प्रत्यङ् जना तिष्ठति चान्तकाले संसृज्य विश्वा भुवनानि गोप्ता॥ यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम्। तमीशानं वरदं देवमीड्यंनिचाय्ये मां शान्तिमत्यन्तमेति। क्षमां हित्वा हेतुजालस्य मूलं बुद्धया सञ्चितं स्थापयित्वा तुरुद्रे। रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशवोनुनायन्तं मृत्यु-पाशान्। तदेतेनात्मन्नेतेनार्धचतुर्थेन मात्रेण शान्तिं संसृजति पशु-पाशविमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्तावर्णेन यस्तां ध्यायते नित्यम् स गच्छेद् ब्रह्मपदम्। या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णवर्णेन यस्तां ध्यायते नित्यम् स गच्छेद्वैष्णवं पदम्। या सा तृतीया मात्रा ईशानदेवत्या कपिलावर्णेन यस्तां ध्यायते नित्यम् स गच्छेदैशानं पदम्। या सार्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरविशुद्धा स्फटिकसन्निभवर्णेन यस्तां ध्यायते नित्यम् स गच्छेत्पदमनामयम्। तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति। वालाग्रमात्रं हृदयस्य मध्ये विश्वंदेवं जातरूपं वरेण्यम्। तमात्मस्थ येऽनुपश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम्। यस्मिन् क्रोधं याञ्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतुजालस्य मूलं। बुद्धया सञ्चितं स्थाप-यित्वा तु रुद्रे रुद्रमेकत्वमाहुः रुद्रो हि शाश्वतेन वैर्जे पुराणे नेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरिति भस्म जलमिति भस्म व्योमेति भस्म सर्वं ह्वा इदं भस्म मन एतानि चक्षुंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्म। नाङ्गानि संस्पृशेत् तस्माद् ब्रह्म तदेतत्पाशुपतं पशुपाशविमो-क्षणाय ॥ ५॥ योऽग्नौ रुद्रोयोऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश। य इमा विश्वाभुवनानि चक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये। यो रुद्रोऽ-ग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीर्वीरुध आविवेश। यो रुद्र इमा

विश्वा भुवनानि चक्लृपे तस्मै रुद्राय वै नमो नमः ॥ यो रुद्रोऽप्सु यो रुद्र ओषधीषु यो रुद्रो वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्त्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमो नमः । मूर्धानमस्य संसेव्य अथर्वा हृदयश्च यत् । मस्तिष्कादूर्ध्वं प्रेरयत्यव मानोऽधिशीर्षतः । तद्वा अथर्वणःशिरो देवकोशः समुज्झितः । तत् प्राणोऽभिरक्षति शिरोऽन्तमथो मनः । न च दिवो देवजनेन गुप्ता नचान्तरिक्षाणि न च भूम इमाः । यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्न परं किञ्च नास्ति । न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत् । सहस्रपादेकमूर्ध्ना व्याप्तं स एवेदमावरीवर्ति भूतम् । अक्षरात् सञ्जायते कालः कालात् व्यापक उच्यते । व्यापको हि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजाः । उच्छ्वसितेतमो भवति तमस आपोऽप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कारः ओङ्कारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति । अर्चयन्ति तपः सत्यं मधु क्षरन्ति यद्ध्रुवम् । एतद्धि परमं तपः । आपो ज्योति रसोऽमृतं ब्रह्म भूर्भुवः स्वरों नम इति ॥ ६ ॥ य इदमथर्वशिरो ब्राह्मणोऽधीते । अश्रोत्रियः श्रोत्रियो भवति । अनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वैर्वेदैरनुध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः क्रतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । स चक्षुषः पङ्क्तिं पुनाति । आसप्तमात् पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः स पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति । तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यमों सत्यम् ॥ इति ॥

## अथ शिवापराधक्षमापनस्तोत्रम् ।

अथ कर्मप्रसङ्गात्कलयति कलुषं मातृकुक्षौ स्थित मां विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ॥ यद्यद्वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुं क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ॥ १ ॥ बाल्ये दुःखातिरेकान्मललुलितवपुः स्तन्यपाने पिपासा नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति ॥ नानारोगादिदुःखाद्रुदनपरवशः शंकरं न स्मरामि क्षन्तव्यो मेऽपराधः

शिव ३ भो श्रीमहादेव शंभो ॥२॥ प्रौढ़ोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसंधौ दष्टो नष्टो विवेकः सुतधनयुवति स्वादु सौख्ये निषण्णः ॥ शैवी चिंताविहीनं मम हृदयमहो मानगर्वाधिरूढं क्षंतव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ॥३॥ वार्धक्ये चेन्द्रियाणां विगतगतिमतिश्चाधिदैवादितापैः पापै रोगैर्वियोगैस्त्वनवसितवपुः प्रौढ़िहीनं च दीनम् ॥ मिथ्या मोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं क्षंतव्यो मेऽपराधः शिव शिव शिव० ॥४॥ नो शक्यं स्मार्तकर्मप्रतिपद गहन प्रत्यवायाकुलाख्यं श्रौते वार्ता कथमें द्विजकुलविहिते ब्रह्ममार्गे सुसारे ॥ ज्ञातो धर्मो विचारैः श्रवणमननयोः किं निदिध्यासितव्यं क्षन्तव्यो मेऽपराधः शिव शिव शिव० ॥५॥ स्नात्वा प्रत्यूषकाले स्नपनविधिकृते नाहृतं गांगतोयं पूजार्थं वा कदाचिद्बहुतरगहनात्खण्डबिल्वीदलानि ॥ नानीता पद्ममाला सरसि विकसिता गन्धपुष्पैस्त्वदर्थं क्षंतव्यो मेऽपराधः शिव शिव शिव० ॥६॥ दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः स्नापितं नैव लिंगं नो लिप्तं चन्दनाद्यैः कनकविरचितं पूजितं न प्रसूनैः ॥ धूपः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः क्षन्तव्यो मेऽपराधः शिव शिव० ॥७॥ ध्यात्वा चित्ते शिवाख्यप्रचुरतरधनं नैव दत्तं द्विजेभ्यो हव्यं ते लक्षसंख्यै हुतवहवदने नार्पितं बीजमन्त्रैः ॥ नो तप्तं गांगतीरे व्रतजपनियमै रुद्रजाप्यैर्न वेदैः क्षन्तव्यो मेऽपराधः शिव शिव० ॥८॥ स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुण्डले सूक्ष्ममार्गे शान्ते स्वान्ते प्रलीने प्रकटित विभवे ज्योतिरूपे पराख्ये ॥ लिंगज्ञे ब्रह्मवाक्ये सकलतनुगतं शङ्करं न स्मरामि क्षन्तव्यो मेऽपराधः शिव शिव० ॥९॥ नग्नो निःसंगशुद्धस्त्रिगुणविरहितो ध्वस्तमोहांधकारो नासाग्रे न्यस्तदृष्टिर्विदितभवगुणो नैव दृष्टः कदाचित् ॥ उन्मन्यावस्थया त्वां विगतकलिमलं शंकरः न स्मरामि क्षन्तव्यो मेऽपराधः शिव० ॥१०॥ चन्द्रोद्भासितशेखरे स्मरहरे गंगाधरे शङ्करे सर्पैर्भूषितकंठकर्णविवरे नेत्रोत्थ वै वानरे ॥ दंतित्वं कृतसुन्दरांबरधरे त्रैलोक्यसारे हरे मोक्षार्थं कुरु चित्तवृत्तिमखिलामन्यैस्तु किं कर्मभिः ॥११॥ किं वानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ॥ ज्ञात्वैतत्क्षणभंगुरं सपदि रे त्याज्यं मनो दूरतः स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥१२॥ आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनम् प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ॥ लक्ष्मीस्तोयतरंगभंगचपला विद्युच्चलं जीवितं तस्मात्त्वां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥१३॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् । विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्री महादेव शम्भो

॥४०॥ इति श्रीमच्छंकराचार्यविरचितं शिवापराधक्षमापनस्तोत्रं सम्पूर्णम् ॥८॥

## अथ प्राणप्रतिष्ठा :

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य । ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामानि छन्दांसि । जगत्सृष्टिः प्राणशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । प्राणप्रतिष्ठापने विनियोगः—ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः शिरसि । ऋग्यजुःसामच्छन्दोभ्यो नमः—मुखे । जगत्सृष्ट्यै प्राणशक्त्यै नमः—हृदये । आँ बीजाय नमः लिङ्गे । ह्रीं शक्तये नमः—पादयोः । क्रों कीलकाय नमः—सर्वाङ्गेषु । एवं न्यास कृत्वा । ॐ अं, कं, खं, गं, घं, ङं, आं—पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां-नमः । ॐ इं, चं, छं, जं, झं, ञं, ईं—शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां-नमः । ॐ उं, टं, ठं, डं, ढं, णं, ऊं—त्वक्चक्षुःश्रोत्रजिह्वाघ्राणात्मने मध्यमाभ्यां-नमः । ॐ एं, तं, थं, दं, धं, नं, ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां नमः । ॐ ओं, पं, फं, बं, भं, मं, औं, वचनादानगमनानन्दविसर्गात्मने नमः । कनिष्ठिकाभ्यां-नमः । ॐ अं, यं, रं, लं, वं, शं, षं, सं, हं, क्षं, अः—मनोबुद्ध्यहङ्कारचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यां-नमः । एवं हृदयादि । ( नाभेरारभ्य पादान्तम् । आँ, इति, पाशबीजम् । हृदयादारभ्य नाभ्यन्तं ह्रीं, इति, शक्तिबीजम् । ( मस्तकादारभ्य हृदयान्तम् 'क्रों' इति, अङ्कुशबीजमुन्यसेत् ॥ अथध्यानम्—रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान् बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ ( शिरसि तथा हृदि करं दत्त्वा )-ॐ आँ, ह्रीं, क्रों, यं, रं, लं, वं, शं, षं, सं, हं, सः—सोऽहम् प्राणा इह प्राणाः । ॐ, आँ, ह्रीं, क्रों, यं, रं, लं, वं, शं, षं, सं, हं, सः—जीव इह स्थितः । ॐ आँ, ह्रीं, क्रों, यं, रं, लं, वं, शं, षं, सं, हं, सः—सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थानीहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॐ१, ॐ२, ॐ३, ॐ४, ॐ५, ॐ६, ॐ७, ॐ८, ॐ९, ॐ१०, ॐ११, ॐ१२, ॐ१३, ॐ१४, ॐ१५,-इति प्रणवस्य पञ्चदशावृत्ती. ( कृत्वा ) अनेन मम देहस्य पञ्चदश संस्काराः सम्पद्यन्ताम् । इत्युक्त्वा पश्चात् ( ॐ नमो भगवते रुद्राय )

इति त्रीन्प्राणायामान्कृत्वा ॥ यथा पर्वतधातूनां दोषान्दहति पावकः। एवमन्तर्गतं पापं प्राणायामेन दह्यते ॥ इति प्राणप्रतिष्ठा।

## अथ महामृत्युञ्जयमन्त्रजपविधिः।

सङ्कल्प.—अद्येत्यादि पूर्वोच्चारित एवं गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं यजमानस्य शरीरेऽमुकपीडानिराश-द्वारा सद्यः आरोग्यप्राप्त्यर्थं श्रीमहामृत्युञ्जय-देवताप्रीत्यर्थं श्रीमहामृत्युञ्जयमन्त्रजपमहं करिष्ये—ॐ अस्य श्रीमहा-मृत्युञ्जयमन्त्रस्य। वसिष्ठ ऋषिः। श्रीमृत्युञ्जय रुद्रो देवता। अनुष्टुप् छन्दः। हौं वीजम्। जूं शक्तिः। सः कीलकम्। मृत्युञ्जयप्रीत्यर्थे जपे विनियोगः। न्यासाः—वसिष्ठऋषये नमः शिरसि। अनुष्टुप्छन्दसे नमः, मुखे। श्रीमहामृत्युञ्जयरुद्रदेवतायै नमः हृदये हौं बीजाय नमः गुह्ये। जूं शक्तये नमः पादयोः। सः कीलकाय नमः सर्वाङ्गेषु। ॐ त्र्यम्बकं अङ्गुष्ठाभ्यां नमः। ॐ यजामहे तर्जनीभ्यां नमः। ॐ सुगन्धिं पुष्टिवर्द्धनं मध्यमाभ्यां नमः। ॐ उर्वारुकमिव बन्धनात् अनामिकाभ्यां नमः। ॐ मृत्योर्मुक्षीय कनिष्ठिकाभ्यां नमः। ॐ मामृतात् करतलकरपृष्ठाभ्यां नमः॥ एवं हृदयादि ॥ ध्यानम्—चन्द्रो-द्भासितमूर्धजं सुरपतिं पीयूषपात्रं वहद्धस्ताब्जेन दधत्सुदिव्यममलं *हास्यास्यपङ्करुहम्। सूर्येन्दग्निविलोकनं करतलैः पाशाक्षसूत्राङ्कुशां*भोजं विभ्रतमक्षयं पशुपतिं मृत्युञ्जयं तं स्मरे ॥ १॥ मानसोपचारैः सम्पूज्य ॥ ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि। ॐ हं आकाशात्मकं पुष्पं समर्पयामि। ॐ यं वाय्वात्मकं धूपं समर्पयामि। ॐ रं तेजआत्मकं दीपं दर्शयामि। ॐ वं अमृतात्मकं नैवेद्यं समर्पयामि। ॐ सं सर्वात्मकं मन्त्रपुष्पं समर्पयामि ॥ मन्त्रोद्धारः—ॐ हौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यम्बकं यजामहे० ॥ स्वः ॐ भुवः ॐ भूः ॐ भूः ॐ सः ॐ जूं ॐ हौं ॐ। उत्तरन्यासं कृत्वा ॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर॥ *मृत्युञ्जय महारुद्र त्राहि मां शरणागतम्। जन्ममृत्युजरारोगैः* पीडितं कर्मबन्धनैः ॥ अर्पणम्—अनेन महामृत्युञ्जयपाठ्येन कर्मणा श्रीमहामृत्युञ्जयः—प्रीयतां न मम ॥ अथ षट्प्रणवयुक्त मृत्युञ्जय-महामन्त्रः—सङ्कल्पं पूर्ववत्। ॐ हौं जूं सः ॐ भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनात्० ॐ सः जूं हौं ॐ स्वः भुवभूः ॥ अर्पणम्—पूर्ववत् ॥ इति षट्प्रणवयुक्त-

मृत्युञ्जयमहामन्त्रः ॥ एवं जपानन्तरं देवपूजनं कृत्वा ॥ प्रार्थना—मृत्युञ्जय महादेव त्राहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड । इति विज्ञाप्य देवेशं जपेन्मन्त्रं तु त्र्यम्बकम् ॥ जपनिवेदनम्—जपसाङ्गता-सिद्ध्यर्थं यथाकामनया द्रव्येण दशांशहोमतर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ॥ इति महामृत्युञ्जयमन्त्रजपविधिः ॥

## अथ शिवपूजापद्धतिः ।

अथ यन्त्रोद्धारः ॥ अनुक्तकल्पे यन्त्रं तु लिखेत्पद्मदलाष्टकम् । षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितम् । अथ मन्त्रोद्धारः । नमस्कारं समुद्धृत्य वामनेत्रसमन्वितम् । वारुणं सुरवृन्दं च वायुं ललाट संयुतम् । अनूपचाक्षरं मन्त्रं पञ्चाकामफलप्रदम् । प्रणवादिर्यदा देवि तदा मंत्रः षडक्षरः इति । अथ मन्त्रः ॥ ओ३म् नमः शिवाय, इति मूलमन्त्रः । अथ पूजाप्रयोगः । सामग्रीं संपाद्य नित्यकर्म विधाय, नववस्त्रं परिधाय ओ३म् विष्णुर्विष्णुर्हरिर्हरिः ३ त्रिराचम्य ॐ सिद्धं ३ ॐ नमो भगवते रुद्रायेति प्राणानायम्य, कर्मपात्रजले, गङ्गाद्यावाहनं कुर्यात् । गन्धपुष्पाक्षतैश्च सम्पूज्य तेन जलेनाऽऽत्मानं सम्प्रोक्ष्य ॥ ॐ अपवित्रः पवित्रो वा सर्वावस्थां० । ॐ पुण्डरीकाक्षम्पुनातु ३ । नमस्कारः । दक्षिणे० ॐ सरस्वत्यै नमः । ॐ शंखनिधये नमः । वामे, ॐ लक्ष्म्यै नमः । ॐ पद्मनिधये नमः । आसनशुद्धिः । ॐ पृथ्वीत्वयेति-मन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसनोपवेशने विनियोगः ॥ ॐ हिरण्यवर्णा सुभगा हिरण्यकशिपुर्महि । तस्या हिरण्यदापये सत्या अक्षरं नमः । इत्यक्षतान् क्षिपेत् । पुनः ॐ विश्वशक्त्यै नमः । ॐ महाशक्त्यै नमः । ॐ कूर्मासनाय नमः । ॐ योगासनाय नमः । ॐ अनन्तासनाय नमः । ॐ विमलासनाय नमः । मध्ये, ॐ परमसुखास-नाय नमः । ॐ भूर्भुवस्वः आत्मासनाय इति मन्त्रेण पुष्पादिनाऽऽत्मन आसनदानम् ॥ पाद्यादिभिर्भूमिं, आसनं च सम्पूज्य ॥ प्रार्थयेत् ॥ ॐ पृथिव्त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ॐ पृथिव्यै नमः ॥ ततः शिखाबन्धनम् ॥ ॐ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने । तिष्ठ देवि शिखामध्ये, चामुण्डे ह्यपराजिते । विष्णोर्नाम सहस्रेषु, शिखाबन्धं करोम्यहम् ॥ अथ दिग्बन्धनम् ॥ ॐ अपसर्पन्तु ते भूता ये भूताः भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया । इति भूतादीनुत्सार्य ॥ ॐ

पशुपतये ऽः पुरीतत् ॥ ३ लोमभ्य ऽः स्वाहा लोमभ्य ऽः स्वाहा त्वचे
स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्य ऽः स्वाहा मेदोभ्य
ऽः स्वाहा । मा ᳪ सेभ्यः स्वाहा मा ᳪ सेभ्य ऽः स्वाहा स्नावभ्य ऽः
स्वाहा स्नावभ्य ऽः स्वाहा स्थभ्य ऽः स्वाहा स्थभ्य ऽः स्वाहा म
ज्जभ्य ऽः स्वाहा मज्जभ्य ऽः स्वाहा रेतसे स्वाहा पायवे स्वाहा ॥ ४ ॥
आयासाय स्वाहा प्रायामाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्या-
साय स्वाहा ॥ शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ॥ ५ ॥
तपसे स्वाहा । तप्यते स्वाहा तप्यमानाय स्वाहा । तप्ताय स्वाहा घर्माय
स्वाहा । निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥ ६ ॥ यमाय
स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ॥ ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा
विश्वेभ्यो देवेभ्य ऽः स्वाहा द्यावापृथिवीभ्या ᳪ स्वाहा ॥ ७ ॥ इति
रुद्रे सप्तमोऽध्यायः ॥ ७ ॥

हरि ÷ ॐ । वाजश्च । मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे
धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुति-
श्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पताम् ॥ १ ॥ प्राणश्च ।
मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म ऽ आधीतं च मे वाक्च मे
मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥ २ ॥
ओजश्च । मे सहश्च म ऽ आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गा-
नि च मेऽस्थीनि च मे परू ᳪ षि च मे शरीराणि च म ऽ आयुश्च मे जरा च मे यज्ञे
न कल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यं च म ऽ आधिपत्यं च मे मन्युश्च मे भामश्च
मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च
मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥ ४ ॥
(न०) ॥ सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च
मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च
मे यज्ञेन कल्पन्ताम् ॥ ५ ॥ ऋतं च । मेऽमृतं च मे यक्ष्मं च मेऽनामयच्च मे जीवा-
तुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च मे सूषा-
श्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥ ६ ॥ यन्ता च । मे धर्त्ता च मे
क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च
मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च मे यज्ञेन कल्पन्ताम् ॥ ७ ॥

शर्म्म । मेमयश्चमे प्रियञ्चमेऽनुकामश्चमेकामश्चमेसौमनसश्चमेभग-
श्चमेद्रविणञ्चमेभद्रञ्चमेश्रेयश्चमेवसीयश्चमेयशश्चमे यज्ञेनकल्प-
न्ताम् ॥ ८ ॥ (न०) । ऊर्क्च । मे सूनृताचमे पयश्चमेरसश्चमेघृतञ्च
मेमधुचमेसग्धिश्चमे सपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽऔद्भि-
द्यञ्चमेयज्ञेनकल्पन्ताम् । ९ ॥ रयिश्च । मेरायश्चमेपुष्टञ्चमेपु-
ष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेऽक्षितञ्चमेऽन्नञ्चम
ऽक्षुच्चमेयज्ञेनकल्पन्ताम् ॥ १० ॥ वित्तञ्च । मेवेद्यञ्चमेभूतञ्चमेभविष्य-
च्चमे सुगञ्चमेसुपथ्यञ्चम ऽऋद्धञ्चम ऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमेम-
तिश्चमसुमतिश्चमेयज्ञेनकल्पन्ताम् ॥ ११ ॥ व्रीहयश्च । मेयवाश्चमेमा-
षाश्चमेतिलाश्चमेमुद्गाश्च खल्वाश्चमे प्रियङ्गवश्चमेऽणवश्चमे श्यामा-
काश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञेन कल्पन्ताम् ॥ १२ ॥
(न०) अश्माच । मे मृत्तिकाचमेगिरयश्चमे पर्वताश्चमेसिकताश्च व-
नस्पतयश्चमे हिरण्यञ्चमेऽयश्चमेश्यामञ्चमे लोहञ्चमेसीसञ्चमेत्र-
पुचमेयज्ञेनकल्पन्ताम् ॥ १३ ॥ अग्निश्च । मऽआपश्चमेवीरुधश्चम
ऽओषधयश्चमेकृष्टपच्याश्चमे ऽकृष्टपच्याश्चमेग्राम्याश्चमेपशवऽआ-
रण्याश्चमेवित्तञ्चमेवित्तिश्चमे भूतञ्चमेभूतिश्च मेयज्ञेनकल्पन्ताम्
॥ १४ ॥ वसुच । मेवसतिश्चमेकर्म्मचमेशक्तिश्चमेऽर्थश्चम
ऽएमश्चमऽइत्याचमेगतिश्चमे यज्ञेन कल्पन्ताम् ॥ १५ ॥ (न०) ॥
अग्निश्च । म ऽइन्द्रश्चमेसोमश्चम ऽइन्द्रश्चमे सविताचमऽइन्द्र-
श्चमेसरस्वती चमऽइन्द्रश्चमेपूषाचमऽइन्द्रश्चमेबृहस्पतिश्चमऽइन्द्रश्च
मे यज्ञेनकल्पन्ताम् ॥ १६ ॥ मित्रश्च । मऽइन्द्रश्चमेवरुण-
श्चमऽइन्द्रश्चमे धाताचमऽइन्द्रश्चमेत्वष्टाचमऽइन्द्रश्चमेमरुतश्चमऽइन्द्र-
श्चमेविश्वेचमेदेवाऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥ १७ ॥ पृथिवीच ।
मऽइन्द्रश्चमेऽन्तरिक्षञ्चमऽइन्द्रश्चमे द्यौश्चमऽइन्द्रश्चमेसमाश्चम-
ऽइन्द्रश्चमेनक्षत्राणि चमऽइन्द्रश्चमेदिशश्चमऽइन्द्रश्चमेयज्ञेनकल्प-
न्ताम् । १८ ॥ [ न० ] ॥ अंशुश्च । मेरश्मिश्चमेऽदाभ्य-
श्चमेधिपतिश्चमऽउपांशुश्चमेऽन्तर्यामश्चम ऽऐन्द्रवायवश्च-
मेमैत्रावरुणश्चमऽआश्विनश्चमेप्रतिप्रस्थानश्च मेशुक्रश्चमेमन्थीच-
मेयज्ञेनकल्पन्ताम् ॥ १९ ॥ आग्रयणश्च । मेवैश्वदेवश्चमेध्रु-

वश्र्चमे वैश्श्वा नुरश्र्चमऽऐन्द्राग्निश्र्चमे महावैश्श्वदेवश्र्च मे मरुत्त्वतीयाश्र्चमेनिष्क्केवल्यश्र्चमे सावित्रश्र्चमेसारस्वतश्र्चमेपात्क्नीवतश्र्च मेहारियोजनश्र्चमेयज्ञेनकल्पन्ताम् ॥ २० ॥ स्रु चश्र्च मे चमसाश्र्चमे व्वायव्व्यानि चमेद्रोणकलशश्र्चमे ग्रावाणश्र्चमेधिषवणेचमेपूतभृच्चमऽआवनीयश्र्चमेवेदिश्र्चमे बर्हिश्र्चमेवभृथश्र्चमे स्वगाकारश्र्च मेमज्ञेनकल्पन्ताम ॥ २१ ॥ [ न० ] ॥ अग्निश्र्च । मेघर्म्मश्र्चमेर्क्कश्र्चमेसूर्य्यश्र्चमेप्प्राणश्र्च मेश्श्वमेधश्र्चमेपृथिवीचमे दितिश्र्चमे दितिश्र्चमेद्यौश्र्चमेड गुलय ऽः शक्क्वरयोदिशश्र्चमे यज्ञे न कल्पन्ताम् ॥ २२ ॥ व्व्रतञ्च । मऽऋत वश्र्चमे तपश्र्चमे सव्वत्सरश्र्चमेहोरात्रेऽऊर्व्वष्ठीवे वृहद्रथन्तरेचमेयज्ञे नकल्पन्ताम् ॥ २३ ॥ [ न० ] । एकाच । मेतिस्रश्र्चमे तिस्रश्र्चमेपञ्चचमेपञ्चचमेसप्प्तचमे सप्प्तचमेनवचमे नवचमऽएकादशचमऽएकादशचमे त्रयोदशचमे त्रयोदशचमे पञ्चदशमे पञ्चदशचमेसप्तदशचमे सप्तदशचमे नवदशचमेनवदशचमऽएकविं छ शतिश्र्चमऽएकविं छ शतिश्र्चमेत्रयोविंछशतिश्र्च मेत्रयोविं छ शतिश्र्चमेपञ्चविं छ शतिश्र्चमेपञ्चविं छ शतिश्र्चमेसप्प्तविं छ शतिश्र्चमे सप्तविं छ शतिश्र्चमे नवविं छ शतिश्र्चमेनवविं छ शतिश्र्चमऽएकत्रिं छ शच्चमऽएकत्रिं छ शच्चमेत्रयस्त्रिं छ शच्चमेयज्ञे नकल्पन्ताम् ॥ २४ ॥ [ न० ]॥ चतस्रश्र्च । मेष्ट्टौचमेष्ट्टौचमे द्वादशचमे द्वादशचमेषोडशचमेषोडशमेविं छ शतिश्र्चमेवि छ शतिश्र्चमेचतुर्विं छ शतिश्र्चमे चतुर्विं छ शतिश्र्चमेष्टाविं छ शतिश्र्चमेष्टाविं छ शतिश्र्चमेद्वात्रिं छ शच्च मेद्वात्रिं छ शच्चमेषट्त्रिं छ शच्चमेषट्त्रिं छ शच्चमेचत्वारिं छ शच्चमेचत्वारिं छ शच्चमेचतुश्र्चत्वारिं छ शच्चमेचतुश्र्चत्वारिं छ शच्चमेष्टाचत्वारिं छ शच्चमेयज्ञे नकल्पन्ताम् ॥ २५ ॥ [ न० ]॥ त्र्यविश्र्च । मेत्र्यवीचमेदित्त्यवाट्चमेदित्त्यौहीचमेपञ्चाविश्र्च चमपञ्चावीचमेत्रिवत्सश्र्चमे त्रिवत्साचमेतुर्य्यवाट्चमेतुर्य्यौहीचमेयज्ञेनकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्च । मेपष्ठौहीचमऽउक्षाच मेव्वशाचमऽऋषभश्र्चमेव्वेहश्र्चमेनड्वांश्र्चमेधेनुश्र्चमेयज्ञेनकल्पन्ताम् ॥ २७ ॥ [ न० ] व्वाजाय स्वाहा प्प्रसवाय स्वाहापिजाय स्वाहाक्क्रतवेस्वाहाव्वसवेस्वाहाहर्प्पतयेस्वाहा

हान्हेमुग्धाय स्वाहामुग्धायवैन ६ शिनाय स्वाहाविन ६ शिने ऽ-
आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्यपतये स्वाहाधिपतये
स्वाहाप्रजापतये स्वाहा ॥ इयन्ते राण्मित्राय यन्तासि यमन ऽऊर्जेत्वा वृ-
ष्ट्यै त्वा प्रजानान्त्वाधिपत्याय ॥ २८ ॥ आयुर्यज्ञेन । कल्पताम्प्राणो
यज्ञेनकल्पताञ्चक्षुर्यज्ञेनकल्पता ऽः श्श्रोत्रंयज्ञेनकल्पतांवाग्यज्ञेन
कल्पताम्मनोयज्ञेनकल्पता मात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेन कल्पता-
ञ्ज्योतिर्यज्ञेनकल्पता ऽः स्वर्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्पतांयज्ञोयज्ञे-
नकल्पताम् ॥ स्तोमश्चयजुश्च ऽऋक्चसामचबृहच्चरथन्तर ञ्च ॥
स्वर्देवाऽअगन्ममामृताऽअभूमप्रजापते ऽः प्रजाऽअभूमवेट्स्वाहा ॥
२९ ॥ इति रुद्रे अष्टमोऽध्यायः ॥ ८ ॥

हरिः ॐ । ऋचंवाचम्प्रपद्येमनोयजु ऽः प्रपद्ये
सामप्राणम्प्रपद्येचक्षु ऽः श्रोत्रम्प्रपद्ये ॥ वागोजः सहौजो
मयिप्राणापानौ ॥ १ ॥ यन्मेछिद्रञ्चक्षुषोहृदयस्यमनसो-
वातितृण्णम्बृहस्पतिर्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्प-
तिः ॥ २ ॥ भूर्भुवः ऽः स्वः । तत्सवितुर्वरेण्यम्भर्गोदेवस्यधी
महि ॥ धियोयोनः प्रचोदयात् ॥ ३ ॥ कयानश्चित्र ऽआभुवदूती-
सदावृधः ऽः सखा ॥ कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वा । सत्योमदा-
नाम्म ६ हिष्ठोमत्सदन्धस ऽः ॥ दृढाचिदारुजेवसु ॥ ५ ॥ अभीषुण ऽः ।
सखीनामविताजरितॄ णाम् ॥ शतम्भवास्यूतिभिः ॥ ६ ॥ कयात्वन्न-
ऽऊत्याभिप्रमन्दसेवृषन् ॥ कयास्तोतृभ्यऽआभर ॥ ७ ॥ इन्द्रोविश्व-
स्यराजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुष्पदे ॥ ८ ॥ शन्नोमित्र ऽः
शंवरुण ऽः शन्नोभवत्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्पति ऽः शन्नोविष्णु-
रुरुक्रम ऽः ॥ ८ ॥ शन्नोवातः । पवता ६ शन्नस्तपतुसूर्य्यः ॥
शन्न ऽः कनिक्रदद्देव ऽः पर्जन्योऽअभिवर्षतु ॥ १० ॥ अहानिशम्भ-
वन्तुन ऽः श ६ रात्री ऽः प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभवतामव-
ोभि ऽः शन्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणावाजसातौ-
शमिन्द्रासोमासुविताय शंय्यो ऽः ॥ ११ ॥ शन्नोदेवीरभिष्टयऽआपोभवन्तु-
पीतये ॥ शंय्योरभिस्रवन्तुन ऽः ॥ १२ ॥ स्योनापृथिवि । नोभवान्नृक्षरा-
निवेशनी ॥ यच्छान ऽः शर्म्मसप्रथाः ॥ १३ ॥ आपोहि । ष्ठामयोभुव-

स्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १४ ॥ योवं + शिवतमोरस-स्तस्यभाजयतेहनं ÷ ॥ उशतीरिवमातर ÷ ॥ १५ ॥ तस्माऽअरंगमाम-वोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचन ऽः ॥ १६ ॥ द्यौ ऽः शान्ति-रन्तरिक्षं छ शान्ति ÷ पृथिवीशान्तिराप ऽः शान्तिरोषधय ऽः शान्ति ÷ ॥ वनस्पतयऽः शान्तिर्विश्वेदेवा ऽः शान्तिर्ब्रह्मशान्ति ऽः सर्वं छ शान्ति ऽः शान्तिरेवशान्ति ऽः सामाशान्तिरेधि ॥ १७ ॥ दृतेद छ हमा-मित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम् ॥ मित्रस्याहञ्चक्षुषा सर्वाणि भूतानिसमीक्षे ॥ मित्रस्यचक्षुषा समीक्षामहे ॥ १८ ॥ दृतेद छ हमा । ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्ते सन्दृशिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतय ÷ पावकोऽ अस्मभ्यं ऽ शिवोभव ऽ ॥२०॥ नमस्ते अस्तुविद्युतेनमस्तेस्तन-यित्नवे ॥ नमस्तेभगवन्नस्तुयत ऽः स्व ÷ समीहसे ॥ २१ ॥ यतोयत ऽः समीहसेततोनोऽअभयंकुरु ॥ शन्न ÷ कुरुप्रजाभ्योभयन्न ऽः पशुभ्यं ÷ ॥ २२ ॥ सुमित्रियानऽआपऽओषधय ऽः सन्तुदुर्मित्रियास्तस्मै सन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्म ऽः ॥ २३ ॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरद ÷ शतञ्जीवेमशरद ÷ शत छ शृणुयामशरद ÷ शतम्प्रब्रवामशरद ÷ शतमदीना ऽः स्यामशरद ÷ शतम्भूयश्चशरद ÷ शतात् ॥ २४ ॥ इति रुद्रे शान्त्यध्यायः ॥ ६ ॥

## अथ रुद्रे स्वस्तिप्रार्थनामन्त्राऽध्याय;

हरि ÷ ओं स्वस्तिनऽइन्द्रोवृद्धश्रवा ऽः स्वस्तिनं ÷ पूषाविश्ववेदा ऽः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमि ऽः स्वस्तिनो बृहस्पतिर्दधातु ॥ १ ॥ ओं पय ÷ पृथिव्यांपय-ऽओषधीषुपयोदिव्यन्तरिक्षेपयोधा ऽः ॥ पयस्वती प्रदिशं ÷ सन्तुमह्यम् ॥ २ ॥ ओं विष्णोरराटमसिविष्णो ऽः श्नप्त्रेस्थोविष्णो ऽः स्यूरसि विष्णोर्ध्रुवोसि ॥ वैष्णवमसि विष्णवेत्वा ॥ ३ ॥ ओं अग्निर्देवतावातोदेवतासूर्योदेवता चन्द्रमादेवतावसवोदेवतारुद्रादेवता दित्या देवतामरुतोदेवताविश्वेदे-

देवादेववाङ्बृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ ४ ॥ ॐ सद्योजातं प्रपद्यामिसद्योजातायवैनमोनमः ऽ ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवा-यनमः ऽ ॥ ५ ॥ वामदेवायनमोज्येष्ठायनमः ऽ श्रेष्ठायनमोरुद्रायनमः ऽः कालायनमः ऽः कलविकरणायनमोबलविकरणायनमोबलायनमोबल-प्रमथनायनमः ऽः सर्वभूतदमनायनमोमनोन्मनायनमः ऽः ॥ ६ ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्य ऽः ॥ सर्वेभ्य ऽः सर्वशर्वेभ्योनमः-स्तेऽअस्तुरुद्ररूपेभ्य ऽः ॥ ७ ॥ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रः प्रचोदयात् ॥ ८ ॥ ईशान ऽः सर्वविद्यानामीश्वर ऽः सर्व-भूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्माशिवोमेऽअस्तुसदाशिवोम् ॥ ९ ॥ ॐ शिवोनामासिस्वधितिस्तेपिता नमस्तेऽअस्तुमामाहिंसी ऽः ॥ निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वाय-सुवीर्याय ॥ १० ॥ ॐ विश्वानिदेवसवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ११ ॥ ॐ द्यौ ऽः शान्तिरन्तरिक्ष ᳪ शान्तिः पृथिवीशान्तिराप ऽः शान्तिरोषधय ऽः शान्तिः ॥ वनस्-पतय ऽः शान्तिर्विश्वेदेवा ऽः शान्तिर्ब्रह्मशान्ति ऽः सर्व ᳪ शान्ति ऽः शान्तिरेवशान्ति ऽः सामाशान्तिरेधि ॥ १२ ॥ ॐ सर्वेषांवा-एषवेदानां ᳪ रसोयत्सामसर्वेषामेवैनमेतद्वेदाना ᳪ रसेनाभिषिञ्चति ॥ १३ ॥ इति स्वस्तिप्रार्थनामन्त्राऽध्यायः ॥

ॐ शान्तिः शान्तिः सुशान्तिर्भवतु । सर्वारिष्टशान्तिर्भवतु ॥ अनेन कृतेन रुद्राभिषेककर्मणा श्रीमद्भवानीशङ्कर- महारुद्रः प्रीयतान्न मम ॥ ॐ सदाशिवार्पणमस्तु ॥ इति ॥

## अथ श्रीशिवसहस्रनाम प्रारभ्यते ।

व्यास उवाच ॥ एकदा मुनयः सर्वे द्वारिकां द्रष्टुमागताः ॥ वासुदेवं च सोत्कंठाः कृष्णदर्शनलालसाः ॥ १ ॥ ततस्तु भगवान् प्रीतः पूजां चक्रे यथाविधि ॥ तेषामासीनतो गृह्य बहुमानपुरःसरम् ॥२॥ तैः पृष्टः कथयामास कुमारप्रभृतं च यत् ॥ चरितं मुनिसारघ्नं लोकानन्द-करं परम् ॥ ३ ॥ मार्कण्डेयमुखाः सर्वे साम्बादिवरकिंपोसिथमाः ॥ कृष्णः स्नानमयो गत्वे मृताद्य कुमारिति ॥४ ॥ सूर्योपस्थानमन्त्या

च स्मृतिधर्ममनुस्मरन् । शिवपूजां ततः कृष्णो गन्धपुष्पाक्षतादिभि ॥
५॥ चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ॥ जय शङ्कर सोमेश
रक्ष रक्षेति चाब्रवीत् ॥ ६ ॥ जजाप शिवसाहस्रं भुक्तिमुक्तिप्रदं विभो ।
अनन्यमानसः शान्तः पद्मासनपरः शुचिः ॥ ७ ॥ ततस्ते विस्मयापन्ना
दृष्ट्वा कृष्णविचेष्टितम् ॥ मार्कण्डेयोऽवदत्कृष्णं बहुशो मुनिपुङ्गवः॥८॥
मार्कण्डेय उवाच ॥ त्वं विष्णुः कमलाकान्तः परमात्मा जगद्गुरुः ॥
तव पूज्यः कथं शम्भुरेतत्सर्वं वदस्व मे ॥ ९ ॥ व्यास उवाच ॥ अथ
ते मुनयः सर्वे मार्कण्डेयं समर्चयन् ॥ वचोभिर्वासुदेवस्य पृष्टं साधु
त्वयेति च ॥ १० ॥ श्रीकृष्ण उवाच ॥ साधु साधु मुने पृष्टं हिताय
सकलस्य च ॥ अज्ञातं तव नास्त्येव तथापि च वदाम्यहम् ॥ ११ ॥
दैवतं सर्वदेवानां सर्वकारणकारणम् ज्योतिर्यत्परमानन्दं सावधानमतिः
शृणु ॥ १२ ॥ विश्वसाधनमीशानं गुणातीतमजं परम् ॥ जगतस्तस्थुषो
ह्यात्मा मम मूलं महामुने ॥ १३ ॥ यो देवः सर्वदेवानां ध्येयः पूज्यः
सदाशिवः ॥ स शिवः स महादेवः शङ्करश्च निरञ्जनः ॥ १४ ॥ तस्मा-
न्नान्यपरो वेदस्त्रिषु लोकेषु विद्यते ॥ सर्वज्ञः सर्वगः शम्भुः सर्वात्मा
सर्वतोमुखः ॥ १५ ॥ पठ्यते सर्व वेदान्ते सिद्धान्ते यो मुनीश्वरैः ॥
तस्मिन्भक्तिर्महादेवे मम धातुश्च निर्मला ॥ १६ ॥ महेशः परमं ब्रह्म
शान्तः सूक्ष्मः परात्परः ॥ सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥
१७ ॥ निर्विकल्पो निराभासो निःसङ्गो निरुपद्रवः ॥ निर्लेपः पुरुषाध्यक्षो
महापुरुष ईश्वरः ॥ १८ ॥ तस्य चेच्छाभवत्पूर्वं जगत्स्थित्यन्तकारिणी ॥
वामाङ्गादभवत्तस्य सोऽयं विष्णुरिति स्मृतः ॥ १९ ॥ जनयामास
धातारं दक्षिणाङ्गात्सदाशिवः ॥ मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥
२० ॥ तपस्तपन्तु भो वत्सा अब्रवीदिति वाञ्छवः ॥ ततस्ते
शिवमात्मानं प्रोचुः संयतमानसाः ॥ २१ ॥ स्तुत्वा तु विविधैः स्तोत्रैः
प्रणम्य च पुनः पुनः ॥ ब्रह्मविष्णुमहेश्वरा ऊचुः ॥ तपः केन प्रकारेण
कर्त्तव्यं परमेश्वर ॥ २२ ॥ ब्रूहि सर्वमशेषेण त्वात्मानं चेतसि मापरः ॥
शिव उवाच ॥ कायेन मनसा वाचा ध्यान-पूजाजपादिभिः ॥ २३ ।
कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥ देवा ऊचुः ॥ त्वया
यत्कथितं शम्भो दुर्ज्ञेयमजितात्मभिः ॥ २४ ॥ सौम्योपायमतो ब्रह्मन्
वद कारुण्यवारिधे ॥ शिव उवाच ॥ सहस्रनाममद्विद्यां जपन्तु
ममसुव्रताः ॥ २५ ॥ यथा संसारमग्नानां मुक्तिर्भवति शाश्वती ॥
शृण्वन्तु तद्विधानं हि महापातकनाशनम् ॥ २६ ॥ पठतां शृण्वतां सद्यो
मुक्तिः स्यादनपायिनी ॥ ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रिय
॥ २७ । ब्रह्मचारी मुनिर्मानी पद्मासनसमन्वितः ॥ ध्यात्वा मां सकला-

धीश निराकार मुनीश्वरम् ॥ २८ ॥ पार्वतीसहितं शर्वं जटामुकुटमण्डितम् ॥ वमानं चर्म वैयाघ्रं चन्द्रार्द्धकृतशेखरम् ॥ २९ ॥ त्र्यम्बकं हि वृषारूढं कृत्तिवाससमुज्ज्वलम् ॥ सुराचितपदद्वन्द्वं दिव्यभोगं सुसुन्दरम् ॥ ३० ॥ बिभ्राणं सुप्रसन्नं च कुठारं च वराभयम् ॥ दुर्द्धर्षं कनकासीनं नागयज्ञोपवीतिनम् ॥ ३१ ॥ विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् । सहस्रशिरसं शम्भुमनन्तकरसंयुतम् ॥ ३२ ॥ सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम् ॥ न योनिमजं ब्रह्म शिवमाद्यं सनातनम् ॥ ३३ । स्थूलाकारं दुश्छेद्यं सूक्ष्मात्सूक्ष्मतरं परम् ॥ निशाकरकलाकान्तं भेषजं भवरोगिणाम् ॥ ३४ ॥ पिनाकिनं त्रिशूलाढ्यं पशूनां पतिमीश्वरम् ॥ कालात्मानं कालकालं देवदेवं महेश्वरम् ॥ ३५ ॥ ज्ञानवैराग्यसम्पन्नं योगानन्दमयं परम् ॥ शाश्वतैश्वर्यसम्पन्नं महायोगीश्वरेश्वरम् ॥ ३६ ॥ समस्तशक्तिसंयुक्तं पुण्यकायं दुरासदम् ॥ तारकं ब्रह्म सम्पूर्णमणीयांसं महत्तमम् ॥ ३७ । यतीनां परमं ब्रह्म व्रतानां तपसः फलम् ॥ सर्वसिद्धसमासीनं तपस्विजनसम्पदम् ॥ ३८ ॥ विप्रेन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम् ॥ महात्मनं महात्मानं ध्यानामपि दैवतम् ॥ ३९ ॥ अथ शिवकवचप्रारम्भः ॥ शान्तं पवित्रमोङ्कारं ज्योतिषां ज्योतिरुत्तमम् । शङ्करो मे शिरः पातु ललाटं भाललोचनः ॥ ४० ॥ विश्वचक्षुर्दृशौ पातु रुद्रो मम भ्रुवावपि ॥ गणेशो पातु मद्गात्रं श्रुतौ रक्षतु पूर्वजः ॥ ४१ ॥ कपाली मे महानासां पातु नासां सदाशिवः ॥ मुखं पातु हरिर्नीलः ओष्ठौ पातु महेश्वरः ॥ ४२ ॥ दन्तान् रक्षतु चन्द्रस्तालु सोमकलाधरः ॥ रसनां परमानन्दः पातु गल्लौ शिवाप्रियः ॥ ४३ ॥ चिबुकं पातु मे शम्भुः श्मश्रून् शत्रुविनाशकः । कूर्चं पातु भवः कण्ठं नीलकण्ठोऽवतु ध्रुवम् ॥४४॥ स्कन्धौ स्कन्धपतिर्बाहू बहुहस्तधरः सदा ॥ करबाहू महाबाहुः करौ विद्युत्प्रकाशः ॥ ४५ ॥ अङ्गुलाः पातु पञ्चास्यः पत्राणि च सहस्रपात् ॥ हृदयं पातु सर्वात्मा स्तनौ पातु पितामहः ॥४६॥ उदरं कृतमुक्पातु मध्यं मे मध्यमेश्वरः ॥ कुक्षी पातु भवानीशः पृष्ठं पातु कुलेश्वरः ॥४७॥ प्राणान्मे प्राणदः पातु नाभिं भीमः कटिं विभुः ॥ सक्थिनी पातु मे भगः जानुनी जनकाधिपः ॥४८॥ जङ्घे पुररिपुः पातु चरणौ भवनाशनः ॥ शरा पातु मे शर्वः बाह्यमाभ्यन्तरं शिवः ॥ ४९ ॥ इन्द्रियाणि हरः पातु सर्वत्र चपवर्द्धनः ॥ पूर्वं पातु मृडः पातु दक्षिणे यमसूदनः ॥ ५० ॥ वारुण्यां मन्त्रिनाधीशः कौबेर्यां मे महाधरः ॥ ईशान्यां पातु भूतेशः आग्नेय्यां रविभक्षणः ॥ ५१ ॥ नैर्ऋत्यां भूतभृत्पातु वायव्यां बलवर्द्धनः ॥ ऊर्ध्वं पातु ममाद्यः पातु अधः संसारनाशनः ॥ ५२ ॥ सर्वतः सुरदः पातु बुद्धिं पातु त्रिलोचनः । एवं न्यासं दिक् बद्ध्वा साक्षाच्छम्भुसमो भवेत् ॥ ५३ ॥

नमो हिरण्यबाहवे इति पठेन्मन्त्रं तु भक्तितः ॥ नमो हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतये पशुपतये नमो नमः ॥ ५४ ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ भवे भवे नातिभवे भवस्वमां भवोद्भवाय नमः ॥ ५५ ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नम. कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ५६ ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्य ॥ ५७ ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ५८ ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ ५९ ॥ सद्यो जातादिभिर्मन्त्रैर्नमस्कुर्यात्सदाशिवम् ॥ ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ॥ ६० ॥ सर्वकार्यकरं पुण्यं महापातकनाशनम् ॥ सर्वगुह्यतमं दिव्यं सर्वलोकहितप्रदम् ॥ ६१ ॥ मन्त्राणां परमं मन्त्रं भवदुःखपङ्कमिद्दत् ॥ अथाङ्गन्यासः ॥ ॐ नमः शिवायेति षडङ्गन्यासः । ॐ नमः शम्भवाय च हृदयाय नमः ॥ ॐ नमो भवाय च शिरसे स्वाहा ॥ ॐ नमः शङ्कराय च शिखायै वषट् ॥ ॐ नमो मयस्कराय च कवचाय हुम् ॥ ॐ नमः शिवाय च नेत्रत्रयाय वौषट् ॥ ॐ नमः शिवाय शिवतराय च अस्त्राय फट् ॥ नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिङ्गामृतात्मने ॥ चतुर्मूर्तिवपुस्थाय भूपिताङ्गाय शम्भवे ॥ ॐ अस्य श्रीवेदसाराख्यपरमदिव्यशिवसहस्रनामस्तोत्रमन्त्रस्य नारायण ऋषिरनुष्टुप्छन्दः ॥ सदाशिवो देवता ॥ ॐ नमः इति बीजम् ॥ शिवायेति शक्तिः ॥ चैतन्यमिति कीलकम् ॥ सदाशिवप्रीत्यर्थे जपे विनियोगः ॥ अथध्यानम् ॥ ॐ कोटिसूर्यप्रतीकाशं त्रिनेत्रं चन्द्रशेखरम् ॥ शूलटङ्कगदाचक्रकुन्तपाशधरं विभुम् ॥ ॐ नमः पराय देवाय शङ्कराय महात्मने ॥ कामिने नीलकण्ठाय निर्मलाय कपर्दिने ॥ १ ॥ निर्विकल्पाय शान्ताय निरहङ्कारिणे नम. ॥ अनर्घ्याय विशालाय शूलहस्ताय ते नमः ॥ २ ॥ निरञ्जनाय शर्वाय निःशंकाय परात्मने ॥ नमः शिवाय भर्गाय गुणातीताय वेधसे ॥ ३ ॥ महादेवाय पीताय पार्वतीपतये नमः ॥ केवलाय महेशाय विशुद्धाय बुधात्मने ॥ ४ ॥ कैवल्याय सुवेशाय निस्पृहाय स्वरूपिणे ॥ नमः सोमाय भूताय पानायामितेजसे ॥ ५ ॥ अव्ययाय जगत्स्रष्ट्रे जनकाय पिनाकिने ॥ निराधाराय सिद्धाय मायातीताय ते नमः ॥ ६ ॥ बीजाय सर्वभूताय पशूनां पतये नमः ॥ पुरन्दराय भव्याय पुरुषाय महात्मने ॥ ७ ॥ महामन्त्रोपरूपाय ज्ञानिने

शुद्धबुद्धये ॥ बुद्धाय बहुरूपाय ताराय परमात्मने ॥ ८ ॥ पूर्वजाय
सुरेशाय ब्रह्मणेऽनन्तमूर्तये ॥ निरक्षराय सूक्ष्माय कैलासपतये
नम ॥ ९ ॥ निरामयाय कान्ताय निराकाराय ते नम ॥
सलिलात्मस्वरूपाय सोऽहं तत्त्वाय ते नम ॥ १० ॥ नि-
लम्बाय नित्याय नित्यायाः पतये नम ॥ आत्मारामाय
कव्याय पूज्याय परमेष्ठिने ॥ ११ ॥ विकर्तनाय भीमाय
शम्भवे विश्वरूपिणे ॥ हंसाय हंसनाथाय प्रसिद्धाय नमो नम
॥ १२ ॥ परात्पराय रुद्राय भवायालब्धयशक्तये ॥ इन्द्रहन्त्रे
निर्धीशाय कालहन्त्रे मनस्विने ॥ १३ ॥ विश्वमात्रे जगद्धात्रे जगन्नेत्रे
नमो नम ॥ जटिलाय विरोगाय पवित्राय मृडाय च ॥ १४ ॥ निरवद्याय
धीराय निरातङ्काय ते नम ॥ नादाय रविनेत्रायव्योमकेशाय ते नमः ॥
चतुर्भोगाय साराय योगिनेऽनन्तमायिने ॥ १५ ॥ धर्मिष्ठाय वरिष्ठाय
पुरत्रयविघातिने ॥ गरिष्ठाय गिरीशाय वरदाय नमो नम ॥ १६ ॥
व्याघ्रचर्माम्बरायाय दिशावस्त्राय ते नम ॥ परमार्थाय मानाय प्रमथाय
रत्नचक्षुषे ॥ १७ ॥ आद्याय शूलहस्ताय शितिकण्ठाय तेजसे ॥ उमाय
वामदेवाय श्रीकण्ठाय च ते नम ॥ १८ ॥ विश्वेश्वराय सूर्याय गौरीशाय
वराय च ॥ मृत्युञ्जयाय वीराय वीरभद्राय ते नम ॥ १९ ॥ विरूपाक्षाय
विधये वह्निनेत्राय ते नम ॥ जालन्धरशिरश्छेत्रे हविषे हितकारिणे
॥ २० ॥ महाकालाय वैद्याय घुसृणेशाय ते नम ॥ नम ॐ काररूपाय
सोमनाथाय वै नम ॥ २१ ॥ रामेश्वराय शुचये भीमेशाय नमो नम ॥
त्र्यम्बकाय निरीहाय केदारायनमो नम ॥ २२ ॥ गङ्गाधराय कवये
नागनाथाय ते नम ॥ भीमप्रियाय महसे रश्मीशाय नमो नम ॥ २३ ॥
पूर्णाय भूतपतये सर्वज्ञाय दयालवे ॥ धर्माय धनदेशाय जगच्चर्माम्बराय
च ॥ २४ ॥ भालनेत्राय यज्ञाय श्रीशैलपतये नम ॥ कृशानुरेतसे
नीलकण्ठाय नमो नम ॥ २५ ॥ अन्धकासुरहन्त्रे च पावनाय धनाय
च ॥ चैतन्याय त्रिनेत्राय दक्षनाशकराय च ॥ २६ ॥ नम सहस्रशिरसे
जयरूपाय ते नम ॥ सहस्रचरणायाय योगिहृत्पङ्कजवासिने ॥ २७ ॥
सद्योजाताय वन्द्याय सर्वेप्यमयाय च । आमोदाय प्रगल्भाय गायत्री
वल्लभाय च ॥ २८ ॥ व्योमाकाराय विप्राय नमो विप्रप्रियाय च ॥
अघोराय सुघोराय स्वेक्षरूपाय ते नम ॥ २९ ॥ विद्वत्तमाय यज्ञाय
दिग्वाससाय नन्दिने ॥ अपमंशाग्रये सापदुन्दुभीमथनाय च ॥ ३० ॥
च ॥ गरात्रये सुन्ये जगत्प्राणाय ते नम ॥ नमो महाद्रिच्छेत्रे पञ्चवक्त्राय
खड्गिने ॥ ३१ ॥ हरिकेशाय विभवे पञ्चवर्णाय वज्रिणे ॥ नम
पञ्चपाणायाय गोवर्द्धनगमाय च ॥ ३२ ॥ प्रभवे अनवीजाय कालकूट-

विपादिने ॥ सिद्धेश्वराय सिद्धाय सहस्रवदनाय च ॥ ३३ ॥ नमः
सहस्रहस्ताय सहस्रनयनाय च ॥ सहस्रमूर्तये तुभ्यं विष्णवे जितशत्रवे
॥ ३४ ॥ काशीनाथाय गोप्त्रे ते नमस्ते विश्वसाक्षिणे ॥ हेतवे सर्व-
बीजानां पालकाय नमो नमः ॥ ३५ ॥ जगत्संहारकाराय त्रिधावस्थाय
ते नमः ॥ एकादशस्वरूपाय नमस्ते बहुमूर्तये ॥ ३६ ॥ नरसिंहमहादर्प
घातिने शरभाय च ॥ भस्माभ्यक्ताय तीर्थाय जाह्नवीजन काय च ॥३७॥
देवदानवदैत्यानां गुरवे ते नमो नमः ॥ दलिताञ्जनभासाय नमो वायु-
स्वरूपिणे ॥ ३८ ॥ नमः स्वच्छस्वरूपाय प्रसिद्धाय नमो नमः ॥ वृषध्व-
जाय गोप्त्राय जगद्यन्त्रप्रवर्तिने ॥ ३९ ॥ अनाथाय प्रजेशाय विष्णुगर्व-
हराय च ॥ हरिविधातृकलहनाशकाय नमो नमः ॥ ४० ॥ गदाहस्ताय
वटवे गगनाय नमो नमः ॥ कैवल्यफलदात्रे ते परमाय नमो नमः ॥४१॥
ज्ञानगम्याय ज्ञानाय घण्टारवप्रियाय च । पद्मासनाय पुण्याय निर्वाणाय
नमो नमः ॥ ४२ ॥ अयोनये सदेहाय सुत्तमाय नमो नमः ॥ अन्तका-
लाधिपतये विशालाक्षाय ते नमः ॥ ४३ ॥ कुबेरबन्धवे तुभ्यं सोमाय
सुखिने नमः अमृतेशाय सौम्याय खेचराय च धन्विने ॥ ४४ ॥ प्रियं-
वदाय दक्षाय वन्दिने विभवाय च ॥ गिरीशाय गिरित्राय गिरिशान्ताय
ते नमः ॥ ४५ ॥ पारिजाताय बृहते पञ्चयज्ञाय ते नमः ॥ तरुणाय
विशिष्टाय बालरूपधराय च ॥ ४६ ॥ जीवितेशाय पुष्टाय पुष्टानां पतये
नमः ॥ भवहेत्वे हिरण्याय कनिष्ठाय नमो नमः ॥४७। मध्यमाय विधात्रे
च शूराय सुभगाय च ॥ आदित्यतापनाथाय पुण्यश्लोकाय ते नमः ॥४८॥
महाह्रदाय ह्रस्वाय वामनाय नमो नमः ॥ नमस्तत्पुरुषायाथ चतुर्हस्ताय
मायिने ॥ ४९ ॥ नमो धूर्जटये तुभ्यं जगदीशाय ते नमः ॥ जगन्नाथाय
महते लीलाविग्रहधारिणे ॥५०॥ अभयाय नमस्तुभ्यममराय नमो नमः ॥
अताग्राय नमस्तुभ्यमघाय नमो नमः ॥५१॥ ओषाध्यक्ष नमस्तुभ्यम-
नादिनिधनाय च ॥ व्याघ्रोग्राय व्यक्ताय नमस्ते परमाणवे ॥५२॥ स्थपये
स्थूलरूपाय नमः परशुधारिणे ॥ नमः खट्वाङ्गहस्ताय नागहराय ते
नमः॥५३। परदाभयहस्ताय घण्टाहस्ताय ते नमः ॥ पामराय नमस्तुभ्य-
जिताय नमो नमः ॥५४॥ अणिमादिगुणेशाय पञ्चमहाभयाय च ॥
पुरातनाय शुद्धाय बभ्रवमथनाय च ॥५५॥ पुण्योदयाय पद्माय विभुमाय
नमो नमः ॥ उदाराय विचित्राय विचित्रगतये नमः ॥५६॥ वागिशुद्धाय
गिरये निर्गुणाय नमो नमः ॥ परमेशाय शेषाय नमः परशराय च ॥५७॥
महेन्द्राय सुरेशाय कर्णारनिपाय च ॥ महापातकनाशाय नमस्ते कान-
रूपिणे ॥५८॥ विद्रुमवर्ण शोकपूर्णारनाय ते नमः । मद्रारे चन्द्रभूषाय
वरदाय मदाय च ॥५९॥ अनन्ताय वीरदाय वरप्रदाय ते नमः ॥

परमज्योतिषे पद्मगर्भाय सलिलाय च ॥६०॥ तत्वाधिकाय तत्वाय नमो दीर्घाय रङ्गिणे ॥ नमस्ते पाण्डु रङ्गाय गौराय ब्रह्मचारिणे ॥६१॥ अणवे निष्कलायाथ सामगानप्रियाय च ॥ नमोऽरूपाय चोराय नमस्ते पुण्य मूर्तये । ६२॥ कलाधराय पूज्याय पञ्चाभूतात्मने नम ॥ निर्वाणाय च तध्याय पापनाशकराय च ॥६३॥ विश्वतश्चक्षुषे कालयोगिनेऽनन्त रूपिणे ॥ सिद्धसाधकरूपाय नमो भेदनिरूपिणे । ६४॥ अगण्याय प्रता पाय सुधाहस्ताय ते नम ॥ श्रीवल्लभाय नित्याय स्थाणवे मधुराय च ॥६५॥ उपाधिरहितायास्य नम सुस्तराशये ॥ नमो मुनीश्वरायाथ शिवानन्दाय ते नम ॥६६॥ रिपुघ्नाय नमस्तेऽघोराशयेऽनुत्तमाय च ॥ चतुर्मूर्तिवप - स्थाय नमो बुद्धीन्द्रियात्मने । ६७॥ उपद्रवहरायाथ प्रियसदर्शनाय च ॥ भूतनाथाय भूताय वीतरागाय ते नम ॥६८॥ नैष्कर्म्याय निरूपाय षड वक्त्राय विशुद्धये ॥ कुलशाय भूतभृते भुवनेशाय ते नम ॥६९। हिरण्य वाहवे जीवरदाय नमोनम ।आदिदेवाय भर्गाय चन्द्रसजीवनाय च ।७०॥ हराय बहुरूपाय प्रसन्नाय नमो नम ॥ आनन्दभारतायाथ कृत्याय नमो नम ॥७१॥ नमो मोक्षफलायाथ शाश्वताय विरोगिणे ॥ यज्ञमोक्त्रे सुपे णाय दक्षयज्ञविघातिने ॥ ७२ ॥ नम सर्वात्मने तुभ्य विश्वपालाय ते नम । विश्वगर्भाय गर्भाय वेदगर्भाय ते नम ॥७३॥ ससारार्णव मग्नाना दु खससारहेतवे ॥ मुनिप्रियाय जीवाय मूलप्रकृतये नम ॥ ७४ ॥ समस्त बन्धवे तेजोमूर्तये ते नमो नम ॥ आश्रमस्थापकायाथ वर्णिने सुन्दराय च ॥ ७ । मृगबाणार्पणायाथ शारदावल्लभाय च ॥ विचित्रमायिने तुभ्यमलङ्करिष्णवे नम । ७६ ॥ वहिर्मुखमहादर्पमथनाय नमो नम ॥ नमोऽष्टमूर्तये तुभ्य निष्कलङ्काय ते नम ॥ ७७ ॥ नमो हव्याय भोज्याय यज्ञनाथाय ते नम ॥ नम ॥ नमो मध्याय मुख्याय वसिष्ठाय नमो नम ॥ ७८ ॥ अम्बिकापतये तुभ्यं महादन्ताय ते नम ॥ सत्यप्रियाय सत्याय प्रियनूतनाय ते नम ॥ ७९ ॥ नित्यनृत्याय वेद्रिये मृगहस्ताय ते नम ॥ ऊर्द्ध नारीश्वरायाय कुठारयुतपाणये ॥ ८० ॥ वराभयप्रदात्रे ते बहुरूपाय ते नम ॥ महार्थाय सुमन्त्राय कीर्तिस्तम्भाय ते नम ॥ ८१ ॥ नम स्तगमायाथ वदान्तपठिताय च ॥ अग्राहाय श्रुतिमते बहुश्रुतिताय च श्रमणाय नमस्तुभ्य गन्धाश्रमकारिणे । पाञ्हीनाय बोढाय सर्वगताय नम ॥ ८३ ॥ अद्याय जननप्राय नमस्तुभ्यं चिदात्मने ॥ रसज्ञाय नमस्तुभ्य रमनाशहिताय च ॥ ८४ ॥ अमूर्तायाय मूर्ताय सदसस्पतये नम ॥ निरिन्द्रियाय सत्याय परज्योति स्वरूपिणे ॥ ८५ ॥ नमस्ते सर्वगाय नमादिकर्त्रे दयालय ॥ सर्गस्थितिविनाशाना कर्त्रे ते ईश्वराय च ॥ ८६ ॥ नमोऽन्तर्यामिने सर्वदिग्व्याय नमो नम ॥ पञ्चमणकर्त्रे ते

पुराणाय नमो नमः ॥ ८७ ॥ वामदक्षिणपार्श्वाय लोकेश हरिशालिने ॥ नमः सकलकल्याणदायिने प्रसवाय च ॥ ८८ ॥ स्वभावो मारवीराय सूत्रकाराय ते नमः ॥ विपयार्णवमग्नानां समुद्धरणसेतवे ॥ ८६ ॥ अस्ने-हस्नेहरूपाय वार्ताविक्रान्तवर्तिने ॥ यत्र सर्वंयतः सर्वं सर्वं यत्र नमो नमः ॥ ६० ॥ नमो महार्णवायाथ भास्कराय नमो नमः ॥ भक्तिगम्याय भक्तानां सुलभाय नमो नमः ॥ ६१ ॥ दुष्प्रधर्षाय दुष्टानां विज्ञेयाय विवेकिनाम् ॥ अलौकिकाय लोकाय ह्यलोकाय नमो नमः ॥ ६२ ॥ पूरयित्रे विशेषाय कुशलाय शुभाय च ॥ नमः कर्पूरगौराय सर्पहाराय ते नमः ॥ ६३ ॥ नमः संसारपाराय कमनीयाय ते नमः ॥ वह्निदर्पविघाताय वायुदर्पविघातिने ॥ ६४ ॥ जरातिगाय वीर्य्याय वेद्याय व्यापिने नमः ॥ सूर्य्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ॥ ६५ ॥ चन्द्रकोटिसुशीताय कपिलाय नमो नमः ॥ नमो गूढस्वरूपाय निश्चलाय पराय च ॥ ६६ ॥ नमः सत्यप्रतिज्ञाय नमस्ते सुसमाधये ॥ एकरूपाय शून्याय विश्वनाभि-हृदाय च ॥ ६७ ॥ पर्वोत्तमाय लोकाय प्राणाय सुहृदे नमः ॥ नमः परायणायाथ चिन्मात्राय नमो नमः ॥ ६८ ॥ ध्यानगम्याय ध्येयाय ध्यानरूपाय ते नमः ॥ नमस्ते शाश्वतैश्वर्य्यविभवाय नमो नमः ॥ ६६ ॥ नमः प्राणेश्वरायाय सर्वशक्तिभराय च ॥ धर्माधाराय धन्याय पुष्कलाय नमो नमः । १००॥ प्रतिष्ठायै धर्मगोप्त्रे निधनायामजाय च ॥ योगेश्वराय योगाय योगगम्याय ते नमः ॥ १ ॥ महेन्द्रोपेन्द्रचन्द्रार्कनमिताय नमो नमः ॥ महर्षिवन्दितायाथ प्रकाशाय सुधर्मिणे ॥२॥ नमो हिरण्य-गर्भाय नमो हिरण्मयाय च ॥ जगद्बीजाय हाराय सेव्याय क्रतवे नमः ॥३॥ आधिपत्याय कामाय स्वराय यशसे नमः ॥ नमः प्रचेतसे ब्रह्मम-थाय सकलाय च ॥४॥ नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये ॥ योगा-त्मनेऽचिन्तिनाय दिव्यनृत्याय ते नमः ॥ ५ ॥ जगतामेकनाथाय माया-बीजाय ते नमः ॥ सर्वहृत्सन्निविष्टाय ब्रह्मनाकभमाय च ॥६॥ ब्रह्मा-नन्दाय भवते ब्रह्मण्याय नमो नमः ॥ भूमिभारार्तिसंहर्त्रे भवसारथये नमः ॥७॥ हिरण्यगर्भपुत्राणां प्राणसंरक्षणाय च ॥ दुर्वाससे षड्विकार-रहिताय नमो नमः ॥८॥ नमो देहार्द्धकान्ताय षडूर्मिरहिताय च ॥ प्रकृत्यै भवनाशाय साम्राय परमेष्ठिने ॥६॥ अनन्तकोटिब्रह्माण्डनायकाय नमो नमः ॥ एकाकिने निर्मलाय द्रविणाय दमाय च ॥१०॥ नमस्त्रिलोचना-थाय शिपिविष्टाय मन्यवे ॥ त्रिविष्टपेश्वरायाथ नमो व्याघ्रेश्वराय च ॥११॥ त्रिरयेश्वराय दात्रे ते नमश्चण्डेश्वराय च ॥ व्यामेश्वराय धुधिने फल्गुकेशाय ते नमः ॥१२॥ योगेश्वराय च नमो दिवोद्भूमेश्वराय च ॥ नागेश्वराय न्यायाय न्यायनिर्वाहकाय च ॥ १३ ॥ शरण्याय सुगाश्राय

कालचक्रप्रवर्तिने ॥ विचक्षणाय दंष्ट्राय श्वेताश्वाय नमो नमः ॥१४॥ नीलजीमूतदेहाय परात्मज्योतिषे नमः ॥ शरणागतपालाय महाबलपराय च ॥१५॥ सर्वपापहरायाथ महानादाय ते नमः ॥ कृष्णस्य जयदात्रे ते विल्वकोशाय ते नमः ॥ १६ ॥ दिव्यभोगाय दक्षाय कोविदाय नमो नमः ॥ कामपालाय चित्राय विचित्राय नमो नमः ॥ १७ ॥ नमो मातामहायाथ नमस्ते मातरिश्वने । निःसङ्गाय सुनेत्राय विघ्नेशाय जयाय च ॥ १८ ॥ व्याजसंमर्दनायाथ मध्यस्थाय नमो नमः ॥ अङ्गुष्ठशिरसा लंकानाथदर्पहराय च ॥१९॥ व्याघ्रपुरनिवासाय नमः सर्वेश्वराय च ॥ नमः परावरेशाय जगत्स्थावरमूर्तये ॥२०॥ नमोऽप्यप्रमेयाय शार्ङ्गिणे विष्णुमूर्तये ॥ नारायणाय वामाय सुदीप्ताय नमो नमः ॥२१॥ नमो ब्रह्माण्डमालाय गोधराय वरूथिने ॥ घण्टानादाय सूनाय नमः पातालवासिने ॥२२॥ नमस्ताराधिनाथाय वागीशाय नमो नमः ॥ सदाचाराय गौराय पुराणपुरुषाय च ॥२३॥ संसारमोचकायाथ वर्णिने लिङ्गरूपिणे ॥ सच्चिदानन्दरूपाय पापराशिहराय च ॥२४॥ अतर्क्यायाप्रमेयाय प्रमाणाय नमो नमः ॥ कलिमासाय भक्तानां भुक्तिमुक्ति प्रदायिने ॥२५॥ गजारये विदेहाय त्रिलिङ्गरहिताय च ॥ नमो राजाधिराजाय चैतन्यविभवाय च ॥२६॥ नमः शुद्धात्मने ब्रह्मज्योतिषे स्तुतिदाय च ॥ मयोभवे च दक्षाय समर्थाय च यज्वने ॥२७॥ चक्रेश्वराय रुचये नमो नक्षत्रमालिने ॥ अनर्थनाशकायाथ भस्मलेपकराय च ॥२८॥ सदानन्दाय विदुषे सगुणाय विरोधिने ॥ दुर्गमाय शुभाङ्गाय मृगव्याधाय ते नमः ॥२९॥ प्रियाय धर्मधाम्ने ते प्रयागाय विभागिने ॥ आधायामृतपानाय सोमपाय तपस्विने ॥३०॥ नमो विचित्रवेषाय षष्टिसंवर्द्धनाय च ॥ चिरन्तनाय धनुषे स्थविराय ध्रुवाय च ॥३१॥ नियमायाग्रगण्याय व्योमावासाय ते नमः ॥ संवत्सराय लोप्याय स्थानदाय स्थविष्णवे ॥ ३२ ॥ व्यापमाय कलात्माय महाकर्त्रे प्रियाय च ॥ गुणत्रयस्वरूपाय नमः सिद्धिस्वरूपिणे ॥ ३३ ॥ नमो नमःस्वरूपाय स्वच्छाय पुरुषाय च ॥ कालान्तराय वेदाय नमो ब्रह्माण्डरूपिणे ॥ ३४ ॥ अनित्यनित्यरूपाय तदन्तर्वर्तिने नमः ॥ ममस्थायाय शुक्लाय पुण्याय पतये नमः । ३५ ॥ पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ॥ विशृङ्खलाय पूर्णाय नमस्ते विषयात्मने ॥ ३६ ॥ भवदाय शाम्राय स्वतन्त्रायामृताय च ॥ नमः प्रौढाय प्राज्ञाय योगारूढाय ते नमः ॥ ३७ ॥ मन्त्रज्ञाय प्रभावाय प्रदीपविमलाय च ॥ विश्ववासाय दक्षाय वेदनिःश्वसिताय च ॥ ३८ ॥ यज्ञाङ्गाय सुवीराय नागभूषाय ते नमः । श्यामाय पाशहस्ताय स्कन्याय पक्षिणे नमः ॥ ३९ ॥ ऐश्वर्याय रहस्याय स्वरयाय म

वरीयसे ॥ गहनाय विरामाय सिद्धान्ताय नमो नमः ॥ १४० ॥ महीधराय होत्रे ते वटवृत्ताय ते नमः ॥ ज्ञानदीपाय दुर्गाय सिद्धान्तनिश्चयाय च ॥ श्रीमते मुक्तिबीजाय कुशलाय विलासिने ॥ ४१ ॥ प्रेरकाय विशोकाय हविर्द्धनाय ते नमः ॥ गम्भीराय सहायाय भोजनाय सुभोगिने ॥ ४२ ॥ महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे । नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः ॥ ४३ ॥ परमार्थाय शिशवे प्रांशवे च कपालिने ॥ सहजाय गृहस्थाय सन्ध्यानाथाय जिष्णवे ॥ ४४ ॥ षड्भिः सुपूजितायाथ त्रिदशासुरघातिने ॥ जनानन्दाय योग्याय कामेशाय किरीटिने ॥ ४५ ॥ अमोघविक्रमायाथ नग्नाय दलघातिने ॥ सप्रामाय नरेशाय शुचिहास्याय ते नमः ॥ भूतिप्रियाय भूम्ने ते श्येनाय मधुराय च ॥ ४६ ॥ मनुष्यबाह्यगतये कृतज्ञाय शिखण्डिने ॥ निर्लेपाय जटार्द्राय महाकालाय भीरवे ॥ ४७ ॥ नमो विरूपरूपाय शक्तिगम्याय ते नमः ॥ नमः सर्वाय सदसत्पराय सुव्रताय च ॥ ४८ ॥ नमो भक्ति प्रियायाथ श्वेतरक्तपराय च ॥ सुकुमारमहापापहराय रथिने नमः ॥ ४९ ॥ नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये ॥ महाभूताय कल्पाय कल्पनारहिताय च ॥ १५० ॥ ख्याताय जितविश्वाय गोकर्णाय सुचारवे ॥ श्रोत्रियाय वदान्याय दुर्बलाय कुटुम्बिने ॥ ५१ ॥ विरजाय सुगन्धाय नमोविश्वम्भराय च ॥ भवातीताय पष्ठाय नमस्ते सामगाय च ॥ ५२ ॥ अद्वैताय द्वितीयाय कल्पराजाय भोगिने ॥ चिन्मयाय नमः शुक्लज्योतिषे क्षेत्रगाय च ॥ ५३ ॥ सर्वभोगसमृद्धाय साम्बाय च नमो नमः ॥ नमस्ते स्वप्रकाशाय स्वच्छन्दाय सुतन्तवे ॥ ५४ ॥ सर्वज्ञमूर्तये तुभ्यं हिरण्यरेतसे नमः ॥ शारदाय सुशीलाय कौशिकाय घनाय च ॥ ५५ ॥ अभिरामाय तत्त्वाय व्यक्तकल्पाय ते नमः । अरिष्टमथनायाथ सुप्रतीकाय ते नमः ॥ ५६ ॥ आशवे ब्रह्मगर्भाय वरुणायेन्दवे नमः ॥ नमः कालाग्निरुद्राय श्यामाय सुजनाय च ॥ ५७ ॥ अहिर्बुध्न्याजराय गुह्येशाय सशान्तये ॥ नमः समयनाथाय सोमपाय गुहाय च ॥ ५८ ॥ निर्मलाय नमस्तुभ्यं छन्दसाराय दंष्ट्रिणे ॥ ज्योतिर्लिङ्गाय पित्रे च जगत्सौहितकारिणे ॥ ५९ ॥ नमः कारुण्यनिधये श्लोकाय जयशालिने ॥ ज्ञानोदराय वीजाय जनविधामहेतवे ॥६०॥ अवधूताय शिष्टाय छन्दसां प्रभवे नमः ॥ नमः फेण्याय गुह्याय सर्वबन्धविमोचिने ॥६१॥ उदारकीर्तये शश्वत्प्रसन्नवदनाय च । वसवे वेदकाराय नमो भ्राजिष्णुविष्णवे ॥६२॥ चक्रिणे देवदेवाय गदाहस्ताय सुचिणे । नमस्ते पारिजाताय गणाधिपतये नमः ॥६३॥ सर्वशास्त्रा-

धिपतये प्रजनेशाय ते नमः ॥ सूक्ष्मप्रमाणमूर्ताय सुरपार्श्वगताय च ॥ ६४॥ अशरीराय शुक्राय सर्वान्तर्यामिणे नमः ॥ सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥६५॥ मुनिध्येयाय मुनये बीजस्थाय मरीचये ॥ चामुण्डजनकायाथ नमस्ते कृत्तिवाससे ॥६६॥ व्योमकेशाय योग्याय धर्मपीठाय ते नमः ॥ महावीर्याय दीप्ताय बुद्धाय शनये नमः ॥६७॥ शिष्टेष्टाय मघवते केतवे करुणाय च ॥ कारणाय भगवते बाणदर्पहराय च ॥६८॥ अतीन्द्रियाय रम्याय ज्ञानानन्दकराय च ॥ सदाशिवाय धीस्थाय चिन्त्याय चन्द्रमौलिने ॥६९॥ नमस्ते जातुकर्ण्याय सूर्याध्यक्षाय ते नमः ॥ ज्योतिषे कुण्डलीशाय धरादायाचलाय च ॥७०॥ वसन्ताय सुरभये जयारिमथनाय च ॥ प्रेतपुरञ्जयायाथ वृषदश्वाय ते नमः ॥७१॥ रोचिष्णवे सुरजिते श्वेतपीताय ते नमः ॥ नमस्ते चञ्चरीकाय तमिस्रमथनाय च ॥ ७२॥ प्रमाथिने निदाघाय चित्रगर्भाय ते नमः ॥ शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥ ७३ ॥ निरवद्याय दानाय विचित्रशक्तये नमः ॥ नमस्तुल्याय महसे वितानपतये नमः ॥ ७४ ॥ अहङ्कारस्वरूपाय मेधाधिपतये नमः ॥ विक्रमाय स्वतन्त्राय स्वतन्त्रगतये नमः ॥ ७५ ॥ अपाराय तत्त्वविदे क्षयद्वीराय ते नमः ॥ पञ्चास्याय वदान्याय विश्वप्राणेश्वराय च ॥ ७६ ॥ अगोचराय सूक्ष्माय ह्रीयाय वडवाग्नये ॥ फेण्याय पद्महस्ताय नमस्ते जमदग्नये ॥ ७७ ॥ अनावृताय मुक्ताय मातृकापतये नमः ॥ नमस्ते बीजकोशाय तीव्रानन्दाय मुक्तये ॥ ७८ ॥ नमस्ते विश्वदेवाय शान्तरागाय ते नमः ॥ विलोचनाय तोयाय हेमगर्भाय ते नमः ॥ ७९ ॥ अनाद्यन्ताय चण्डाय मनोनाथाय ते नमः ॥ ज्ञानस्कन्धाय तुष्टाय कपिलाय महर्षये ॥ १८० ॥ नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः ॥ नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥ ८१ ॥ स्वभावाय सुवासाय द्वन्द्वान्ताय ते नमः ॥ नमस्ते शिवधर्माय महाधर्माय ते नमः ॥ ८२ ॥ प्रमथाय नमस्तुभ्यं सर्वान्तर्ज्योतिषे नमः ॥ स्वायम्भुवे कुलेशाय यक्षरावममन्महे ॥ ८३ ॥ श्रीमहादेव उवाच ॥ जपन्तु सततं देवा नाम्नां दशशतीमिमाम् ॥ मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥ ८४ ॥ संग्रामे जयदात्रीं च सर्वासिद्धिमयीं शुभाम् ॥ यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ ८५ ॥ पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राज्यताम् ॥ धारणात्सततं भक्त्या धनधान्यादिकं बहु ॥ ८६ ॥ शिवालये नदीतीरेऽश्वत्थमूले विशेषतः ॥ प्रजपेत्सिद्धिदां देवाः शुचौ देशे शमीतले ॥ ८७ ॥ धनकामस्तु जुहुयादघृताक्तैर्बिल्वपत्रकैः ॥ मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः ॥ ८८ ॥ पुत्रकामस्तु जुहुयात्

विपतये प्रजनेशाय ते नमः ॥ सूक्ष्मप्रमाणमूर्ताय सुरपार्श्वगताय च ॥ ६४॥ अशरीराय शुभाय सर्वान्तर्यामिणे नमः ॥ सुकेशाय सुपुष्पाय श्रुतये पुष्पमालिने ॥६५॥ मुनिध्येयाय मुनये बीजस्थाय मरीचये ॥ चामुण्ड-जनकायाथ नमस्ते कृत्तिवाससे ॥६६॥ व्योमकेशाय योग्याय धर्मपीठाय ते नमः ॥ महावीर्याय दीप्ताय बुद्धाय शनये नमः ॥६७॥ शिष्टेष्टाय मघवते केवले करुणाय च ॥ कारणाय भगवते बाणदर्पहराय च ॥६८॥ अतीन्द्रियाय रम्याय ज्ञानानन्दकराय च ॥ सदाशिवाय धीस्थाय चिन्त्याय चन्द्रमौलिने ॥६९॥ नमस्ते जातुकर्ण्याय सूर्याध्यक्षाय ते नमः ॥ ज्योतिषे कुण्डलीशाय वरदाप्रावलाय च ॥७०॥ वसन्ताय सुरभये जयारिमथनाय च ॥ प्रेतपुरञ्जयायाथ पृषदश्वाय ते नमः ॥७१॥ गोविष्णवे मुरजिते श्वेतपीताय ते नमः ॥ नमस्ते चञ्चरीकाय तमिस्रमथनाय च ॥ ७२॥ प्रमाथिने निदाघाय चित्रगर्भाय ते नमः ॥ शिवालयाय स्तुत्याय तीर्थदेवाय ते नमः ॥ ७३ ॥ निरवद्याय दान्ताय विचित्रशक्तये नमः ॥ नमस्तुल्याय महसे वितानपतये नमः ॥ ७४ ॥ अहङ्कारस्वरूपाय मेधाधिपतये नमः ॥ विक्रमाय स्वतन्त्राय स्वतन्त्रगतये नमः ॥ ७५ ॥ अपाराय तत्त्वविदे त्र्यक्षीराय ते नमः ॥ पञ्चास्याय वदान्याय विश्वप्राणेश्वराय च ॥ ७६ ॥ अगोचराय सूक्ष्माय श्रेयाय वडवाग्नये ॥ फेरयाय पद्महस्ताय नमस्ते जमदग्नये ॥ ७७ ॥ अनावृताय मुक्ताय मातृकापतये नमः ॥ नमस्ते बीजकोशाय तीर्थानन्दाय मुक्तये ॥ ७८ ॥ नमस्ते विश्वदेवाय शान्तरागाय ते नमः ॥ विलोचनाय तोयाय हेमगर्भाय ते नमः ॥ ७९ ॥ अनाद्यन्ताय वरदाय मनोनाथाय ते नमः ॥ ज्ञानस्कन्धाय तुष्टाय कपिलाय महर्षये ॥ १८० ॥ नमस्त्रिकाग्निकालाय देवसिंहाय ते नमः ॥ नमस्ते मणिपूराय चतुर्वेदाय ते नमः ॥ ८१ ॥ स्वभावाय सुवासाय ज्ञान्त ज्ञायव ते नमः ॥ नमस्ते शिवधर्माय महाधर्माय ते नमः ॥ ८२ ॥ प्रसन्नाय नमस्तुभ्यं सर्वान्तर्ज्योतिषे नमः ॥ स्वयम्भुवे कुलेशाय पङ्-राजसमन्महे ॥ ८३ ॥ श्रीमहादेव उवाच ॥ जपन्तु सततं देवा नाम्नां दशशतीमिमाम् ॥ मम चातिप्रियकरीं महामोक्षप्रदायिनीम् ॥ ८४ ॥ संग्रामे जयदात्रीं च सर्वसिद्धिमयीं शुभाम् ॥ यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ ८५ ॥ पुत्रकामो लभेत्पुत्रं राज्यकामस्तु राज्यवान् ॥ प्राप्नुयात्परया भक्त्या धनधान्यादिकं बहु ॥ ८६ ॥ शिवालये नदीतीरेऽश्वत्थमूले विशेषतः ॥ प्रजपेत्सिद्धिदां देवाः शुचौ देशे शमीतले ॥ ८७ ॥ धनकामस्तु जुहुयाद्घृताक्तैर्बिल्वपत्रकैः ॥ मोक्षकामस्तु गव्येन घृतेन प्रतिनामकः ॥ ८८ ॥ पुत्रकामस्तु जुहुयात्

श्रीगणेशायनमः ॥ चाम्पेयगौरार्द्धशरीरकायै कर्पूरगौरार्धशरीरकाय ॥ धम्मिल्लकायै च जटाधाराय नमः शिवायै च नमः शिवाय ॥१॥ रणत्क्वणत्कंकणनूपुरायै मिलत्फणाभासुरनूपुराय ॥ हेमांगदायै भुजगांगदाय नमः शिवायै०॥२॥कस्तूरिकाकुङ्कुमचर्चितायै चिन्तारजःपुञ्जविचर्चिताय ॥ सुकुण्डलायै फणिकुण्डलाय नमः शिवायै० ॥३॥ मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय ॥ दिव्याम्बरायैच दिगम्बराय नमः शिवायै० ॥ ४ ॥ प्रोत्फुल्लनीलोत्पललोचनायै विकासपङ्केरुहलोचनाय ॥ समेक्षणाय विषमेक्षणाय नमः शिवायै० ॥ ५ अम्भोरुहश्यामल कुन्तलायै तडित्प्रभाभासजटाधराय ॥ जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥ ६ ॥ सदा शिवानां प्रियभूषणायै सदा शिवानां प्रिय भूषणाय ॥ शिवान्वितायै च शिवान्विताय नमः शिवायै० ॥ ७ ॥ प्रपञ्चसृष्ट्युन्मुखलास्यकायै त्रैलोक्यसंहारकृताण्डवाय ॥ कृतस्मरायै विकृतस्मराय नमः शिवायै० ॥ ८ ॥ नमस्ते भगवद्रुद्रभास्करामिततेजसे ॥ नमो भवाय देवाय शिवाय परमात्मने ॥९॥ शर्वाय क्षितिरूपाय सदा सुरभिदे नमः ॥ ईशानाय नमस्तुभ्यं स्पर्शमात्राय ते नमः ॥१०॥ महादेवाय सोमाय अमृतेशाय ते नमः॥ उग्राय यजमानाय नमो मीढुष्टमाय ते नमः॥११॥ नमोऽस्तु ते शंकर शान्तिमूर्ते नमोऽस्तु ते चन्द्रकलावतंस ॥ नमोऽस्तु ते कारण कारणाय नमोऽस्तु ते कारणवर्जिताय ॥१२॥ स एव धन्यस्तव भक्तिभाजां तवाचको यः कुरुते सदैव ॥१३॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मयादेव परिपूर्णं तदस्तु मे ॥१४॥

इतिश्रीस्कन्दपुराणे शिवस्तुतिः सम्पूर्णा ॥

श्रीगणेशाय नमः

## शिवमहिम्नस्तोत्रम् ।

श्रीपुष्पदन्तउवाच ।

महिम्नः पारन्ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ॥ अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन् ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥१॥ अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ॥ स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः पदे त्वर्वाचीने पतति न मनः

रस्य न यत्र ॥२॥ मधुस्फीता वाचः परमममृतं निर्मितवतस्तव ब्रह्मन् किं
वागपि सुरगुरोर्विस्मयपदम् ॥ मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथनबुद्धिर्व्यवसिता ॥३॥ तवैश्वर्यं यत्तज्जगदुद-
यरक्षाप्रलयकृत् त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु । अभव्याः
नामस्मिन् वरद रमणीयामरमणीं विहन्तुं व्याक्रोशीं विदधत इहैके जड-
धियः ॥४॥ किमीहः किं कायः स खलु किमुपायस्त्रिभुवनं किमाधारो
धाता सृजति किमुपादान इति च ॥ अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥५॥ अजन्मानो लोकाः
किमवयववन्तोऽपि जगतामधिष्ठातारं किं भवविधिरनादृत्य भवति ॥
अनीशो वा कुर्याद्भुवनजनने कः परिकरो यतो मन्दास्त्वां प्रत्यमरवर
संशेरत इमे ॥ ६ ॥ त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने
प्रस्थाने परमिदमदः पथ्यमिति च ॥ रुचीनां वैचित्र्यादृजुकुटिलनाना
पथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥ महोक्षः
खट्वाङ्गं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव वरद तन्त्रोपकर-
णम् ॥ सुरास्तां तामृद्धिं विदधति भवद्भ्रूप्रणिहितां न हि स्वात्मा-
रामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥ ध्रुवं कश्चित्सर्वं सकलमपरस्त्व-
ध्रुवमिदं परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ॥ समस्तेऽप्येत-
स्मिन् पुरमथन तैर्विस्मित इव स्तुवन् जिह्रेमि त्वां न खलु ननु धृष्टा
मुखरता ॥ ९ ॥ तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चो हरिरधः परिच्छेत्तुं
यातावनिलमनलस्कन्धवपुषः ॥ ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश
यत् स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥ अयत्नादा-
पाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ॥
शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फू-
र्जितमिदम् ॥ ११ ॥ अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात्कैला-
सेऽपि त्वदधिवसतौ विक्रमयतः ॥ अलभ्यापातालेऽप्यलसचलिताङ्गुष्ठ-
शिरसि प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥ यदृद्धिं
सुत्राम्णो वरद परमोच्चैरपि सतीमधश्चक्रे बाणः परिजनविधेयत्रिभुवनः ॥
न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयोर्न कस्याप्युन्नत्यै भवति शिर-
स्त्वय्यवनतिः ॥ १३ ॥ अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपाविधेयस्या-
ऽऽसीद्यस्त्रिनयन विषं संहृतवतः ॥ स कल्माषः कण्ठे तव न कुरुते न
श्रियमहो विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥ १४ ॥ असि-
द्धार्था नैव क्वचिदपि सदेवासुरनरे निवर्तन्ते नित्यं जगति जयिनो यस्य
विशिखाः ॥ स पश्यन्नीश त्वामितरसुरसाधारणमभूत् स्मरः स्मर्तव्यात्मा
न हि वशिषु पथ्यः परिभवः ॥ १५ ॥ महीपादाघाताद्व्रजति सहसा

संशयपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ॥ मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ॥ जगद्द्वीपाकारं जलधिवलयं तेन कृतमित्य-नेनैवोन्नेयं धृतमहिमादिव्यं तव वपुः ॥ १७ ॥ रथः क्षोणी यन्ता शतधृति-रगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथ-चरणपाणिः शर इति ॥ दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधिर्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभु-धियः ॥ १८ ॥ हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मा न्निजमुदहरन्नेत्रकमलम् ॥ गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ १९ ॥ क्रतौ सुप्ते जाग्रत् त्वमसि फलयोगे क्रतुमतां क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ॥ अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ॥ २० ॥ क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ॥ क्रतुभ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥ २१ ॥ प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ॥ धनुष्पा-णेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तं तेऽद्यापि त्यजति न मृगव्याध-रभसः ॥ २२ ॥ स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्पुरः प्लुष्टं दृष्ट्वा पुरमथनपुष्पायुधमपि । यदि स्त्रैणं देवी यमनिरतदेहार्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥ श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ॥ अमङ्गल्यं शीलं तव भवतु नामैवमखिलं तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥ २४ ॥ मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः प्रम-दसलिलोत्सारितदृशः ॥ यदालोक्याह्लादं ह्रद इव निमज्यामृतमये दधत्यन्त-स्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥ २५ ॥ त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च । परि-च्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं न विद्मस्तत् तत्त्वं वयमिह तु यत्त्वं न भवसि ॥ २६ ॥ त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान-कारायैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ॥ तुरीयं ते धाम ध्वनिभिरवरुन्धा-नमणुभिः समस्तव्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २७ ॥ भवः शर्वो रुद्रः पशुपतिरथोग्रः सह महांस्तथा भीमेशानाविति यदभिधानाष्टकमिदम् ॥ अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥ २८ ॥ नमो नेदिष्ठाय प्रियदव दवीष्ठाय च नमो नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ॥ नमो

वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः ॥ २६ ॥ बहलरजसे विश्वोत्पत्तौ भवाय नमो नमः । जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३० ॥ कृशपरिणतिचेतः क्लेशवश्यं क्वचेदं क्व च तव गुणसीमोल्लंघिनी शश्वदृद्धिः ॥ इति चकितममन्दीकृत्य मां भक्तिराधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥ असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्वी ॥ लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश पारं न याति ॥ ३२ ॥ असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौलेर्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ॥ सकलगुणवरिष्ठः पुष्पदन्ताभिधानो रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥ ३३ ॥ अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत् पठति परमभक्त्या शुद्धचित्तः पुमान् यः ॥ स भवति शिवलोके रुद्रतुल्यस्तथात्र प्रचुरतरधनायुः पुत्रवान् कीर्तिमाँश्च ॥ ३४ ॥ महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ॥ अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ ३५ ॥ दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः ॥ महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम् ॥ ३६ ॥ कुसुमदशननामा सर्वगन्धर्वराजः शशिधरवरमौलेर्देवदेवस्य दासः ॥ स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात्स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥ ३७ ॥ सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः ॥ व्रजति शिवसमीपं किन्नरैः स्तूयमानः स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥३८॥ श्रीपुष्पदन्तमुखपंकजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण । कण्ठस्थितेन पठितेन समाहितेन सुप्रीणितो भवति भूतपतिर्महेशः ॥३९॥ इत्येषा वाङ्मयी पूजा श्रीमच्छंकरपादयोः । अर्पिता तेन मे देवः प्रीयतां च सदाशिवः ॥४०॥ इति स्कन्दपुराणे पुष्पदन्तगन्धर्वराजविरचित श्रीसदाशिवमहिम्नाख्यं स्तोत्रं संपूर्णम् । श्रीसदाशिवार्पणमस्तु । श्रीरस्तु ॥

## देवीपूजनम् ॥

अथ ध्यानम् । नमो देव्यै महादेव्यै शिवायै सततं नमः नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्मताम् ॥ ॐ मनसः काममाकूतिं वाचः सत्यमशीय । पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ अथ आवाहनम् ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्ण-

रजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१॥ अथ आसनम् ॥ तामऽआवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥ अथ पाद्यम् ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥ अथ अर्घ्यम् ॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥ अथ आचमनीयम् ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्ये ऽअलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥ अथ स्नानीयम् ॥ आदित्य वर्णे तपसो धिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायांतरायाश्च बाह्याऽअलक्ष्मीः ॥ ६ ॥ अथ पञ्चामृतस्नानम् ॥ तत्रादौ पयसा—ॐ पयःपृथिव्यांपय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ अथ शुद्धोदकस्नानम् ॥ ॐ आपोऽस्मान् मातरः शुन्धयन्तु घृतेन नो घृत्वः पुनन्तु ॥ विश्वᳫंहि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतᳫएमि ।—अथ दध्ना ॥ ॐ दधि क्राव्णोऽश्वस्य वाजिनः॥ सुरभिनो मुखाकरत्प्रणआयूᳫंषितारिषत् ॥ अथ शुद्धोदक स्नानम् ॥ आपो अस्मान्० ॥ अथ घृतेन ॥ ॐ घृतमिमिक्षे घृतमस्य योनिर्घृ तेश्रियोघृतम्वस्यधाम ॥ अनुष्वधमावह मादयस्वस्वाहा कृतं वृषभवक्षिहव्यम् ॥ शुद्धोदकस्नानम् ॥ ॐ आपो अस्मा० ॥ अथ मधुस्नानम्—॥ ॐ मधुव्वाता ऋतायते० ॥ शुद्धोदकस्नानम्० ॥ ॐ आपो अस्मान्० ॥ अथ शर्करास्नानम् ॥ ॐ अपाᳫं रसमुद्वयसᳫं सूर्य्ये सन्तᳫं समाहितम् ॥ अपाᳫं रसस्य यो रसस्तम्वो गृह्णा म्युत्तम मुपयाम गृहीतो सीन्द्रायत्वा जुष्टं गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ शुद्धोदकस्नानम् ॥ ॐ आपो अस्मान्० ॥ गन्धोदकस्नानम् ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतां तामिहोपह्वये श्रियम् ॥ उद्वर्तनस्नानम्—ॐ अᳫंशुनाते अᳫंशुः पृच्यतांपरुः ॥ गन्धस्ते सोममवतु मदायरसोऽअच्युतः ॥ पुनः शुद्धोदकस्नानम् ॥ ॐ आपो अस्मान्० ॥ ततः ॐ श्री जगदम्बायै नमः ॥ इति नाममन्त्रेण रक्तगन्धाक्षतरक्तपुष्पधूपदीपनैवेद्यानि समर्प्य ॥ वस्त्रं समर्पयेत् ॥ उपैतु मा देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतो सुराष्ट्रेस्मिन् कीर्तिं वृद्धिं ददातु मे ॥ ७ ॥ यज्ञोपवीतम् ॥ क्षुत्पिपासामलां, ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥ रक्तचन्दनम् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीमीश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ अक्षतम् ॥ ॐ अक्षन्न मीम-

दन्त हव्यप्रिया अभूपत् ॥ अस्तोपतस्त भानवो-ऽत्रिष्टा नविष्ठ्या मवी-
योजान्विन्द्रते हरिम् ॥ पुष्पाणि ॥ मनसः कामामाकूतिं वाचः सत्यमशी-
महि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥ धूपम् ॥ कर्द-
मेन प्रजाभूतामयि सम्भ्रमकर्दम । श्रियं वासय मे कुले मातरं पद्म-
मालिनीम् ॥ ११ दीपम् ॥ आपः स्रजन्तु स्निग्धानि चिक्लीत वस मेगृहे
निचदेवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ नैवेद्यम् ॥ आर्द्रां पुष्क-
रिणीं पुष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममा-
वह ॥ १३ ॥ दक्षिणाम् ॥ आर्द्रां यः करिणीयष्टिं पिङ्गलां पद्ममालि-
नीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥ प्रदक्षिणाम् ॥
तामऽआवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतिं
गावो दास्योऽश्वान्विन्देयं पुरुषानाम् ॥ १५ ॥ पुष्पाञ्जलिमन्त्रम् ॥ यः
शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । सूक्तं पञ्चदशर्चञ्च श्रीकामः
सततं जपेत् ॥ १६ ॥—सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्ध-
माल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद
मह्यम् ॥ १७ ॥ धनमग्निर्धनं वायुर्धनंसूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरु-
णं धनमश्विनौ ॥ १८ ॥ वैनतेय सोम पिव सोमं पिवतु
वृत्रहा । सोम धनस्य सोमनो मह्य ददातु सोमिनः ॥ १९ ॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां
भक्ताना श्रीसूक्तं जपेत् ॥ २० ॥ पद्मानने पद्मऊरु पद्माक्षी पद्मसम्भवे ।
तन्मे भजसि पद्माक्षि यन सौख्यं लभाम्यहम् ॥ २१ ॥ विष्णुपत्नीं क्षमां
देवीं माधवीं माधवप्रियम् । विष्णु सप्रियां देवीं नमाम्यच्युतवल्लभाम्
॥ २२ ॥ महालक्ष्मी च विद्मेह विष्णुपत्नी च धीमही । तन्नो लक्ष्मीः
प्रचोदयात् ॥ २३ ॥ पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विश्वमनानुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥ २४ ॥
आनन्दकर्दमः श्रीदश्चिक्लीत् इति विश्रुताः । ऋषयः श्रियपुत्राश्च
मयिश्रीर्देवो देवता ॥ २५ ॥ ऋणरोगादिदारिद्र्य पापच अपमृत्यवः ।
भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥ २६ ॥ श्रीर्वर्चस्वमायुष्यमारोग्य-
माविधाच्छोममान महीयते । धनधान्यं पशुं बहुपुत्रलाभं शतमर्तदीर्घ-
मायुः ॥ २७ ॥

## देव्या आर्तिः—वेदोक्त—

प्रररानीरनिवासिनि निगमप्रतिपाद्ये पारावारविहारिणी नारायणि

हृद्ये । प्रपञ्चसारे जगदाधारे श्रीविद्ये प्रपन्नपालननिरते मुनिवृन्दाराध्ये ॥ जय देवि जय देवि जय देवि जय मोहनिरूपे। मामिह जननि समुद्धर पतितं भवकूपे ॥ १ ॥ दिव्यसुधाकरवदने कुन्दोज्वलरदने पदनखजनजिति मदने मधुकैटभकदने । विकसितपङ्कजनयने पन्नग पतिशयने खगपति-वहने गहने सङ्कटवनदहने । जय देवि० ॥ २ ॥ मञ्जीराङ्कितचरणे मणि-मुक्ताभरणेकिंचिद्वस्त्रावरणे वक्राम्बुजधरणे शक्रामयभयहरणे भूसुरसुख करणे करुणां कुरु मे शरणे गजनक्रोद्धरणे॥जय देवि०॥ ३॥ छित्वा राहु-ग्रीवां पासि त्वं विबुधान् ददासि मृत्युमनिष्टं पीयूषं विबुधान् । विहरसि दानवऋद्धान्समरे संसिद्धान् मध्वमुनीश्वरवरदे पालय संसिद्धान्॥ जय देवि० ॥ ४ ॥

## अथ देव्या अथर्वशीर्षम् ।

ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्व महादेवी। साब्रवीदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्। शून्यं चा शून्य अहमा-नन्दानानन्दो अहं विज्ञानाविज्ञाने अहं ब्रह्माब्रह्मणी द्वे ब्रह्मणी वेदितव्ये। इति चाथर्वणी श्रुतिः। अहं पञ्च भूतानि अहं पञ्च तन्मात्राणि अहमखिलं जगत् वेदोऽहमवेदोऽहम् विद्याहमविद्याहम् अजाहम् नजाहम् अधश्चोर्ध्वं च तिर्यक्चाहम् अहꣳ रुद्रेभिर्वसुभिश्चरामि अहमादित्यैरुत विश्वदेवैः अहं मित्रावरुणावुभौ बिभर्मि अहमिन्द्राग्नी अहमश्विना उभा अहꣳ सोमं त्वष्टारं पूषणं भगं दधामि अहं विष्णुमुरुक्रमम् ब्रह्माणमुतप्रजापतिं दधामि अहं दधामि द्रविणꣳ हविष्मते सुप्राव्ये यजमानाय सुन्वते अहꣳ राष्ट्री सङ्गमनी वसुनाम् चिकितुषी प्रथमायज्ञियानाम् अहꣳ सुवेपितर मस्य मूर्धन्मम योनिरप्स्वंतः समुद्रेय एवं वेद सदैवी ꣳ सम्पद माप्नोति देवा अब्रुवन्। नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्मताम् ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणं प्रपद्यामहेऽसु-रान्नाशयित्र्यै ते नमः देवीं वाचमजनयन्तदेवास्तां विश्वरूपाः पशवो वदन्ति। सा नोमन्द्रेष मूर्जदुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ काल-रात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्। सरस्वतीमदितिदक्षदुहितरं नमामः पावनां शिवाम्। महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि तन्नो देवी प्रचोदयात्। अदितिर्ह्यजनिष्ठ दक्षया दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृत बन्धवः॥ कामो योनिवज्र-पाणिगुहा हंसा मातरिश्वाभ्रमिन्द्रः पुनर्गुहा सकला मायया,

दक्षिणायै दिशे स्वाहावाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहावाच्यै दिशे स्वाहावाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहावाच्यै दिशे स्वाहा ॥ १ ॥ पूर्ववदभिषेकः ॥

अथ गायत्रीहोमः । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्स्वाहा ॥ इति जपित्वाष्टोत्तरशतवारं जुहुयात् ॥ अभिषेकः ॥ तथैव-ओं जातवेदसे० इत्यष्टाविंशत्यधिकशतवारं पठित्वा होमं कुर्यात् ॥ अभिषेकः ॥ इति यथादिहोमद्रव्याहुतिं दत्त्वा । सूर्यमन्त्रैः पूजिताग्नौ घृतधारां कुर्यात् ॥ उत्थाय तत्र मन्त्रा-आदित्यं गर्भं पयसा-मंग्धिसहस्रस्य प्रतिमा विश्वरूपम् ॥ परिवृग्धि हर सामाभिमं ꣳ स्थाः शतायुषं कृणुहि चीयमानः स्वाहा ॥ ओं विश्वतश्चक्षुरुत विश्वतो मुखः विश्वतो बाहुरुत विश्वतस्पात् ॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः स्वाहा ॥

अथ सम्वत्सरहोमः । श्रीगणेशाय नमः ॥ हरिः ओं मीढुष्टम शिवतम शिवो नः सुमना भव ॥ परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि स्वाहा । १ ॥ ओं अश्वावती ꣳ सोमावतीमूर्जयन्तीमुदोजसम् ॥ आवित्सि सर्वा ओषधीरस्मा अरिष्टातातये स्वाहा ॥२॥ ओं सम्वत्सरोसि परिवत्सरोसीदावत्सरोसीद्वत्सरोसि वत्सरोसि ॥ उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्द्धमासास्ते कल्पन्तामृतवस्ते कल्पन्ता ꣳ सम्वत्सरास्ते कल्पन्ताम् ॥ प्रेत्या एत्यैसञ्चाञ्च प्रचसारय सुपर्णचिदसि तया देवतयाङ्गिरस्वद्ध्रुवः सीद स्वाहा ॥ ३ ॥ अभिषेकः ॥

अथ ऋतुहोमः । हरिः ओं वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः ॥

---

ग्रहसंख्याहोममन्त्राः—

गायत्र्या दशसाहस्रं मानस्तोकेन षड्गुणम् ।

त्रियम्बकादिमन्त्रैश्च चत्वारि विष्णुदैवतैः ॥ १ ॥

नाङ्गुष्ठादधिका कार्या समित्स्थूलतरा क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता । प्रादेशमात्रा संयोज्या समित्सर्वत्र नाधिका ॥ ( समिदादीनामा-

हुत्याबद्धेर्दुबाल्स्य० ॥

इत्यादि मन्त्रैः ग्रहसंख्याहोममन्त्राः ॥

पूर्वं प्रज्वलितो वह्निर्हविर्द्रव्यं मुमुक्षते ।

तृप्तो निर्धूमनिर्वाला मृडाग्निः परिकीर्तितः ॥ १ ॥

नयनम् ) समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् व्रजत्यधः ॥ समिदं एव होतव्यम्—योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि

छिथंशेमृताम्तु ताः ॥ सत्येन रेवतीः चत्रंथं हविरिन्द्रे वयो दधुः ॥ ६ ॥ अभिषेकः ॥

अथ मासहोमः [ ओं नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्द्धमासेभ्यः स्वाहा मासेभ्यः स्वाहा ऋतुभ्यः स्वाहार्त्तवेभ्यः स्वाहा संवत्सराय स्वाहा द्यावापृथिवीभ्याथं स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥ ॐ एकस्मै स्वाहा द्वाभ्याथंस्वाहा शताय स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम स्वाहा ] अर्द्धमासाः परूंथंषि ते मासा आच्छ यन्तु शम्यन्तः ॥ अहो रात्राणि मरुतो विलिष्टंथं सूदयन्तु ते स्वाहा ॥ १ ॥ ॐ मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वाहा ईषाय स्वाहोर्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाथंहसस्पतये स्वाहा ॥

अथ पक्षहोमः । हरिः ॐ इमौ ते पक्षावजरौ पतत्रिणौ याभ्याथं रक्षाथंस्यपहथंस्यग्ने ॥ ताभ्याम्पतेमसकृतामुलोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः स्वाहा १ अभिषेकः ॥

अथ तिथिहोमः । हरिः ॐ अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताथंसप्तमी बृहस्पतेरष्टम्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी

---

सूतकविचारः—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ॥
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ १ ॥
प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ २ ॥

च मानवः । मन्दाग्निरामयावी च दरिद्रश्चैव जायते ॥ भवेदन्धः सधूमे तु जुहुयाद्यो हुताशने । तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ॥ ( अग्निप-

पैठीनसिस्मृतेः—

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत् कर्म यज्ञादि कारयेत् ॥ ३ ॥

यमस्य त्रयोदशी स्वाहा १ ॐ नन्दायै स्वाहा, ॐ भद्रायै स्वाहा, ओं जयायै स्वाहा, ओं. ओं रिक्तायै स्वाहा, ओं पूर्णायै स्वाहा ॥ इति ॥ त्रिवारमुच्चार्य जुहुयात् ॥ अभिषेकः ॥

अथ सप्तवारहोमः । हरि ॐ आकृष्णेन रजसा० इति सूर्याय ॥ ओं इमन्देवा असः० इति चन्द्रमसे एव सर्वेषां मन्त्रैर्जुहुयात् ॥ ओं कार्षिरसि समुद्रस्य त्वाक्षित्या० ॥ इति च क्वचित् ॥ अभिषेक. ॥

अथ राशिहोमः । हरि ओं अश्वस्तूपरोगो मृगस्ते प्रजापत्याः कृष्णग्रीव आग्नेयोरराटे पुरस्तात्सारस्वतीमेष्यध-स्ताद्धन्वोराश्विधोरामौ वाह्वोः सोना पौष्णः श्यामो नाभ्याथंसौर्य-यामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वा-यव्यः श्वेतपुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः स्वाहा ॥ १ ॥ ओं प्रैतु वाजो कनिक्रदन्नानदद्रासभः पत्वा भरन्नग्निम्पुरीष्यमापाद्यायुषः पुरा ॥ वृषाग्नि वृषणम्भरन्नपाङ्गर्भं ᳪ समुद्रियं अग्न आयाहि वीतये स्वाहा ॥ २ ॥ ओं अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ॥ इममपाᳪ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति उपयाम गृहीतो सिमर्काय त्वा स्वाहा ॥ ३ ॥ ओं कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरिते वना वयम् ॥ सुमङ्गलश्च शकुने भवासि मत्वा का दभिभा-विश्व्या विदित्स्वाहा ॥ ४ ॥ ओं यात्व्याघ्रं विपू चिकोभी वृकं च रक्षति ॥ श्येनं पतत्रिण ᳪ सि ᳪ ह ᳪ सम पान्व ᳪ हसः स्वाहा ॥ ५ ॥ ओं कोदात्कस्मा अदात्कामोदात्कामायादात् ॥ कामो दाता कामः प्रति-गृहीता कामैतत्ते स्वाहा ॥ ६ ॥ ओं बीभत्सायै पौल्कसं वर्णाय हिरण्य-कारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्यैजनवादिन वृद्धया अपगल्भᳪ सᳪ शराय प्रच्छिदं स्वाहा ॥ ७ ॥ ओं नमोस्तु सर्पे० ॥ ८ । ओं विश्वं

---

मनम् )—न वस्त्रपाणुना कुर्यात्राग्निशूर्पेस् वादिभिः । न कुर्याद् गिधमन कदा-चिद् व्यजनादिना । मुखेनैव धमेदग्नि धमन्या वेणुजातया ॥ 'मुखादेष व्य-

अथ संस्थाहोममन्त्राः—

ओं नमो वः किरिकेभ्यो देवाना हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः स्वाहा ॥ ओं रचोहा विश्वचर्षणिरभियोनि-मया हते ॥ द्रोणे सधस्थमासदत्स्वाहा ॥ ओं आनो नियुद्भिः शतिनीभिर-ध्वर । सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥ इति ॥

ज्ञापव' —इति चतुष्पदस्थाने पाठान्तरम् । ( स्वयमोक्तमेव वर्तम्यन्)—वह्न'

धनुः कपर्दिनो विशल्यो वाणवाँ २ उत ॥ अनेशन्नस्यया इषव आभु-रस्यनिषं गथिः स्वाहा ॥ ९ ॥ त्वामवस्युराराचस स्वाहा ॥ १० ॥ ओं वायव्यैौ वायव्यान्याप्नोति शतेन द्रोणकलशम् ॥ कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति स्वाहा ॥ ११ ॥ ओं पञ्चनद्यः सरस्वतीमपियन्ति स स्रोतसः सरस्वतो तु पञ्चधासौ देशे भवत्सरित्स्वाहा ॥ १२ ॥ अभिषेकः ॥

अथ नक्षत्रहोमः । हरिः ओं अश्विन तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् ॥ वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियं स्वाहा ॥ १ ॥ ओं यगाय त्वा मखा० ॥ २ ॥ ओं अग्नि मूर्द्धादि० ॥ ३ । ओं प्रजापतेनत्वादता ॥ ४ ॥ ओं सोमो धेनुꣳसो० ॥ ५ ॥ ओं नमस्ते रुद्र मन्यवव उतोत इषवे नमः ॥ बाहुभ्यामुत ते नमः स्वाहा ॥ ६ ॥ ओं अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वं स्वाहा ॥ ७ ॥ ओं वाचस्पतये पवस्व वृष्णो अꣳशुभ्या गभस्तिपूतः ॥ देवा देवेभ्यः पवस्व येषां भागोसि स्वाहा ॥ ८ ॥ ओं नमोस्तु सर्पे१ ॥ ९ ॥ ओं पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्पितरो मीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वं स्वाहा ॥ १० ॥ ओं भग एव भगवाँ २ अस्तु देवास्तेन वयं भगवन्त स्याम ॥ तन्त्वा भग सर्व इज्जोहवीति सानो भग पुर एता भवेह स्वाहा ॥ ११ ॥ ओं अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुꣳ सरस्वतीꣳ सवितारञ्च वाजिनꣳ स्वाहा ॥ १२ ॥ ओं सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा

---

सप्तजिह्वामुद्रा—

मध्यमे संहते धार्ये मिलिताङ्गुष्ठयोरधः ।

शेषा अङ्गुलयो मुक्ता मुद्रेयं सप्तजिह्विका ॥ १ ॥

वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृत भवेत् ॥ ( द्रव्यप्रतिनिधयः )—यथोक्तवस्त्वसंपत्तौ ग्राह्य तदनुकारि यत् ।

स्कान्दे—

अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनश्च ऋत्विजः ।

यजमानमदाक्षिण्यो नास्ति यज्ञसमो रिपुः ।

ऋक्सामयन्त्रा उच्चैर्याजुषा मन्त्रा उपांशवः ॥

यावानामिव गोधूमा व्रीहियामिव शालयः ॥ दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः । घृतप्रतिनिधिं कुर्यात्पयो वा दधि वा नृप ॥ आज्यहोमेषु सर्वेष

वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा विष्णुना दशम्या देवतया प्रसूतः प्रसर्पामि स्वाहा ॥ १३ ॥ ओं त्वष्टावीरन्देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ॥ त्वष्टेदं विश्वं भुवनं जजान बहोः कर्त्तारमिह यक्षि होतः स्वाहा ॥ १४ ॥ ओं वावो वामनोः ॥ १५ ॥ ओं इन्द्राग्नी आगत छे सुतङ्गीर्भिर्न्नभो वरेण्यम् ॥ अस्य पातं धियेषिता स्वाहा ॥ १६ ॥ ओं मित्रस्य चर्षणीधृतो वो देवस्य सानसि ॥ द्युम्नं चित्रः कवस्तमं स्वाहा ॥ १७ ॥ ओं त्रातारमिन्द्र० ॥ १८ ॥ ओं असुन्वन्त० ॥ १९ ॥ ओं अप्स्वग्नेसधि० ॥ २० ॥ ओं विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः विश्वे नो देवा अवमा गमन्तु विश्वमस्तु द्रविण वाजो अस्मे स्वाहा ॥ २१ ॥ ओं ब्रह्मजज्ञानं० ॥ २२ ॥ ओं विष्णोर- राट० ॥ २३ ॥ ओं वसुभ्यस्त्वादित्येभ्यस्त्वा संज्ञानाथान्द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम् ॥ व्यन्तु वयोक्त छे रिहाणा मरुताम्पृषती- र्गच्छ वसा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह ॥ चक्षुष्पा अग्नेसि चक्षुर्म्मे पाहि ॥ २४ ॥ ओं वरुणस्योत्तर्हं ॥ २५ ॥ ओं अवो- द्ध्यग्निः समिधा जनानां प्रतिधेनु मिवायतीमुषासम् ॥ २६ ॥ ॐ उत यवानामिव गोधूमा व्रीहिणामिव शालयः ॥ दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः । घृतप्रतिनिधि कुर्यात्पयो वा दधि वा नृप ॥ आज्यद्रव्येषु सर्वेषु नोद्धियुध्म्य श्रणोत्वज एकपात्पृथिवी समुद्रः ॥ विश्वेदेवा ऋतावृधा हुवानास्तु मन्त्राः कविशस्ता अवन्तु स्वाहा ॥ २७ ॥ ओं प्रपन्तव व्रते वयन्न रिष्येम कदाचन ॥ स्तोतारस्त इह स्मसि स्वाहा ॥ २८ ॥ अभि- षेकः ॥ इति नक्षत्रहोमः ॥

अथ विष्कुम्भादियोगहोमः ॥ हरिः ओं ॐ योगे योगे तवस्तरं वाजे वाजे हवामहे ॥ सखाय इन्द्र मूतये स्वाहा ॥ १ ॥ ओं विष्कुम्भाय स्वाहा ॥ एवं प्रत्येकं जुहुयात् ॥

अथ समुद्रहोमः ॥ हरि ओं [ ओं सप्त ऋषयः प्रतिहिताः

---

पठनीयाः स्वशाखीयी अन्यथाऽनर्थभाग्जनः ॥

अथ ब्राह्मणभोजनम्–

गर्भाधानादिसर्वेषु ब्राह्मणान्भोजयेद्दश ।

प्रायश्चित्ते चतुर्विंशद्गण्याधाने शतात्परम् ॥

गम्यमेव पूर्वं भवेत् । तदभावे महिष्यास्तु आजमाविकमेव च ॥ ( द्रव्यदेवत- योरनुक्तौ व्यवस्था )—आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते । मंत्रस्य देवता प्रायाये च प्रायश्चित्ते विपाद्दश पञ्च वा ।

गर्दर्श आज्यहोमे ग्रहयानां शतं परो ।

शरीरे सप्त रक्षन्ति सदमप्रमादम् ॥ सप्तापः स्वपितो लोकमीयुस्तत्र जाग्रतो अस्वप्नजौ सत्रसदौ च देवौ स्वाहा ॥ ओं पितृभ्य स्वधा० ॥ ओं पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः स्वाहा ॥ ओं मातेव पत्रं पृथिवी पुरीष्यमग्निं ᳪ स्वे योनाव-भारुखा ॥ ताम्वि श्वैर्दे वै ऋतुभिः सविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु स्वाहा समुद्रोसि नभस्वा नार्द्रदानुः शम्भूर्म्मयो भूरभिमा-वाहि स्वाहा ॥ मारुतोसिमरुताङ्गणः शम्भूर्मयो भूरभिमावाहि स्वाहा ॥ मारुतोऽसि मरुताङ्गणः शंभूर्मयोभूरभिमावाहि स्वाहा ॥ वस्यूरसि द्रुवस्वाञ्छम्भूर्मयोभूरभिमावाहि स्वाहा ॥ १ ॥ ओं आपो अस्मान्मातरः शुन्धयन्तु घृतेन सो घृतप्वः पुनन्तु ॥ विश्वᳪ हि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचिरातूत एभिर्दीत्ता तपसोस्तनूरसि तां त्वा शिवाᳪ शग्माम्परिदधे भद्र वर्णम्पुष्यन्स्वाहा ॥ २ ॥ ओं समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनानायन्त्यनिविशमानाः इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु स्वाहा ॥ ३ ॥ ओं या आपो दिव्या उत वा स्रवन्ति खनित्रिमा ऊत वा याः स्वयंजाः समुद्रार्थाः शुचयः पावकास्ता आपो देवीरिह मामवन्तु स्वाहा ॥ ४ ॥ ओं यासां राजा वरुणा याति मध्ये सत्यानृते अवपश्यं जनानाम् ॥ मधुश्चुतः शुचयो या पावकास्ता आपो देवीरिह मामवन्तु स्वाहा ॥ ५ ॥ ओं यासु राजा वरुणो यासु सोमो विश्वे देवा या सूर्यं मदन्ति ॥ वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह माम-वन्तु स्वाहा ॥ ६ ॥ ओं नदीभ्यः पौञ्जिष्ठमृत्तीकाभ्यो नैषादं पुरुषंव्याघ्राय दुर्मदं गधर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्यः उन्मत्तᳪ सर्पदेवजनेभ्यो प्रतिपदमयेभ्यः उन्मत्तᳪ सर्पदेवजनेभ्यो प्रतिपदनयेभ्यः कितवमीर्यता या अकितवम्पिशाचेभ्यो विदलकारीं यातुधानेभ्यः

---

चातुर्मास्येषु चत्वारि शतानि च सुरामखे ।
अयुतं वाजपेये च अश्वमेधे चतुर्गुणम् ॥

चापि प्रजापतिरिति स्थितिः ॥ ( काम्यहोमादौ वह्निनिवासादिविचारः)--चैका तिथिर्युता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः । सौख्याय होमे, शशियु--

ऋत्विग्नियमः--

कन्दमूलफलाहारा दधिक्षीराशिनोऽपि वा ।
दिनार्द्धं हवनं कुर्युः संवीताः विरजोम्बराः ॥ १ ॥

अथ मपडपाचार्यादीनां दक्षिणानियमः--

ःमरोवे प्राणार्थनाशो दिवि भूतले च ॥ शुक्लादितो वर्त्तमानतिथिरेकाधिका

फट्कोकारां स्वाहा ॥ ७ ॥ ओं इमम्मे गङ्ग यमुने सरस्वति शतुद्रि स्तोमं सचता परुष्ण्या ॥ असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्यासु मोषया स्वाहा ॥ ८ ॥ ( केषुचित्पुस्तकेषु पर्वहोमः— ॐ प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः ॥ ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनुरीयमाणाः ॥ विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि स्वाहा ) ओं यथावाणप्रहाराणां कवचं० इत्यादि मन्त्रैः पूर्ववदभिषेकः ॥ इति यवादिहोमद्रव्याहुतिं दत्त्वा द्वितीयवारं सूर्यमन्त्रैः पूर्ववत् घृतधारां कुर्यात् ॥ ओं शारदा मातरः प्रोक्ता मयरत्न मागरास्तथा । ततश्च देवताहोमं क्षेत्रायाः कुलदेवताः ॥ असङ्ख्याताः सहस्राणि स्वर्गमर्त्ये च भूतले । रुद्रजाप्यं ततः कृत्वा स्वस्ति कुर्यात्ततः परम् ॥ इति संवत्सरादिसमुद्रहोमः समाप्तः । ततश्चर्वादिद्रव्यैः स्थालीपाकहोमं कुर्यात् । संख्यामन्त्रैः संख्यायोक्तविधानेन जुहुयात् ॥ पश्चादेवं वरिरुद्र, वैष्णवी, आदित्य. विभ्राड, पञ्चभद्र, आदिहोमं कृत्वा ॥

अथोत्तराङ्गहोमः ॥ तत्रादौ सङ्कल्पः ॥ ओं अद्येहेत्यादि० अमुकहोमकर्मणि मया कारितस्य ब्राह्मणद्वारा नवग्रहादिमन्त्रांगहोमकर्मण उत्तरांगसिद्धये होमं करिष्ये ॥ व्याहृतित्रयस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप्छंदांसि अग्निवायुसूर्या देवता उत्तरांगहोमे विनियोगः ॥ ओं भूः स्वाहा इदमग्नये । ओं भुवः स्वाहा इदं वायवे ॥ ओं स्वः स्वाहा इदं सूर्याय ॥ ततः ओं प्रजापतये स्वाहा इदं प्रजापतये ॥ ओं अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते ॥ इति स्विष्टकृद्धोमः ॥ संश्रवं कृद्धोमाः ॥ संश्रवं प्राश्य पूर्णपात्रं सदक्षिणं ब्रह्मणे दद्यात् ॥ पाद्यादिभिः पूर्णपात्रं संपूज्य ॥ अद्येहेत्यादि० मया कारितस्य ब्राह्मणद्वारा, अमुककर्मांगहोमकर्मणः सांगफलप्राप्तये साद्गुण्यार्थं च इदं तण्डुलपूर्णपात्रं सदक्षिणं प्रजापतिदैवतममुकगोत्राय, अमुकशर्मणे ब्राह्मणाय तुभ्यमहं

---

वर्त्तमानवारेण रहिता चतुर्भिर्विभक्तया, त्रिशेषे शून्यशेषे च भुवि वासः
स्वर्णं रौप्यं च ताम्रं तदुत्तरमपि यद्दक्षिणा ॥
स्यात्सदेवाऽऽचार्याणामयं मार्गं तदनुमदकुलाद्ब्राह्मणानां तदर्द्धम् । १ ॥
अन्यायेभ्यो यद्दोक्तं गुरुचित्तघनभूषणानि मदयादीनाभायमत्र बन्धुम्नु वित्तविमर्दास्तत्रं पदम्पोऽस्ने: ॥ २ ॥

शुभः, पञ्चदिशे कमादिवि भूतले नागोऽशुभ इत्यर्थः । सूर्यभात् त्रिस्त्रिभे चन्द्रे सूर्यविद्गुरुसूनवः । चन्द्रारेज्याशुभिर्भिन्नो नेष्टा होमाहुतिः खले । सूर्य-
चन्द्रे सूर्यविद्गुरुसूनवः । चन्द्रारेज्याशुभिर्भिन्नो नेष्टा होमाहुतिः खले । सूर्य-

सम्प्रददे ॥ ओं अकन्कर्मेति दत्त्वा ॥ स्वतीत ब्राह्मणः प्रतिब्रूयात् ॥

अथ पूर्णाहुतिहोमः ॥ अद्येहेत्यादि अमुककर्माङ्गहोमकर्मणः साङ्गफलप्राप्तये न्यूनातिरिक्तपरिपूर्त्त्यर्थं मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये ॥ पाद्यादिभिर्मृडाग्निं संपूज्य ओं स्रुवश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मे ऽधिषवणे च मे पूतभृच्च म आधवनीयश्च मे वेदिश्च मे बर्हिश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥ इति रक्तसूत्रेण स्रुवं वेष्टयित्वा सम्पूज्य ॥ स्रुवपात्रे सघृतद्रव्यं पीतवस्त्राच्छादितं घृताभिघारितं नारिकेलपूगीफलादिफलं संस्थाप्य तत्पात्रं वामहस्ते धृत्वा उत्थाय यजमानदक्षिणहस्तेन—पूर्णा दर्वीति हिरण्यगर्भऋषिःत्रिष्टुप्छन्दो महावैश्वानरो देवता मृडनामाग्नौ पूर्णाहुतिहोमे विनियोगः ॥ ओं पूर्णादर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा इषमूर्ज ꣳ शतक्रतो स्वाहा ॥ १ ॥ ओं सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तर्षयः सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृण स्वधृते स्वाहा ॥ २ ॥ ओं पुनस्त्वादित्या रुद्राः वसवाः समिन्धतां पुनर्ब्रह्माणो वसुनीथयज्ञैः ॥ घृतेन त्वन्तन्वन्वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥ ३ ॥ ओं मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ॥ कवि ꣳ सम्राजमतिथिञ्जनानामासन्नापात्रं जनयन्त देवा स्वाहा ॥ ४ ॥ ओं जयन्ती मङ्गला० ॥ ५ ॥ इति घृतदिग्धं पीतरक्तवस्त्राच्छन्न स्रुक्पुटितं नारिकेलादिफलं प्रज्वलितेऽग्नौ घृतावच्छिन्नधारया सह जुहुयात् ॥ ततः ओं वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे लोकश्च मे स्रुवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् [ वा० पुराणमन्त्रैः ] इति पठन्तः स्रुवहस्तेनाज्यसहिता यजमानब्रह्माऽचार्यर्त्विजादिब्राह्मणाः

---

कात्यायनः—

ब्राह्मणे दक्षिणा देया या यत्र परिकीर्तिता ॥ इति ॥

होमकर्मापराधानां विप्राणां द्विगुणो जपः ।

इतरेषान्तु वर्णानां त्रिचतुःपञ्चसंख्यया ॥ १ ॥

वित् बुधः, पंगुः शनिः, आरः भौमः, इज्यः गुरुः, भृगुः राहुः, शिखी केतुः । कश्चिदग्निवासादिविचाराभावो निर्णयसिन्धौ ]-नित्ये नैमित्तिके दुर्गाहोमादौ न

होमद्विगुणजापेन सम्पूर्णं तर्पणं भवेत् ।

अकृते मार्जने प्रोक्तं तर्पणाद् द्विगुणो जपः ॥ २ ॥

प्रत्याम्नाये ब्रह्मभोज्यो न कुत्रापि मया मतः ।

सर्वथा भोजयेद्विप्रान् कृत्स्नाङ्गत्वसिद्धये ॥ ३ ॥

अग्नेर्देवतायाश्च प्रदक्षिणाचतुष्टयं कुर्युः ॥ अथाग्न्यालम्भनम्—ओं तनूपा अग्नेसि तन्वं मे पाहि ॐ आयुर्दा अग्नेऽस्यायुर्मे देहि ओं वर्चोदा अग्नेसि वर्चो मे देहि ॥ ओं सुमित्रिया न आप ओषधयः सन्तु इति सपवित्राभ्यां हस्ताभ्यां प्रणीताजलेन शिरः सम्मृज्य दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यं च, वयं द्विष्मः इतिप्रणीतापात्रमैशान्यां न्युब्जीकुर्यात् ॥ ओं देवा गातु विदो गातुं वित्वा गातुमितमनसस्पत ॥ इमं देवयज्ञ छं स्वाहा वातेधाः ॥ इति बर्हिर्होमः ॥ अथ त्र्यायुकरम्-ॐ मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ओं इम छं स्तनमूर्जस्वन्तः ॥ इति नारिकेलफलस्य वा यज्ञद्रव्यस्य विभूतिं गृहीत्वा त्र्यायुषमिति नारायण ऋषिरुष्णिक् छन्दः शिवो देवता त्र्यायुपकरणे विनियोगाः ॥ ओं घृतम्मिमिक्षे घृतमस्य योनि घृते श्रितो घृतं वस्य धाम अनुष्वधमावह मादयस्व स्वाहा कृतं वृषभ वक्षि हव्यम् ॥ इति घृतालोडनम् ॥ तत्रादौ देवतायास्त्र्यायुपकरणं कृत्वा पश्चाद्यजमानं दद्यात् ॥ ओं त्र्यायुषं जमदग्नेः इति ललाटे ओं कश्यपस्य त्र्यायुषं इति ग्रीवायाम् ओं यद्देवेषुं, इति हृदि ॥ ततः श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं बलं श्रियम् ॥ आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥ इति प्रणम्य ॥ यज्ञदशांशं तर्पणम्, तर्पणदशांशं मार्जनम्, मार्जनदशांश ब्राह्मणभोजनम्, ततो यज्ञदक्षिणासङ्कल्पः ॥ अद्येहेत्यादि० अमुकशर्माहं मया ब्राह्मणद्वारा कारितस्य अमुक (संख्यक) होमनवग्रहशान्तिमखकर्मणः साङ्गफलावाप्त्यै इमां सुवर्णरजतवास्त्रादिदक्षिणां, अग्न्यादिदैवत्यां, अमुकामुकगोत्रेभ्यो ऋत्विग्भ्यो तथा शान्तिपाठवाचकेभ्यो गणेशगायत्र्यादिजापकेभ्यो रुद्राध्यायविष्णुसहस्रनामपाठकेभ्यो ऋग्वेदादिचतुर्वेदोच्चारणकारकेभ्योतथा ग्रामदेवस्थानदेववादीनां पूजकेभ्यः साचार्यपुराण-शास्त्रादिवाचकेभ्योऽमुका-

---

विचारयेत् ॥ अन्यच्च—दुर्गाहोमविधौ विवाहसमये सीमन्तपुंसोत्सवे गर्भाधान विधौ च वास्तुसमये विष्णोः प्रतिष्ठादिषु । मौञ्जीबन्धनवैश्वदेवकरणे संस्कार्येऽयकाष्ठानि मत्स्यपुराण—

पलाशाश्वत्थन्यग्रोधप्लक्षवैकंकतोद्भवाः ।

शमी चोदुम्बरो बिल्वश्चन्दनं सरलस्तथा॥

शालश्च देवदारुश्च खदिरश्च त्रयोदश ॥ १ ॥

तदभावे कण्टकवर्ज्यं इति ॥

रनैमित्तिके होमे नित्यवत्ते न दोषकथनं चक्रञ्च वह्नेरपि ॥ अयाचंगहोमेऽपि न दिनं शोध्यं तस्य स्वतन्त्रकालत्वाभावादिति । (होमे प्रथमाहुतिर्गणपतेः—

सुकनामम्यो पूर्वपूजितकर्मकारकब्राह्मणेभ्यो वस्त्राभरणादिकं च विभज्य दातुमहमुत्सृजे ॥ ॐ तत्सन्न मम ॥ तथा भूयसीं दक्षिणां, अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॥ इति ब्रह्माचार्यद्विजादिब्राह्मणान्सुवर्ण-वस्त्रादिदानेन संतोष्य ॥ ततोऽग्निं विसर्जयेत्—ओं गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ भो भो वह्ने महाशक्ते सर्वकर्म्मप्रसाधक । कर्म्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥ यान्तु देवगणाः सर्वे पूजामादाय माकिकाम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ ओं यज्ञ यज्ञङ्गच्छ यज्ञपतिं गच्छ स्वां ग्योनिं गच्छ स्वाहा एष ते यशो यज्ञपते सह सूक्तवाकः सर्व्ववीरस्तं जुषस्व स्वाहा ॥ ओं धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । स चेतसो विश्वेदेवा यज्ञं प्रावन्तु नः शुभे ॥ अथाभिषेकं कुर्यात् ॥ ओं यत्त यमं वैवस्वतं मनो जगाम दूरकं ॥ तत्त आवर्त्तयामसि क्षयाय जीवसे ॥ १ ॥ ओं यत्ते भूमिं चतुर्भृष्टिं मनो जगाम० ॥ २ ॥ ओं देवस्य त्वा सवितुः प्रसवेऽश्विनो वाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतये त्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ४ ॥ ओं अग्निर्द्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता विश्वेदेवादेवता बृहस्पतिर्देवता इन्द्रो देवता वरुणो देवता ॥ ५ ॥ ओंद्यौः शान्ति- ॥ ६ ॥

---

अथ यज्ञारम्भमुहूर्तः-

सूर्य के उत्तरायण में तथा तीनहूँ उत्तरा, रोहिणी, विशाखा, कृत्तिका, रेवती, मृगशिर, ज्येष्ठा, पुष्य नक्षत्रों में रिक्तातिथि छोड़ यज्ञारम्भ करना परन्तु आहुति में वह्निवास लग्नदान शुद्धि भी देखनी चाहिये ॥ गणाधिपतये देवा प्रथम तु वराहुतिः । अन्यथा विफलं सर्वं भवतीह न संशयः । इत्थञ्च प्रथमाहुति पञ्चवारुणी [ प्रायश्चित्तसंज्ञक ] होमान-

आहुति–सूर्य के नक्षत्र से ३ । ३ करके चन्द नक्षत्र पर्यन्त क्रम से सु०, बु०, शु०, श० चं०, मं०, बृ०, रा०, के०, के मुख को आहुति होती है पापग्रह की शुभ नहीं है ॥

वह्निवास–वर्तमान तिथि में १ जोड़ के वार जोड़ना ४ से शेष करना० । ३ रहे तो पृथ्वी में अग्नि का वास है होम में सिद्धि होगी २ । १ शेष रहे तो अग्निवास पृथ्वी में नहीं होमादि कर्म में प्राणधनादि नाश हो ॥

न्तरक्रियमाणहोमस्याऽऽदिभूतेति ज्ञेयम् । पञ्चवारुणीहोमस्तु गणप-तेरपि प्रागेव भवतीति तात्पर्यम् ॥ इति परिभाषायां सामान्यभागः ।

ओं अमृताभिषेकोऽस्तु, ३ इत्यभिषेकः ॥ ततः कङ्कणं मोचयित्वा गोदानं विधाय गणपत्यादिदेवता विसृज्य। यजमानं तिलकदूर्वाभिराशिषंदद्यात् ॥ ब्रह्माचार्यऋत्विग्ब्राह्मणादीन्भोजयित्वा स्वयमपि भुञ्जीत ॥ शुभम् ॥

## अथ सूर्योपस्थान प्रयोगः ॥

आचम्य प्राणानायम्य ॥ सङ्कल्पः—अथ पूर्वोच्चारित्त वर्तमान-एवं गुण विशेषण विशिष्टायां शुभ पुण्य तिथौ ममाऽऽत्मनः श्रुतिस्मृति पुराणोक्त फल प्राप्त्यर्थं श्री सविता सूर्यनारायण प्रीत्यर्थं सूर्योपस्थान महं करिष्ये। कुश पवित्रधारणम्—ओं पवित्त्रेस्थो व्वैष्णव्व्यौ सवितुर्व्वः प्प्रसवऽउत्त्पुनाम्म्यच्छिद्रेण पवित्त्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्र पते पवित्र पूतस्य यत्काम ऽः पुनेतच्छकेयम् ॥ १ ॥ इति मन्त्रेणदक्षिण वाम हस्तयो रनामिकयोः कुश पवित्रं धार्य॥ सूर्यपूजनम्—ओं उदुत्यञ्जात वेद सं० ॥ २ ॥ सूर्यमुदीक्षन्—ओं उद्वयन्तमस० ॥ ३ ॥ ओं उदुत्यञ्जा० ॥ ४ ॥ ओं चित्रन्देवाना० ॥ ५ ॥ ओं तच्चक्षुर्दे० ॥६॥ ओं तत्सवितु० ॥ ७ ॥ अनुवाकः—ओं विभ्राड० ॥ १५ ॥ पुरुषसूक्तम्-ओं सहस्र शीर्षा० ॥ १६ ॥

शिव सङ्कल्पः—ओं यज्जाग्रतो० सुषारथि रश्वान्तम् ॥ ६ ॥ एते मन्त्राःरुद्राध्यायेद्रष्टव्याः, मण्डल ब्राह्मणम्,—ओं यदेतन्मण्डलं तपति तन्महदुक्थन्ताऽऋच ऽः स ऋचां लोकोथयदे तद् चिर्द्दीप्यते तन्महाव्रतं तानि सामानि स साम्नाँ लोकोथ य ऽएष ऽएत स्मिन्मण्डले पुरुष ऽः सोग्निस्तानियजू ᳪ षि सयजुषां लोक ऽः ॥ १ ॥ सैषा त्रय्येव विद्या तपति तद्धैतदप्य विद्वा ᳪ स आहुस्त्रयी, वा ऽएषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥ स ऽएष ऽएव मृत्युर्य ऽएष ऽएतस्मि न्मण्डले पुरुषो थै तद् सृतं यदे तदर्चि दीप्यते तस्मान्मृत्युर्न म्रियतेमृतेह्यन्तस्तस्माद्रु न दृश्यते मृतेह्यन्त ऽः ॥ ३ तदेष श्लोको भवति—अन्तरं मृत्त्योरमृत मित्य वर ᳪ ह्येतन्मृत्यो रमृतम्मृत्या वमृत माहित मित्ये तरिमन्हि पुरुष ऽएतन्मण्डलम्प्रतिष्ठितं तपति मृत्त्युर्व्विवस्वन्तं वस्तऽइत्यसौ वा ऽआ-

---

(१) इति मन्त्रेण सूर्यं गन्धादिव पुष्पैः सम्पूज्य (२) दक्षिण वाम पाणयो द्वौ द्वौ साग्रदर्भोगन्धादिव श्वेत पुष्प तुलसीदल सहितोधृत्वा पश्चादेते मन्त्राः पठनीयाः ॥

( इदं सूर्योपस्थानं श्रावण्यां तथा श्राद्धदिने कुर्वन्ति ॥ )

दित्यो व्विवस्वा नेपद्महोरात्रे व्विव्वस्ते त मेप वस्ते मर्व्वतोह्येनेन परिवृतोमृत्त्यो रात्मा व्विवस्वती त्ये तस्मिन्हि मण्डलऽएतस्य पुरुरया स्मैत देप श्लोको भवति ॥ ४ ॥ तयोर्द्धा ऽपतयोरुभयोर रेतस्य चार्चिपऽएतस्य च पुरुपस्यैतन्मण्डलं प्रतिष्ठा तस्मान्मह दुक्थ न्परस्मै न श छ सेन्ने देतांप्रतिष्ठां छिनदा ऽइत्येता ओं ह स प्रतिष्ठां छिन्तेऽवो मह दुक्थ परस्मैरा छ सति तस्मा दुक्थ श सम्भूयिष्टं परि चक्षतेप्रतिष्टा छिन्नोहि भवतीत्यधि देवतम् ॥ ५ ॥

अथाधि यज्ञम्;—यदेतन्मण्डलं तपत्य य छ स रुक्मोथपदेत दर्विर्द्दीप्यत ऽइदं तत्रपुष्करपर्णं प्रापोह्येताऽआप ऽपुष्कर पर्णं :मथय ऽएप ऽएतस्मिन्मण्डले पुरुपो यमेव स वोय छ हिरण्मय ऽः पुरुपस्तदेवदेवैतत्रय छ संस्कुर्ये हा पधत्तेतद्यज्ञ स्यै वानु स छ स्था मूर्द्ध मुत्क्रामति तदे तम प्येतिय ऽएप तपति तस्मादग्नि न्नाग्निरेत परि हन्तुम मुत्र ह्येप तदा भवतीत्यु ऽएवाधियज्ञम् ॥ ६ ॥ अथाध्यात्मम् यदे तन्मण्डल तपति यश्चेप रुक्म ऽइदं तल्लुक्र मक्षन्नथ यदेतदर्चिर्द्दीप्यतेयच्चेतत्पुष्कर पर्णं मिदं तत्कृष्ण मक्षन्नथ य ऽएप ऽएतास्मिन्एडले पुरुपो यश्चैप हिरण्मय ऽः पुरुपो यमेव सयोयं दक्षिणे क्षन्पुरुप ऽः ॥ ७ ॥ स ऽएप ऽएव लोकं पृणता मेव सर्व्वोमि राभि सम्पद्यते तस्यै तन्मिथुन यो य छ सध्येक्षन् पुरुपोर्द्ध महै तदात्मनो यन्मिथुनं यदा वै सह मिथुने नाथ सर्व्वोथ कृत्स्न ऽः कृत्स्न तायैतद्यत्रेद्धे भवतो द्वन्द्व छ हि मिथुनम्प्रजननं तस्माद्वे द्वे लोकं वृणे ऽउपधीयेते तस्मा दुद्वाभ्यां द्वाभ्यांविविम्प्रण यन्ति ॥ ८ ॥ स ऽएप ऽएवेन्द्र ऽः यो यं दक्षिणेक्षन् पुरुपोथेयमिन्द्राणी ताभ्यां देवा ऽएतां विधृतिमकुर्व न्न सिकान्तस्मा ज्जायाया अन्ते नाश्नीया द्वीर्य्य वान्हास्मा ज्जायते वीर्य्य वन्त मुह साजनयति यस्या ऽअन्ते नाश्नाति ॥ ९ ॥ तदेव ह्वेवव्रत छ राजन्य वन्धवो मनुष्याणा मनुतमांगोपायन्ति तस्मादु तेपु व्वीर्य्य वा ज्जायते मृतवाका वयसा छ सा क्षिप्रश्येन जनयति ॥ १० ॥ तो हृदयस्या काशं प्रत्यवेत्य मिथुनी भव तस्तौ यदा मिथुनस्यान्तङ्गच्छतोथ है तत्पुरुप ऽः स्वपिति तद्यथा है वेदम्मानुपस्य मिथुनस्यान्तङ्गत्वा संविद ऽइव भयत्येव छ है वैतद संविद् ऽइव भवति देव छ ह्येतन्मिथुनम्परमो ह्येप ऽआनन्द ऽः ॥ ११ ॥ तस्मा देवं वित्स्वप्यात् योक्य छ है वेऽएततदे वते मिथुनेनप्रियेणधाम्नासमर्द्धयति तस्मादुह स्वपन्तधुरेव न बोधयेन्नेदेते देवते मिथुनी भवन्त्यौ दिनसानीति तस्मादु हैतत्सुसु पुप ऽः श्लेष्मण मिव

सुलम्भवत्येते ऽ एव वद्वेवतेरेव ऽः सिश्चतस्तस्मा द्वे वसऽइद ँ सर्व ँ सम्भवति वदिद ँ किञ्च ॥ १२ ॥ स ऽ एष ऽ एव मृत्यु ँ ॥ य ऽ एष एतस्मिन्मण्डले पुरुषो वश्चा यन्दक्षिणे चन्पुरुष स्तस्य ह ँ तस्य हृदये पादावविहतौतीह ँ तदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ ह ँ तत्पुरुषो म्रियते तस्मा दुह ँ तत्प्रेवमाहु राच्छेद्य स्येति ॥ १३ ॥ एष ऽ वऽएव प्राण ऽः । एव हीमा ऽः सर्व्वा ऽः प्रजा ऽः प्रणयति तस्यैते प्राणा ऽः स्वा ऽः स यदा स्वपित्य थैन मेते प्राणा ऽः स्वाऽअपियन्ति तस्मात्स्वाप्यय ऽः स्वाप्ययोह्वे त ँ स्वप्नऽइत्या चक्षतेपरोक्षन्परोक्षकामाहि देवा ऽः ॥ १४ ॥ स ऽ एतै ऽः सुप्तो न कस्य च न व्वेदन मनसा सङ्कल्पयति न व्वाचान्नस्य रसंव्विजानाति न प्राणेन गन्ध व्विजा नाति न चक्षुषा पश्यन्ति न श्रोत्रेण शृणोत्ये त ँ ह्येते तदापीताभवन्ति स ऽ एषऽ एक सन्प्रजासु वहुधा व्याविष्ट स्तस्मा देका सती लोकम्पृणा सर्व मग्निमनु व्विभवत्यथ यदेक ऽ एव तस्मा देकः ॥ १५ ॥ तदाहु ऽः । ऽएको पृथुर्व्वहवऽइत्येकश्च वहवश्चेति ह्यत्र याचदिहा स्तायमुत्र तेन कोथ यदिह प्रजासु वहुधाव्याविष्ट स्तेनो वहव ऽः ॥ १६ ॥ तदाहु ऽः । ऽअन्तिके मृत्युर्दू राऽइत्यन्तिके च दूरे चेतिह व्रूयाद्य दहाय मिहाध्या- त्मन्ते नान्तिकेथ यदसा वमुत्र तेनो दूरे ॥ १७ ॥ तदेष श्लोको भवति । अन्ये भात्यपश्रितो रसाना ँ स चरे मृत्यऽइवियदेवन्मण्डलं तपति वदन्न- मथ य ऽ एष ऽ एतस्मिन्मण्डले पुरुषः ऽः सोन्ना स ऽ एतस्मिन्नन्ने पश्रितो भातीत्यपि देवतम् ॥ १८ ॥ अथाध्यात्मम्—इदमेव शरीर मन्नमुथयोयं दक्षिणे चन् पुरुष ऽः सोन्ना स ऽएतस्मिन्नन्ने पश्रितो भाति ॥ १९ ॥ तमेव मग्निरित्यध्वर्य्यवऽउपासते ॥ यजुरित्येष हीद ँ सर्व्वं पुनक्ति सामेति छन्दोगाऽएतस्मिन्हीद ँ सर्वं ँ समानमुक्थमिति वह्वृचाऽ एष हीद ँ सर्व्वं मुत्थाप यति यातुरिति यातुविदऽएतेन हीद र्थो सर्व्वं यतं व्विषमिति सर्प्पा ऽः सर्प्प ऽइति सर्प्प विद ऽर्ज्जगिति देवा रयिरिति मनुष्या मायेत्य सुरा ऽः स्वधेति पितरो देवजन ऽइति देवजन विदो रूपमितिगन्धर्वा गन्ध ऽइत्यप्सर सस्त यथा यथो पासते तदेव भवति तद्धैनान् भूत्वा वति. तस्मा देन मेवं विस्मर्वे रेवैते रुपासीत सर्व्वं ँ हैतद्भवति सर्व्वं ँ हैनमेतद्भू त्वा ऽवति ॥ २० ॥ स ऽएष ग्रीष्ट कोग्नि र्द्धगेका यजुरेका सामैकावयाद्धा; च्चात्र्मोप दृधाति रुक्म ऽएव तस्या ऽआयत नमथ यां यजुषा पुरुष ऽएवतस्या ऽआयतनमथ यां साम्ना- पुष्कर पर्णमेव तस्याऽआयतन मेवंमिष्टक ऽः ॥ २१ ॥ तं वाऽएते ऽऽभे ऽएव च रुक्मऽएतत्र पुष्कर पर्णं मेतमपुरुषमपविऽऽभेत्,

क्सामे यजुरपतिऽएवम्वेकेष्टक ऽः ॥ २२ ॥ स ऽएषःऽएवमृत्यु ऽः ऽएष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणे चन्पुरुष ऽः सऽएष ऽएवं विद ऽः आत्मा भवति स यदेवं विदस्मों लोकात्प्रैत्य थेत मेश त्मान मभि सम्भवति सो मृतो भवति मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥ तेन वाऽरइदमग्रे सदासी न्नैव सदासीत् ॥ मण्डल ब्राह्मणम् ॥

तदाहु ऽः—किञ्छन्द ऽः कादेवताग्रे ऽः शिरऽइति गायत्री छन्दोऽग्नि र्देवताशिर ऽः ॥ १ ॥ किञ्छन्द ऽः का देवता ग्रीवा ऽइत्युष्णिक छन्द ऽः सविता देवताग्रीवा ॥ २१ ॥ किञ्छन्द ऽः का देवता नूक मिति बृहती छन्दो बृहस्पति देवता नूकम ॥ ३ ॥ किञ्छन्द ऽः का देवता पक्षाविति बृहद्रथन्तरे छन्दो यावा पृथिवी देवते पक्षौ ॥ ४ ॥ किञ्छन्द ऽः का देवता मध्य मितित्रिष्टुप् छन्द ऽइन्द्रोदेवता मध्यम् ॥ ५ ॥ किञ्छन्द ऽः का देवता श्रोणीऽइति जगती छन्दऽआदित्यो देवता श्रोणी ॥ ६ ॥ किञ्छन्द ऽः का देवता यस्मादिदं प्राणा द्रेत ऽः सिञ्च्यतऽइत्यत्तिच्छन्द श्छन्दऽप्रजापत्तिर्देवता ॥ ७ ॥ किञ्छन्दऽका देवता योय मवाङ्प्राणऽइति यज्ञायज्ञियं छन्दो वैश्वश नरो देवता ॥८॥ किञ्छन्दऽका देवतोरुइत्त्य नुष्टम् छन्दो विश्वे देवादेवतोरू ॥ ९ ॥ किञ्छन्दऽका देवताष्ठी वन्ता विति पंक्तिरछन्दी मरुतो देवताष्ठीवन्तौ ॥ १० ॥ किञ्छन्दऽका देवता प्रतिष्टेऽइति द्विपदा छन्दो विष्णुं देवता प्रतिष्टे ॥ ११ ॥ किञ्छन्दऽका देवता प्राणऽइत्तिविरछन्दऽछन्दो व्वायु देवता प्राणाऽ ॥ १२ ॥ किञ्छन्दः का देवतो नातिरिक्ता नीति न्यूनाक्षरा छन्दऽआपो देवता नातिरिक्तानि सैषात्म विद्यै वैतन्मयो हैवैता ऽएतमात्मा नमभि सम्भवत्ति न हात्रान्या लोक्यत्ता याऽआशीरास्ति ॥ १३ ॥ धीरोह शातपर्णेयः ॥ ब्राह्मणम् ॥

ॐ त्रयं वाऽइदन्नामरूपं कर्म तेषा नाम्नां वागित्येतदेषा मुक्थ मत्तोहि सर्वाणि नामान्युत्तिष्ठन्त्ये तदेषाऽसामैतद्धि सर्वैर्नामभिऽसममेतदेषां ब्रह्मै तद्धि सर्वाणि नामानि विभर्त्ति ॥ १ ॥ अथ रूपणाम् – चक्षुरित्येत देषा . मुक्थमतो हि सर्वाणि रूपाण्यु त्तिष्ठन्त्येत देषाꣳसामैतद्धि सर्वै रूपैऽसममेव देषां ब्रह्मै तद्धि सर्वाणि रूपाणि विभर्ति ॥ २ ॥ अथकर्मणाम् —आत्मेत्येतदेषा मुक्थ मतो हि सर्वाणि कर्माण्यु त्तिष्ठन्त्येतदेषाꣳसामैतद्धि सर्वैऽकर्मभिऽसममेतदेषां ब्रह्मै तद्धि सर्वाणि कर्माणि

(१) तादाहु रित्यायत्र लिखित ब्राह्मण द्वयं केचित्पठन्ति केचिन्न ॥

रमति तदेत त्रयं सदेक मयमात्माऽऽत्मा उ एकः सन्नेतत्त्रयं तदेतदमृतं सत्येन छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ब्राह्मणम् ॥ ३ ॥ दृप्तबालाकिर्हानूचानो गार्ग्य आस—भूमिरन्तरिक्षं द्यौरिति अष्टावक्षराण्यष्टाक्षरं ह वा एकम्। गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥ ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥ प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ ३ ॥ अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा उ इति सर्वमु ह्येवैष रज उपर्युपरि तपत्येवं हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ४ ॥ सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम ॥ ५ ॥ तद्वै तत्सत्यं बले प्रतिष्ठितम् । प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोगीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता ॥ ६ ॥ 'सा हैषा गयांस्तत्रे,—प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्माद्गायत्री नाम स यामेवामूं सावित्रीमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणांस्त्रायते ॥ ७ ॥ 'तां हैके—सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेवानुब्रूयाद्यदि ह वा अपि बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकञ्चन पदं प्रति ॥ ८ ॥ स य इमांस्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केनचनाप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥ ९ ॥ तस्या उपस्थानम्—[ उत्थाय ]—गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे। नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ १० ॥ एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच—यन्नु हो तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं ह्यस्याः सम्राण्न विदाञ्चकारेति होवाच ॥ ११ ॥ तस्या अग्निरेव मुखम् । यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव

नत्सदहत्येव ध्रु है वै व त्रिशद्यपि वहीव पापं करोति सर्व मेव तत्संसाय शुद्ध ऽः पूतोजरोऽऽमृतऽः सम्भवति ॥ १२ ॥ ब्राह्मणम् ॥ श्वेतकेतुर्हवाऽ श्रारुणेयऽ.प्रदक्षिणी कृत्य नमस्कृत्योपविशेत् ॥ १३ ॥ इति मण्डल ब्राह्मणम् ॥ (पाण्योर्गृहीत कुशानां कुशपवित्रयोश्च पूर्वस्यां दिशि त्यागः कर्तव्यः ) ॥ अर्पणम्—अनेन यथा शक्त्या कृतेन सूर्योपस्थान कर्मणा श्रीभगवान् सविता सूर्यनारायणः प्रीयतां नममः ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति सूर्योपस्थान प्रयोगः ।

## अथ प्रायश्चित्तादि गोदान प्रयोगः ।

कुशतिल जलमादाय अद्येत्यादि श्रुति स्मृति पुराणोक्त फल प्राप्ति कामो गोदान कर्माहं करिष्ये । गोदान निमित्तक ब्राह्मण वरणार्थं चंदनादिकमादाय ब्राह्मणमभ्यर्च्य अद्यकर्तव्यगोदाने एभिर्श्चंदनाक्षतपूगीफलतांबूलद्रव्यवस्त्रालङ्कारैरभ्यर्च्य अमुक शर्माणं ब्राह्मणम् एर्भिर्द्रव्याक्षत पूगीफलै,र्गोदानमहितत्वेनचाहंवृणेवृत्वोस्मीतिप्रति वचनम्, व्रतेनदीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम् दक्षिणा श्रद्धा माप्नोति श्रद्धया सत्य माप्यते । ततोगोदान सामग्रीं सम्प्रोक्ष्य गां सवत्सां पूज्येत् ॥ गवां मगेषुतिष्ठन्ति भुवनानि चतुर्दश ॥ यस्माचस्माच्छिवमेस्यादिह लोके परत्रच । गोभ्यः आसनम् । पाद्यम् अर्घ्यम् आचमनं स्नानम् ॥ मन्त्रविल् ॥ वस्त्रम्—आच्छादनं मया सम्यक् शुद्धं चैव सुनिर्मलम् । सुरभी वस्त्रदानेन प्रीयतां परमेश्वरी । इति वस्त्रेण गामाच्छाद्य ॥ गावोमे चाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवांमध्ये वसाम्यहम् ॥ इतिमन्त्रेण अक्षत पूजा प्रार्थना पंच गावःसमुत्पन्ना मथ्य माने महो दधौ॥ तासां मध्ये तथा श्रेष्टा तस्यैधेन्वै नमो नमः ॥ इति मन्त्रेणगन्धाः दिभिःपूजयेत् ॥ पूजितासिवसिष्टेन विश्वामित्रेणधीमता ॥- सुरभि हरमे पापं यन्मयादुष्कृतं कृतम् पुष्प माला ॥ नमो गोभ्यः श्रीमतीभ्यः सौरभे योभ्य एवच ॥ नमोब्रह्म सुताभ्यश्च पवित्राभ्यो नमोनमः ॥ सुरभि त्वं जगन्माता नित्यं विष्णु पदेस्थिता ॥ मातर्गृहाण मे दत्तं गोमावस्त्रातुमर्हसि ॥ इति मन्त्रेण गोभ्यो नैवेद्यम् ॥ धूपदीपादिकं दत्त फलानि विविधा निच ॥ गृणाणार्घ्यं मया दत्तं देहि मे वाञ्छितं फलम् ॥ रूपं देहि जयंदेहि भाग्यभवति देहि मे॥ पुत्रान् देहि धनदेहि सर्वान्कामांश्चदेहिमे॥ इति मन्त्रेण अर्घं दत्वा ।ततोङ्ग पूजा॥ पृष्ठे ब्रह्मणे ब्रह्मणे नमः । गले विष्णवे नमः ।॥ मुखेरुद्राय नमः । रोमकूपेषु सर्वेभ्योमहर्षिभ्यो नमो नमः पुच्छे सर्व नागेभ्यो नमः । स्तनेषु चतुस्समुद्रेभ्यो

नमः । खुराग्रेऽष्टकुल पर्वतेभ्यो नमः । नेत्रयोः शशिभा कराभ्यां नमः । शृंगयोर्मध्येसर्वतीर्थेभ्यो नमः मूत्रे गंगादि सर्व नदीभ्यो नमः । गोमये लक्ष्म्यै नमः । कर्णयोरश्विनी कुमाराभ्यां नमः । जिह्वायां सरस्वत्यै-नमः नासा पुटयोः सुमुखायनमः उदरे पृथिव्यै नमः । दक्षिण पार्श्वे कुबेराय नमः । वामपार्श्वे वरुणाय नमः । हूं—कारे सर्व वेदेभ्योनमः । इति अंगपूजा ॥ यानि कानि च पापानि ब्रह्महत्या समानिच ॥ तानि तानि विनश्यन्तु प्रदक्षिणपदेपदे॥ अथप्रार्थना॥ पृष्टे ब्रह्मा गले विष्णुर्मुखे रुद्रः प्रतिष्ठितः ॥ मध्ये देवगणाः सर्वे रोमकूपे महर्षयः । नागाः पुच्छे खुराग्रेषु येचाष्टौ कुल पर्वताः ॥ मूत्रे गंगादयो नद्यो नेत्रयो शशि भास्करौ एते यस्यास्तनौ देवाः साधेनुर्वरदास्तुमे ॥ या लक्ष्मीः सर्वभूतानां या च देवेऽव्यवस्थिता ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ विष्णो र्वक्षसि या लक्ष्मीः स्वाहा याच विभावसोः ॥ चन्द्रार्क शक्र शक्तिर्या सा धेनुर्व र दास्तु मे ॥ चतुर्मुखस्यया लक्ष्मी लक्ष्मीर्या धन दस्य च ॥ या लक्ष्मी लोक पालानां सा धेनुर्वरदास्तु मे ॥ या स्वधा पितृमुख्यानां स्वाहा यज्ञ भुज स्तथा ॥ सर्व पाप हराधेनुः सामे शांतिं प्रयच्छतु ॥ मनोमे तर्पयेत् चक्षुः मेतर्पयेत् । श्रोत्रं मे तर्पयेत्, प्रजान्मे तर्पयेत् गणान्मेतर्पयेत मिति गोपुच्छ तर्पणं इति सर्वाङ्ग तर्पयेत् ॥ ततः सङ्कल्पः – पूर्व सङ्कल्प सिद्धि रस्तु देश कालौ सङ्कल्प्य—

मम इह जन्मनि जन्मांतरे वा अज्ञान वशतः प्रकृति वियोगा च गुणत्रय कारण मनोवाक् काय कल्पितत्रिविध समस्त पाप संघट्टन पर दाराभिमर्षण ब्राह्मण हनन मद्यपान गुरु तल्प गमनेन्ध नार्थ द्रुम च्छेदन स्त्री हिंसौषध जीवन सवित्री विधवा दासी वेश्याभि गमन रहस्य पातकौ पपातका गम्या गमनाभक्ष्या भक्षण लेहना लेह्या चोष्या चोषणा भोज्या भोजना इस्य स्पर्शनानिन्द्राभोजन पंक्ति भेद वेदविक्रय हय विक्रय शूद्र संसर्ग देवता हरण फलादि हरणाजनित सकल पातका पनोदन पूर्वक मायुरारोग्य धनधान्य मं प्राप्त्यर्थम् इमां गां रुद्र दैवत्या वस्त्र द्वयाच्छन्नां स्वर्ण शृंगीं रौप्य खुरां रत्न पुच्छी ताम्र पृष्ठां घंटा चामर संयुतां कांस्य दोहनी श्री विष्णोः प्रीत्यर्थम् अमुक गोत्राय अमुक शर्मणे ब्राह्मणाय मूर्तिजाय तुभ्यमहं संप्रददे, नमम इति, ब्राह्मणम्—प्रति—गृह्णामि—स्वस्ति—कोदात् मिति मन्त्रं पठेत् ॥ कपिले सर्व देवाना पूजनीयासि रोहिणीम । तीर्थं देव मयायस्मा दत्त शान्तीं प्रय०॥ दानप्रतिष्ठा—मम कृतैतत् श्री परमेश्वर प्रीतये कृतस्य यत्किञ्चित्

सालंकारादि गोदान प्रतिष्ठार्थं रौप्यं चन्द्र दैवतं हिरण्यम् अग्नि दैवत अमुक गोत्राय अमुक शर्मणे ब्राह्मणाय तुभ्य महं संप्रददे, ओं तत्सत् न मम-इति प्रदक्षिणां कृत्वा, गांनत्वा, ब्राह्मणं नत्वा, भूयसीं दत्वा स्तुवीत। गावः पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा॥ गावोस्माकं वयं शान्तिः यतो गावस्ततो वयम्॥ गावःपवित्राः परमं गावो मंगल मुत्तमम्॥ गावः स्वर्गस्य सोपानं गावोधन्याः सनातनाः॥ घृत क्षीर प्रदा गावो घृत योन्यो घृतोद्भवाः। घृत नद्यो घृतवसा स्तामे संतु सदागृहे॥ अनेन गोदानेन श्री गोविन्दः प्रीयताम् द्यौः शान्तिमितिअभिषेच॥

## सर्व प्रायश्चित गोदान सङ्कल्प

अद्येह ऽमुक गोत्रः अमुक प्रवरः अमुक शर्मा मयाजन्म प्रभृति अद्य यावत् आचरितस्य समस्त पातकस्य अकृत प्रायश्चित्तस्य आमरणान्तं पापापनोद कामः इमां" वस्त्र द्वययुतां स्वर्ण शृंगीं रौप्य खुरां रत्न पुच्छीं ताम्र पृष्ठां घंटा चामर संयुतां कांस्य दोहनीं कपिलां 'धेनुं रुद्र' दैवतां ( तत्प्रत्याम्नायीभूत अमुक द्रव्य खण्डं अमुक दैवतं) विष्णोः प्रीत्यर्थंप्रायश्चित्त त्वेन अमुक गोत्राय अमुक शर्मणे सुपूजिताय ब्राह्मणाय तुभ्य महं संप्रददे। न मम-इति। गो प्रार्थना। प्रायश्चित्ते समुत्पन्ने निष्कृतिर्नष्कृता क्वचित् तस्य पापस्य शुद्ध्यर्थं धेनुमेवां ददामिते॥ १॥ गोदान प्रतिष्ठा— अद्यकृतैतत् श्री—परमेश्वर प्रीतये कृतस्य यत्किंचित्सालं कारादियुत प्रायश्चित्त गो ( प्रत्याम्नायीभूत अमुक द्रव्यदान कर्मणः ) दान-प्रतिष्ठार्थं अमुक द्रव्य खण्डं अमुक दैवताकं अमुक गोत्राय इत्यादि॥

## व्रत प्रतिष्ठा गोदान सं०॥

मम श्रुतु स्मृत पुराणोक्त फल प्राप्त्यर्थं श्री परमेश्वर प्रीत्यर्थम् एकादश्यादि तत्तद्व्रत कर्मणः प्रतिष्ठार्थम् इमां गां रुद्रदैवतां (तत्प्रत्याम्नायीभूतं रजतं चन्द्र दैवतां ताम्र खण्डं श्री सूर्य दैवतं) यथानाम गोत्राययथा नाम शर्मणे ब्राह्मणाय तुभ्य महं सं प्रददे॥ एकादश्यादि तत्तत् व्रतकर्मणः प्रतिष्ठार्थं गोप्रत्याम्नायीभूतानि द्रव्याणि तत्तत् दैवतानि नानानाम गोत्रेभ्यो नाना नाम शर्मभ्यो ब्राह्मणेभ्यः संप्रददे॥

## पाप पनोद धेनुदानम् ॥

ॐ तत्सत् पूर्व संकल्प सिद्धि रस्तु अद्येह अमुक गोत्रस्य अमुक प्रवरस्य अमुक शर्मणो मम मनोवाक्काय कर्मभिराजन्मोपार्जित पापापनोदार्थम् इमां कृष्णां पापापनोद धेनुं रुद्रदैवत्यां ( तत्प्रत्याम्नायीभूतं रौप्य खण्डं चन्द्रदैवतं ) अमुक गोत्राय अमुक शर्मणे सुपूजिताय ब्राह्मणाय तुभ्य मह संप्रददे नमम इति । प्रार्थना मन्त्र ।

आजन्मो पार्जितं मनोवाक्काय कर्मभिः । तत्सर्वं नाशमायातु पाप धेनु प्रदानतः ॥ दानप्रतिष्ठा–अद्यकृतैतत् पापापनोद धेनुं ( प्रत्याम्नायी भूत अमुक द्रव्यदान कर्मणः ] दानप्रतिष्ठार्थं अमुक द्रव्य खण्डं अमुक दैवतं अमुक गोत्राय अमुक शर्मणे ब्राह्मणाय दान प्रतिष्ठा त्वेनतुभ्यमहं संप्रददे ।

## ऋणापनोद धेनुदानम् ॥

ॐ तत्सत् पूर्व संकल्प सिद्धिरस्तु अद्येह अमुक गोत्रस्य अमुक प्रवरस्य अमुक शर्मणो मम आजन्मो पार्जितैहि कामुष्मिक समस्त ऋण जन्यपातक छेद काम इमां ऋणापनोद धेनुं रुद्र दैवतां [ तत्प्रत्याम्नायी भूत अमुक द्रव्य खण्डं अमुक दैवतं ] अमुक गोत्राय अमुक शर्मणे सुपूजिताय ब्राह्मणाय तुभ्य मह संप्रददेन मम इति प्रार्थना—ऐहि कामुष्मिकं यच्च, सप्त जन्मार्जितमृणम् । तत्सर्वं नाशमायातु, गामि कां ददतोमम ॥ दान प्रतिष्ठा—अद्य कृतैतत् ऋणापनोद [ प्रत्याम्नायीभूत अमुक द्रव्य दान कर्मणः ] दान प्रतिष्ठार्थं अमुक द्रव्यं अमुक दैवतं ॥ इत्यादि ॥

## अथ-मोक्षधेनु दान—

मोक्षदो यास्तु देवस्तु । वेद शास्त्रैस्तु गीयते ॥ तत्प्रीतये द्विजाग्र्याय, मोक्ष धेनु ददाम्यहम् ॥ ॐ तत्सत् पूर्व सङ्कल्प सिद्धिरस्तु अद्येह अमुक गोत्रस्य अमुक प्रवरस्य अमुक शर्मणो मम समस्त पापक्षय पूर्वक संसार मोक्षा वाप्ति कामः पापा मह महा विष्णु प्रीति कामश्च इमां—मोक्षधेनुं रुद्रदैवत्यां ( तत्प्रत्याम्नायीभूतं अमुक द्रव्य खण्डं अमुक दैवतं] अमुक अमुकगोत्राय शर्मणे सुपूजिताय तुभ्य मह संप्रददे । न मम इति । मोक्षधेनु प्रार्थना मन्त्रः ।—मोक्षं देहि हृषीकेश । मोक्षं देहि जनार्दन ॥ मोक्ष धेनु प्रदानेन ममकोऽनुगतः ॥ दान प्रतिष्ठा अ० कृ० मो० धे० ( प्रत्याम्नायीभूत अमुक द्रव्य दान कर्मणः ] दान प्रतिष्ठार्थं अमुक द्रव्यं अमुक दैवतं इत्यादि ॥

## तिल दान विधिः ॥

काँश पात्र कृष्ण तिल सुवर्ण सहित-संकल्पं ॥—

मम जन्म प्रभूति मरणान्तं कृत नाना विधपाप नाश नार्थ सहिरण्यं तिल पात्रं सोम दैवतम् अमुक गोत्राय अमुक शर्मणे ब्राह्मणाय सुपूजिताय तुभ्य मह अंप्रददे। तिलाः पुण्याः पवित्राश्च तिलाः स्वर्गकाराः स्मृताः ॥ शुक्ला वायदिवा कृष्णा ऋषिगोत्र समुद्भवाः ॥ यानि कानि चपापानि ब्रह्म हत्या समानिच ॥ तिल पात्र प्रदानेन तानि नाश्यंतु सर्वदा महर्षि गोत्र संभूताः कश्यपस्य तिलाः स्मृताः ॥ तस्मात्ते पां प्रदानेन मम पापं व्यपोह्तु ॥ इति कुश जलान्दत्वा ॥ दान प्रतिष्ठा-अद्य कृतैतत् सहिरण्य तिलक पात्र दानं प्रतिष्ठा सिद्ध्यर्थं दक्षिणां हिरण्यं अग्निदैवतं [ तन्मूल्योप कल्पितं द्रव्यम् अमुक दैवतं ] यथा नाम गोत्राय इत्यादि।

## उत्क्रान्ति धेनु

मम मुखेन प्रणोत्क्रमणार्थं श्री नारायण प्रीतये इमांउत् क्रान्ति धेनु रुद्रदैवत्यां [ तत्प्रत्याम्नानी भूतंरजतं चन्द्र दैवत ताम्रखंडं श्री सूर्य दैवत ] यथा नाम गोत्राय यथा नाम शर्मणे ब्राह्मणाय तुभ्यमहंसंप्रदे प्रार्थनामृत्यूत्क्रांन्तौप्रवृत्तस्य दुःखोत्क्रांतिनिवृत्तयोः तुभ्यं सम्प्रदेनाम्नां गांसमुत्क्रंति संज्ञिकाम् ॥ दान प्रतिष्ठा अद्यकृतैतत् उत्क्रान्तिधेनुप्रत्याम्नायीभूत अमुक द्रव्य दान कमर्णः दानप्रतिष्ठार्थं अमुक द्रव्यं अमुक दैवतं इत्यादि।

## दशदान संकल्पः

मम श्रुति स्मृति पुराणोक्त फल प्राप्त्यर्थं श्री परमेश्वर प्रीत्यर्थं गो-भू-तिल-हिरण्य-आज्य-वास-धान्य-गुड-रौप्य लवण प्रत्याम्नायी भूतानि इमानि रौप्य खण्डानि नाना नाम गोत्रेभ्यो नाना नाम शर्मभ्यो ब्राह्मणेभ्यः संप्रददे दान प्रतिष्ठा-अद्यकृतैतत् दश दान कृतप्रत्याम्नायी भूत कर्मणः प्रतिष्ठा सांगता सिद्ध्यर्थं यथोक्त फलप्राप्तये श्री नारायणप्रीतये इमानि रजत खण्डानि चन्द्र दैवतानि गोभूइत्यादि दशदान प्रत्याम्नायद्रव्य दान प्रतिष्ठात्वेन अहं संप्रददे ॥

कृत्वा सुदुष्करं कर्म जानता वाप्य जानता, मृत्युकालवशं प्राप्तं नरं पंचत्व मागतम् ॥ १ ॥ धर्माधर्म समायुक्तं लोभमोह समावृत्तम् ॥ दहेयं सर्वं गोत्राणि दिव्याँल्लोकात्सगच्छतु।

## अथ वृहद्गोदानविधिः

सर्वाघनाशनं पुण्यं सर्वकामार्थसिद्धिदम् ।
स्वर्गापवर्गदं चाथ वक्ष्ये गोदानमद्भुतम् ॥ १ ॥
अयने विषुवे पाते वैधृतौ सूर्य्यसङ्क्रमे ।
सौम्येन्दौ पौर्णमास्यां वा द्वादश्यां राहुपर्वणि ॥ २ ॥
मन्वादौ च युगादौ च जन्मर्क्षे पुत्रजन्मनि ।
यात्राकाले महोत्पाते दुःस्वप्नेऽद्भुतदर्शने ॥ ३ ॥
व्रते यागे प्रतिष्ठासु गावो देया शिवार्थिना ।
तीर्थे देवालये गोष्ठे सङ्गमे यज्ञमण्डपे ॥ ४ ॥
शालग्रामशिलाग्रे च शिवलिङ्गस्य सन्निधौ ।
इत्यादिषु प्रदेशेषु स्वगृहे वा पयस्विनीम् ॥ ५ ॥
दद्यादास्तिकबुद्ध्या तां सदैशां द्विजपुङ्गवे ।
कुलीनाय सुशीलाय वेदवेदाङ्गवादिने ॥ ६ ॥
सद्वृत्तायाप्रमत्ताय दान्ताय कुशवृत्तये ।
क्रोधहिंसाविहीनाय सदा सन्तोषजीविने ॥ ७ ॥
पितृमातृगुरूणां च भक्ताय प्रियवादिने ।
अनिंद्यदेशजाताय सांगाय व्रतचारिणे ॥ ८ ॥
जपस्वाध्यायनिष्ठाय तथा सत्यपराय च ।
परदारनिवृत्ताय वहिंसे वारताय च ॥ ६ ॥
सर्वदानानि देयानि विष्णुवत्त विचिन्तयेत् ।
अपराबाधमक्लेशं स्वयत्नेनार्जितं धनम् ॥
स्वल्पं वा विपुलं वापि देयमित्यभिधीयते ॥ १० ॥

तत्र दाता सुस्नातः गोदानसामग्रीं स्वाग्रतः संपाद्य सुलिप्तायां भूमौ सपत्नीकः स्वासने उपविश्य यथोक्तलक्षणां सवत्सां गां प्राङ्मुखी-मवस्थाप्य उदङ्मुखं ब्राह्मणं संस्थाप्य गणेशं नत्वा स्वाग्रतः गन्धा-दिना अर्घं संस्थाप्य कुशतिलजलयवान्यादाय सङ्कल्पं कुर्यात् ॥ ॐ विष्णुः ३ अद्येह अमुकगोत्रोऽमुकराशिरमुकशर्म्मा सपत्नीकोऽहम् श्रुतिस्मृतिपुराणोक्तफलावाप्तये सकलमनोरथसिद्धये च कृतैतद् श्रीयज्ञ-पुरुषप्रीतये गोदानं करिष्ये तत्प्रतिग्रहार्थं ब्राह्मणस्य पूजनपूर्वकं वर-णञ्च करिष्ये ।

उदङ्मुखं ब्राह्मणं अर्घ्यादिभिः सम्पूज्य वरणसामग्रीं करे धृत्वा, पञ्चभिर्गन्धाक्षतपुष्पमालायज्ञोपवीतवस्त्रफलादिभिः गोदानप्रतिग्रहार्थे अमुक-गोत्रममुकवेदाध्यायिनममुकशर्माणं ब्राह्मणं त्वामहं वृणे । वृतोऽस्मीति

ब्राह्मणो वदेत् ॥ ततः पुष्पमालादिभिर्ब्राह्मणं चालंकृत्य तत्र मंत्राः ॐ या आहरदिति भरद्वाज ऋषिरनुष्टुप्छन्दः सुमनसो देवता पुष्पमालाग्रहणे विनियोगः ॥ ॐ या अहरज्जमदग्निः श्रद्धायै कामयेन्द्रियाय अहं प्रतिगृह्णामि यशसा च भगेन च ॥ ॐ यद्यशोऽप्सरसमिति भारद्वाज ऋषिरनुष्टुप्छन्दः सुमनसो देवता पुष्पमालाबन्धने विनियोगः । ॐ यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु तेन संग्रथिताः सुमनसः आबध्नामि यशो मयि । ततो ब्राह्मणं प्रार्थयेत् । यदर्चनं कृतं विप्र तव विष्णुस्वरूपिणः ॥ तत्सर्वं मम दीनस्य विष्णवेऽस्तु समर्पणम् । ततः स्वपुरतः प्राङ्मुखीं गां सवत्सामवस्थाप्य तदुत्तरतो न्यस्य पूजयेत् ॥ तत्र सङ्कल्पः ॥ ॐ विष्णुः ३ अद्येत्यादि अमुक गोत्रोऽमुकराशिरमुकशर्माहं गोदानपूर्वाङ्गत्वेन सवत्सायाः गोः यथामिलितोप चारैः पूजनं करिष्ये । आवाहनम् । आवाहयाम्यहं देवी गां त्वां त्रैलोक्यमातरम् ॥ यस्याः स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ १ ॥ त्वं देवी त्वं जगन्माता त्वमेवासि वसुन्धरा । गायत्री त्व च सावित्री गङ्गा त्वं च सरस्वती ॥ २ ॥ तृणानि भक्ष्यसे नित्यममृतं स्रवसे प्रभो ॥ भूतप्रेतपिशाचांश्च पितृदैवतमानुषान् । सर्वांस्तारयसे देवि नरकात्पापसंकटात् । इत्यावाह्य पूजयेत् ॥ सर्व देव० इत्यादि

सवत्सायै गवे नमः पाद्यं स्नानं समर्पयामि । पुष्पं गृहीत्वा ॥ नमो विश्वमूर्तिभ्यः विश्वमातृभ्य एव च । लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ॥ गोः अग्रपादाभ्यां नमः ॥ गोः पश्चात्पादाभ्यां नमः ॥ देहस्था या च रुद्राणां शङ्करस्य सदा प्रिया । धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ गोरास्याय नमः ॥ विष्णोर्वक्षसि या देवी स्वाहा या च विभावसोः । चन्द्रार्कशक्रशक्तिर्या सा धेनुर्वरदास्तु मे ॥ गोः शृङ्गाभ्यां नमः गोः कर्णाभ्यां नमः । चतुर्मुखस्य या लक्ष्मीर्यालक्ष्मीर्धनदस्य च लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे ॥ गोः पृष्ठाय नमः । स्वधात्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा । सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ॥ गोः पुच्छाय नमः ॥ वस्त्रम् ॥ आच्छादनं मया दत्तं सम्यक् शुद्धं सुनिर्मलं । सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरि ॥ गन्धम् ॥ सर्वदेवप्रियन्देवि चन्दनं कुङ्कुमान्वितम् ॥ कर्पूरादिसमायुक्तं गौर्गन्धः प्रतिगृह्यताम् ॥ अक्षताः ॥ अक्षता अतिशुभ्राश्च कुंकुमाक्ताः सुशोभनाः । मयानीता मिवार्थं तान् गृहाण त्वं गवेश्वरि ॥ पुष्पाणि पुष्पमाला ॥ धूपम् ॥ आनन्दकृत् सर्वलोके देवानाञ्च सदा

प्रिये । गौस्त्वं पाहि जगन्माता धूपोऽयं प्रतिगृह्यताम् ॥ दीपम् ॥ साज्यं सद्वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेशि सर्वं तस्तिमिरापहम् ॥ गोग्रासः ॥ सुरभिस्त्वं जगन्माता, नित्यं विष्णुपदे स्थिता ॥ गोग्रासं च मया दत्तं नैवेद्यं प्रतिगृह्यताम् ॥ भूषणार्थे द्रव्यम् ॥ घण्टां चामरञ्च समर्प ॥ (क) ततो गोदेह तीर्थानू पूजयेत् ॥ अत्रविवारं प्र०

गन्धाक्षतपुष्पैः— शृङ्गमूले ब्रह्मविष्णुभ्यां नमः । शृंगाग्रे सर्वतीर्थेभ्यो नमः । शिरोमध्ये महादेवाय नमः । ललाटेगौर्य्यै नमः। नासरन्ध्रे षण्मुखाय नमः । नासापुटयोः कम्बलाश्वतराभ्यां नमः। दन्तेषु वायवे नमः । जिह्वायां वरुणाय नमः । हुँकारे सरस्वत्यै नमः । गण्डयोः मासपक्षाभ्यां नमः । ओष्ठयोः सन्ध्याद्वयाभ्यां नमः । ग्रीवायां रक्षोभ्यो नमः । कुक्षौ साध्येभ्यो नमः। जंघासु धर्माय नमः । खुरमध्ये गन्धर्वेभ्यो नमः । खुराग्रे कुलपर्वतेभ्यो नमः। खुरपश्चिमाग्रेषु अप्सरोगणेभ्यो नमः । पृष्टे एकादश रुद्रेभ्यो नमः। सर्व सन्धिा वसुभ्यो नम. श्रोण्योः पितृगणेभ्यो नमः। पुच्छे सोमाय नमः। पुच्छकेशेषु सूर्य्यरश्मिभ्यो नमः। गोमूत्रे गङ्गायै नमः गोमये यमुनायै नमः। क्षीरे सरस्वत्यै नमः। दध्नि नर्मदायै नम । घृते वह्नये नमः। रोमसु कोटिदेवेभ्यो नमः। उदरे पृथिव्यै नम । स्तनेषु चतु सागरेभ्यो नमः। एते यस्याः स्तनौ देवा सा धेनुर्वरदा मम। स्वर्णशृंगी रौप्यखुरां ताम्रपृष्ठां मुक्ताफलसमर्पितलांगूलतां कांस्यगोदोहनिकां विधाय प्रार्थयेत् ॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः। ततः सकुशाक्षतत्रयं गोपुच्छं गृहीत्वा ॥ प्राङ्-मुखो यजमानो देवतीर्थेन देवांस्तर्पयेत् । ॐ या नन्दिनी सुशीलाद्याः कामधेनुश्चैव धेनवः। ताः सर्वाः पुच्छतो येन तर्पितास्तर्पयन्तु माम् ॥ ब्रह्मा विष्णुर्महादेवः कार्तिकेयो गणाधिपः। पुष्पचापो महेन्द्रश्च भगवानच्युताग्रजः॥ देवाः समस्ताः सगणाः सवाहन परिच्छदाः। वसवोऽष्टौ द्वादशार्को रुद्रा एकादशैव तु ॥ विश्वेदेवाश्च साध्याश्चाष्टौ मरुतो मातरस्तथा। गन्धर्वा गुह्यकाश्चैव सागराः सरितस्तथा ॥ राक्षसा यक्षगणाः पूतनाः पर्वता द्रुमाः। तीर्थान्यप्सरसश्चैव पशवः पन्नगाः खगाः ऋक्षाणि राशयो योगा मासपक्षर्तुवासराः। अयने च युगाः कल्पाः तथा मन्वन्तराणि च॥ भुवनानि दिशोकाश्च तथा सर्वेन्द्रियाणि च। ॐ कारश्चैव गायत्री षडङ्गान्यङ्गानि चैव हि ॥ वेदाश्च स्मृतयश्चैव पुरा-

[क] अत्र विवारं प्रदक्षिणीकार्या।

णानि तथैव च । आयुर्वेदो धनुर्वेदो गन्धर्वो मन्त्रगह्वरः ॥ ओषध्यो वनसंभूता ग्राम्याश्चत्र सुपिप्पलाः । सानुगा देवताश्चैव मुनयः सगणास्तथा ॥ ऋषयः ऋषिपत्न्यश्च सिद्धाश्च सगणास्तथा ॥ प्रजा प्रजापतिश्चैव येऽन्ये विघ्नविनायकाः ॥ विद्याधराश्च दैत्याश्च आचार्य्या गुरवस्तथा । डाकिन्यः क्षेत्रपालाश्च भैरवाश्चाष्टसंख्यकाः ॥ स्थावरा जंगमाश्चैव भूतग्रामश्चतुर्विधः । अक्षयेनामृतेनैव मंगलेन सुवारिणा ॥ गोपुच्छाग्रच्युतेनेह मद्दत्तेन हितेऽखिलाः । शाश्वती तृप्तिमायान्तु दीर्घयुक्तवरप्रदाः सूर्य्यः सोमा कुजः सौम्यो गुरुः शुक्रः शनैश्चरः । ग्रहाश्च तृप्तिमायान्तु राहुकेतुसमन्विताः ॥ इन्द्रो वह्निर्यमो रक्षः पाशी वायुर्धनाधिपः । ईशोऽनन्तस्तथा ब्रह्मा सर्वे ते तर्पिता मया ॥ सावित्र्या सह लोकेशः सलक्ष्मी करचतुर्भुजः । महेशश्चोमया सार्द्धं तृप्तिमायान्तु शाश्वतीम् ॥ अत्रिर्वशिष्टो भृगुर्गौतमो च मरीचिर्दक्षो पुलहः पुलस्त्यः । प्राचेतसः काश्यपविश्वमित्रो भरद्वाजसंज्ञो यदमग्निरेव ॥ अन्ये च सर्वे मुनिपुंगवाश्च गृह्णन्तु दत्तं जलमद्य तुष्टाः । जीवत्पितृकस्य तर्पणे निषेधोऽस्तस्तेन तन्न कार्य्यम् ॥ ततो यज्ञोपवीतं कण्ठावरोहयं कृत्वा साक्षतकुशैः मनुष्यतीर्थेन मनुष्यांस्तर्पयेत् ॥ सनकः सनन्दनश्चैव सनातनस्तथैव च । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा । ते तृप्तिमखिलायान्तु गोपुच्छोदकतर्पणे ॥ ततोऽपसव्यं विधाय । द्विगुणि तकुशतिलजलैः पितॄंस्तर्पयेत् कव्यवाडनलः सोमो यमश्चैवार्य्यमा तथा । अग्निष्वात्ताः सोमपाश्च तथा वर्हिषदश्चये ॥ तर्पितास्तृप्तिमायान्तु गोपुच्छोदकर्पणे । यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥ वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥ वृकोदराय चित्राय चित्रगुप्ताय वै नमः । पिता पितामहश्चैव तथैव प्रपितामहः ॥ माता पितामही चैव तथैव प्रपितामही । मातामहःप्रमातामही वृद्धप्रमाता महस्तथा। मातामही प्रमातामही वृद्ध प्रमातामही तथा अक्षयां तृप्तिमायान्तु गोपुच्छोदकतर्पणे॥ ये मृता वै पितृव्याश्च मातुलाः श्वशुरास्तथा । आचार्य्यगुरुमित्राद्या गृह्णन्त्वेतं जलं मुदा । ये च सम्बन्धिनोऽपुत्रा वह्निदाह विवर्जिताः । अपमृत्युमृता येचते गृह् णन्तुशुभं जलमप्रतव शेमृतायेच मान् यशेष येमृताः । गुरुश्वगुरव भूतां ये चान्ये बांधवा स्मृताः ॥ येने कुले लुप्तपिंडा क्रियालोपगताश्चये । विरूपा आमगर्भाश्च ज्ञाता ज्ञाताः कुले मम ॥ ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणेः ॥ इत्थं तर्पणं विधाय सव्येनाचम्य ॥ प्राप् उदङ्मुखो गाम् उदङ्मुखो विप्रः पुच्छदेशे स्वयं स्थित्वा आम्र पात्रं सतिलं कनकेन ( सुवर्णेन ) अन्वितं ( युक्तं ) प्रगृह्य गोपुच्छं तस्याग्रे निधाय दानसंकल्पं कुर्य्यात् ॥ ॐ विष्णुः ३ अद्येत्यादि उपायं

अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुक वासरे अमुकतिथौ अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्य्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथ राशिस्थान स्थितेषु सत्सु एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममात्मन श्रुतिस्मृति पुराणोक्तफलप्राप्त्यर्थं मम ऐश्वर्याभिवृद्ध्यर्थम्, सकलमनईप्सित कामनासंसिद्ध्यर्थम्, लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजय लाभादिप्राप्त्यर्थम्, इह जन्मनि जन्मान्तरे वा सकलदुरितोपशमनार्थ, तथा मम सभार्य्यस्य सपुत्रस्य सबान्धवस्य अखिलकुटुम्बसहितस्य सपशो समस्तभयव्याधिजरापीडा मृत्युपरिहार द्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थम् तथा मम जन्मराशेरखिल कुटुम्बस्य वा जन्मराशेः सकाशाद्ये केचिद्विरुद्ध चतुर्थाष्टम द्वादशस्थान स्थित क्रूरग्रहास्तैः सूचित सूचयिष्यमाणश्च यत्सर्वारिष्ट तद्विनाशद्वारा एकादश स्थान स्थित वच्छुभफल प्राप्त्यर्थम्, आदित्यादिनवग्रहानुकूलता सिद्ध्यर्थम् तथा इन्द्रादिदशदिक्पालप्रसन्नता सिद्ध्यर्थम्, आधिदैविक–आधिभौतिक–आध्यात्मिकत्रिविधतापोपशम नार्थन्, धर्मार्थकाममोक्ष फलावाप्त्यर्थञ्च यथोक्तफलावाप्तये अमुकोनाथ अमुकवेदाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। दानवाक्यम्। यज्ञसाधनभूता या विश्वस्याघविनाशिनी। विश्वरूपधरो देव प्रीयतामनया गवा। कपिले सर्व देवानां पूजनीया शिरोहिणी। तीर्थं देव मयादत्ता तस्मात्शान्ति प्रियच्छमे। इत्युच्चार्य्य सकुशगोपुच्छं विप्रहस्ते दद्यात् विप्रोऽपि॥ ॐ द्यौस्त्वा ददातु पृथ्वी त्वा प्रतिगृह्णातु॥ ॐ देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्याम् पूष्णो हस्ताभ्याम्। ॐ कोदात् कस्माऽ अदात् कामोदात् कामा दाता काम प्रतिगृहीता कामैतत्ते॥ स्वस्तीति वदेत्॥

दानप्रतिष्ठा सङ्कल्प॥ ॐ विष्णु २ अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्माऽहं कृतैतद्गोदानप्रतिष्ठासिद्ध्यर्थम् इदं सुवर्णमग्निदैवतं यथाशक्तिमानमाज्ययावत्सहितं ब्राह्मणायदास्ये ॐ तत्सत्॥इति दद्यात्। ब्राह्मण पुच्छादकेनाभिषेकं कुर्यात्॥ ॐ शान्ति ॐ द्यौः शान्तिरन्तरिक्ष शान्ति पृथिवीशान्तिराप शान्तिरोषधय शान्तिर्व्वनस्पतय शान्तिर्विश्वेदेवा शान्तिर्ब्रह्म शान्ति सर्व्वं शान्ति शान्तिरेव शान्ति सामा शान्तिरेधि॥ ॐ विश्वानि देव सवितर्दुरितानि परासुव यद्भद्रं तन्नऽआसुव॥

---

यस्य गृ श चनामाथ पावगोविन्दक्रिया पु,
न्यूनं सम्पूर्ण तां याति सद्यो वन्दे तमच्युतम्॥ अच्युतायनमः।

इत्यभिषेकं कृत्वा, मन्त्राशिषं च दद्यात् ॥ ततो यजमानः ब्राह्मणेन समन्विता गां त्रिःप्रदक्षिणीकृत्य ॥ प्रदक्षिणामन्त्रो ॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥ यानि कानि च पापानि जन्मान्तरकृतानि च ॥ तानि सर्वाणि नश्यन्ति प्रदक्षिणपदे पदे ॥ ततो दक्षिणां भूयसीं च दद्यात् । ॐ विष्णुः ३ अद्येह अमुकगोत्रोऽमुकराशिरमुकशर्माहं गोदानकर्मणः साङ्गफलप्राप्तये सादगुण्यार्थं च इमां दक्षिणां ब्राह्मणाय तुभ्यमहं सम्प्रददे तथा भूयसीं दक्षिणाम् अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐ तत्सत । तथा यथोपपन्नेनान्नेन ब्राह्मणांश्च भोजयिष्ये ॥ ( क ) ततो ब्राह्मण आशिषं दद्यात् मन्त्रपाठः ॥

ॐ गोमो घेनु ँ सोमो ऽअर्वन्तमाशु ँ सोमोवे रङ्कर्म्मण्यन्ददाति ॥ सादन्यं विदत्थ्य ँ सभेयम्पितृश्रवणं यो ददाश दस्मै ॥ १ ॥ ब्राह्मणयुक्तां त्रिःप्रदक्षिणीकृत्य गोमतीं पठित्वा ततो गोदान ऽतिष्ठाभूयसीसंकल्पं कुर्यात् । गोमती अग्रे द्रष्टव्या ।

## गोदाने विशेषः

त्रिकं मातामहाद्यं च मातामह्यादिकं त्रयम् । ते च तान्च प्रदत्तं मे स्वीकुर्वन्तु जलं मुदा ॥ १ ॥ गोत्रे मदीये विमुवा मृता ये गोत्रे च मातुर्मम ये विपन्नाः । गर्भच्युताः श्राद्धविवर्जिताश्च तेभ्यः स्वाधानेन जलेन कृत्वा ॥ २ ॥ भूवग्निवज्रादिजलादिशस्त्रैर्विषाणदन्तैर्नखरैर्भुजङ्गैः । पञ्चत्वभावं विगताश्च ये च तेभ्यः प्रदत्तं शिवमस्तु तोयम् ॥ ३ ॥ ये रौरवादौ नरके निमग्नाः क्रियाविलुप्ताश्च कृतपकाराः । जन्मान्तरे ये मम दासभूतास्तेऽप्यत्रयां तृप्तिमिहाभजन्तु ॥ ४ ॥ ये बांधवा अबान्धवा येऽन्यजन्मनि बान्धवाः । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकवारिभिः ॥ ५ ॥ धेनुपुच्छे करं कृत्वा तर्पणं च करोति यः । आत्मानं तारयेद्विप्रो दशपूर्वान् दशापरान् ॥ ६ ॥ सन्तर्पिता मया ये च गोपुच्छोद कतर्पणे । आयुर्वृद्धिं तथा तुष्टिं मेधां प्रज्ञां च सन्ततिम् ॥ ७ ॥ आरोग्य धनमानं च मन्तुष्टाः प्रददन्तु मे ॥

गोमती पठेत्-गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः । गावः पवित्रा भूतानां गावः स्वस्त्ययनं महत् ॥ १ ॥ पावनं सर्वभूतानां

---

( क ) ॐ तत्सत् दक्षिणा दत्ता-पश्चात् स्वस्त्यस्तु इत्यादि वा यथाकुलाचारं नमः इति विष्णुं स्मरेत् ।

चरन्ति च न्हन्ति च । हविषा मन्त्रपूतेन तर्पयन्त्यमरानिदिवि ॥ २ ॥ ऋषीणामग्निहोत्रेषु गावो होमे प्रतिष्ठिता । सर्वेषामेव भूतानां गाव शरणमुत्तमम् ॥ ३ ॥ गाव स्वर्गस्य सोपान गावो धन्या सनातना । गाव पवित्रं परमं गावो मङ्गलमुत्तमम् ॥ ४ ॥ नमो गोभ्य श्रीमतीभ्य सौरभेयीभ्य एव च । नमो ब्रह्मसुता भ्यश्च पवित्राभ्यो नमो नम ॥ ५ ॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्रमन्त्रास्तिष्ठन्ति ॥ ६ ॥ गावो मामुपतिष्ठन्तु हेमशृङ्ग्य पयोमुच । सुरभ्य सौरभेय्यश्च सरित सागरास्तथा ॥ ७ ॥ गाव पश्याम्यहं नित्यं गाव पश्य तु मा सदा । गावोऽस्माकं वय तासां यतो गावस्ततो वयम् ॥८॥ घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवा । घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥९॥ गावो ममाग्रत सन्तु गावो मे सन्तु पृष्ठत । गावो मामुपतिष्ठन्तु गवां मध्ये वसाम्यहम् ॥१०॥ एवं रात्रौ दिवा रात्रि समेषु विषमेषु च । भयेषु च नरो नित्यं कीर्तयन्मुच्यते भयात् ॥११॥ इत्या यम्च चपन्प्रात सायं वा पुरुषस्तथा । यद्राज्या कुरुते पाप तद्राज्य प्रतिमुच्यते । यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ॥ १२ ॥

## अथ ब्रह्मयज्ञ प्रयोग ॥

( सूर्योपस्थाना नन्तर प्राच्यौ कृत्य नमस्कृत्योपविशत् । दर्भेषु पविश्य दर्भपाणिर्भूत्वा स्वाध्याय च यथा शक्त्या द्वावाम्यनदम् ) आचम्य प्राणानायम्य ॥ कुशपवित्र धारणम् —ॐ पवित्रेस्थो वैष्णव्यो सवितुर्व प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभि । तस्य ते पवित्रपते पवित्र पूतस्य यत्काम पुन तच्छकेयम् ॥ १ ॥

सङ्कल्प –अद्य पूर्वोच्चारित एव गुण विशेषण विशिष्टायां शुभ पुण्य तिथौ ममाऽऽत्मन श्रुति स्मृति पुराणोक्त फल प्राप्त्यर्थं ॐ तत्सन् परमेश्वर प्रीत्यर्थं यथाशक्ति ब्रह्मयज्ञं नाऽहं यक्ष्ये । अथवा ब्रह्मयज्ञ न्यास्या स्याम —द्वितीय सङ्कल्प — इषेत्वादिषु मन्त्रेषु व ब्रह्मान्तेषु दश प्रणव सहितपूर्वा क्रिया क्रिया स्तत्र विरसया तृप्ति प्रजापति देवता । सर्वाणि छन्दांऽसि सर्वाणि सामानि प्रतिलिङ्गस्त । देवता । ब्रह्म यज्ञे विनियोग ॥ ब्रह्म यज्ञाम्भ यच ॥ विधिरूतात्मा छन्द पुरुषऽशरीर न्यसन् । तिर्यग्बि-कारं पमऽऽव्यं बुध छन्द पुरुषस्य च ॥ न्यासा !—ॐ गौतम भरद्वा जाभ्या नम नेत्रयो । ॐ विश्वामित्र जमदग्निभ्या नम नासिकयो । ॐ अत्रये नम वाचि । ॐ गायत्र्यग्निभ्या नम शिरसि । ॐ उष्णिक्स

वितृभ्यांनमः ग्रीवायाम् ॐ बृहती बृहतिभ्यां नमः-अनुके। ( हनौ ) ॥ ॐ बृहद्रथन्तरत्वाया पृथिवीभ्यां नमः-बाह्वोः। ॐ त्रिष्टुविन्द्राभ्यां नमः—नाभौ। ॐ जगत्यादित्याभ्यां नमः-श्रोण्योः। ॐ अतिच्छन्दा प्रजापतिभ्यांनमः-लिङ्गे। ॐ यज्ञा याज्ञे वैश्वानाभ्यां नमः—गुदे। ॐ अनुष्टु विश्वेभ्यो देवेभ्यो नम.—ऊर्वोः। ॐ पङ्क्ति वरुणोनमः जान्वोः। ॐद्विपदा-विष्णुभ्यां नमः—पादयोः। ॐ विछन्दा वायुभ्यां नमः। नासापुटस्थ प्राणेषु। ॐ न्यूनाक्षरा छन्दोभ्यो नमः—सर्वाङ्गेषु ॥ एव मेवाङ्गानि-योजयित्वा वेदमयः सम्पद्यते। [ न कुत्राशिचद्भयं विन्दते। शापा नुग्रह सामर्थ्यं ब्राह्म तेजश्च वर्द्धते। स्वर्गं लोकं पर साधनम्। धर्मार्थं काम मोक्षस्य च। तस्य दारिद्र दुःख शोक रोगभयं नभवति। ऋषि देवता छन्दा छ सिधिदित्वाः ऋग्मयो यजुर्मयः साममयोऽथर्वमयोऽमृतमयो विष्णु रिदं कात्यायनस्य च ॥ ॐ भूर्भुवस्स्व÷तत्स वितु० ॥ २ ॥ ॐ इषेत्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्प्पयतु श्रेष्ठ तमाय कर्म्मणऽआप्यायध्वमघ्न्याइन्द्राय भागम्प्रजा वतीर नमीवाऽअयक्ष्मा मा वस्तेनऽईशत् मार्घशं छ सो ध्रुवा ऽअस्मिन्गोपतौ स्यात बह्वीर्य्यजमानस्य पशून्पाहि ॥ ३ ॥ वसोऽपवित्रम् ॥ हिरण्मयेन पात्रेण सत्यस्याऽपिहितम्मुखम्। योसावादित्ये पुरुषऽसो सावहम् ॥ ॐ खम्। खम्ब्रह्म। व्रतमुपै ष्यनन्वरेया हवनीयञ्च गार्हपत्यञ्च प्राङ्तिष्ठन्नपऽउप स्पृशति तद्यदपऽउपस्पृशत्य मध्यो वै पुरुषो यद् नृतम्वदति तेन पूति रन्तरतो मेध्यावाऽआपो मेध्यो भूत्वा व्रत मुपायानीति पवित्रम्वाऽआपऽपवित्र पूतो व्रत मुपायनीति तस्माद्वाऽअपऽउपस्पृशति ॥ १ ॥ सोग्नि मेवा भीक्षमाणो व्रत मुपैति ॥ [ ॐ पूर्ण मदऽपूर्णमिदं पूर्णात्पूर्ण मुदुच्यते। पूर्णस्य पूर्ण मादाय पूर्ण मेवा वशिष्यते। ॐ खं ब्रह्म। ॐ खं पुराणम् ॐ वायुरेव ख मिति स्माह कौर व्यायणी पुत्रो वेदय ब्राह्मण विदुर्वेदैन न यद्वे दितव्यम् ] ॥ ॐ प्राश्नी पुत्रादासुरि वासिनःऽप्राश्नी पुत्रऽआसुरायण दासुरायणऽआसुरेरासुरि र्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकाऽदुद्दालकोऽरुणादरुणऽउपवेशे रुपवेशिः कुश्रेऽकुश्रिर्वाज श्रवसो वाजश्रवाजिह्वावतो वाध्योगाज्जिह्वावान् वाध्योगोऽसितादार्षगणादसितो वार्षगणो हरि तात् कश्यपाद्धरितःऽशिल्पात्कश्यप

---

[ १ ] एते मन्त्राः स्वर पूर्वकं पठनीया इति केशांचित् मत्ते। परं च इत्यायुषः एवंवति प्राङ्मुखः प्राग्मेव कुशेषु पविश्य वाम हस्त जले कुश पवित्रे [ द्वौदर्भौ ] कृत्वा बहुपरिदक्षिण हस्त यशो मुलं कृत्वा ॐकार पूर्विका गायत्री तथा चतुरो वेदादीन् पठेत् ॥ [ २ ] इदंपजुर्वेदोरलहणम् ॥

क्लिष्टा स्पष्ट वर्णविपर्यस्तादिभिः पठितानां श्रुतीनां यथातयामत्वं तत्परि हारार्थं अष्टत्रिंशदनध्याया ध्ययनेरध्यारस्वरतः शूद्रस्य शृ-ण्वतोऽध्ययनेम्लेच्छान्त्य जादेः शृण्वतोऽध्ययने अशुचिदेशेऽध्ययने आत्मनोऽशुचित्वेऽध्ययने अक्षरस्वरानुस्वार पदच्छेद कण्डिका व्यञ्जनह्रस्व दीर्घप्लुत कण्ठ तालु मूर्धन्योष्ठ्य दन्त्य नासिका नुनासिक रेफ जिह्वामूलीयो पध्मा नीयो दात्तानुदात्त स्वरितादीनां व्य ये नोच्चरे माधुर्याक्षर व्यक्ति हीनत्वाधनेक प्रत्य वाय परि हार पूर्वं सर्वस्य वेदस्य स वीर्यत्वसम्पादन द्वारा यथावत्फलप्राप्त्यर्थं श्री परमेश्वर प्रीत्यर्थं सशिष्योऽहं शुक्लयजुर्वेदोत्सर्गोपा करणं करिष्ये इति सङ्कल्प्य, गुरुः शिष्यैः सह उभाकवीत्युच्चैः' पठेत् ॥ तथा—ॐ उभाक वीयुवा नो धर्मः परावतत् । परिसत्त्यानि धर्मिणो विसरव्यानिविसृजामहे ॥ इतिमन्त्रं पठित्वा यथा क्रमेण सर्वे गुरो रभिवादनं कुर्युः । ( पुनश्चदेशकालौ स्मृत्वा सङ्कल्पयेद्यथा ) सङ्कल्पः—अध्यायोत्सर्ग कर्म निमित्तं गण स्नानं महं करिष्ये। पुनरत्र इत्यादि ॐ स्वंब्रह्मान्तेषु याः क्रिया स्वत्रविश्वस्वान् ऋषिः सर्वाणियुजु छ विसर्वाणि छन्दा छ सि प्रजापतिलिङ्गोक्ता देवता स्नानादि सर्व कर्मसु विनि योगः इत्युक्त्वा' स्नाना नुज्ञां प्रार्थयेत्। यथा—नमोऽस्तु देव देवाय शिति कण्ठाय वेधसे । रुद्राय चाप हस्ताय दण्डिने चक्रिणे नमः। सरस्वती च गायत्री वेदमाता गरी यसी। सन्निधात्री भव त्वं च सर्वपाप प्रणाशिनी॥ यद्वा सागर निर्घोष दण्ड हस्ता सुरान्तक । जगत्स्रष्टर्जगन्मित्र नमामि त्वांसु रान्तक । तीक्ष्ण दंष्ट्र महाकाय कल्पान्त दहनोपम । भैरवाय नमस्तुभ्यं मनुज्ञां दातुमर्हसि ॥ नमामि गङ्गे तव पादपङ्कजं सुरा सुरैर्वन्दितदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यंभावा नुसारेण सदा नराणाम् ॥ ( इमं मन्त्रं समुच्चार्य तीर्थ स्नानं समाचरेत् । अन्यथा तत्फल स्यार्द्धं तीर्थंशोहरति ध्रुवम्, उत्तिष्ठन्तु महाभूता ये भूतानुमि वासिनः ॥ भूता नाम विरोधन स्नान कर्म समारभे ॥ अपसर्पन्तु ते भूता ये भूता स्तीर्थदूषकाः । येभूता विघ्न कर्तार स्ते नश्यन्तु शिवाज्ञया। पुष्करा द्यानि तीर्थानि गङ्गाद्या सरितस्तथा : आगच्छन्तु पवित्राणि स्नान काले सदामम ॥ अपा

---

अपामार्ग मिश्रितैः त्रिभि स्त्रिभिः कुशैः पृथक् पृथक् गायत्र्यां पठित्वा ब्रह्म ग्रन्थि युक्ताः कर्तव्य दार्वाः। ते च पीठे नवं स दशं पीठं वरं रम्भा स्तं वा ग्रसार्य तास्मिन्नग्मागमा उदगग्रा वारवार नीयाः। ।

माधि पति स्त्व च तीर्थेषु वसविस्तव । वरुणाय नमस्तुभ्य स्ना-
नानुज्ञाप्रयच्छमे ॥ अधिष्ठाग्यश्च तीर्थाना तीर्थेषुविचरन्ति या ।
देवतास्ता प्रयच्छन्तु स्नानाज्ञानम सर्वदा ॥ गङ्गे च यमुने चैव
गोदावरि सरस्वति । नर्मदेसिन्धु कावेरि जलेस्मिन् सन्निधिंकुरु ॥
तत' ॐ उरु छ हि राजा वरुणा-चकार० इतिमन्त्रेण तोयमभिम
न्त्रयेत् ॥ शेष स्नानविधि. प्रयाग वत्कर्तव्य ॥ तत धौत वा
ससो परिधाय दर्भा सनादौ प्राङ्मुख उदङ्मुखो वो पविश्य
भस्म गोपी चन्दनादि धृत्वा पवित्र पाणि रान्त्य माध्याह्न सन्ध्या
कुर्यात् । तत सूर्यो पस्थान मण्डल ब्राह्मण च सम्पाद्य । तत
ब्रह्म यज्ञ देवर्षि मनुष्य पितृ तर्पण च कुर्यात् । अथ ऋषि
पूजनम्—तत्रादौ स्वस्ति नाच मिति सूक्त सर्वं पठनीयम । ( इद सूक्त
तद् शान्त्याध्याये द्रष्टव्यम् ) । ऋषिप्रतिष्ठा'—ॐमनो जूतिर्जुषता
माज्यस्य बृहस्पतिर्यज्ञमिमन्तनो त्वरिष्टंयज्ञ छ समिमन्दधातु ।
विश्वे देवासऽइह मा दयन्ता मोंरम्प्रतिष्ठ । १२ । एष वै प्रतिष्ठा
नामयज्ञो यत्रै तेनयज्ञेन यजन्ते सर मेव प्रतिष्ठित मस्तु ॥ इति
मन्त्रेण ऋष्युपरि अक्षतान् निक्षिपेत् ॥ ऋषि आवाहनम्— ॐभू
र्भुव स्व कश्यपाय नम कश्यप आवाहयामि भोकश्यप इहा
गच्छ इह तिष्ठ पूजा गृहाणमम स मुख सु प्रसन्नोवरदो भव ॥ १ ॥
ॐ भू र्भुव स्व भरद्वाजाय नम भरद्वाजं आवा हयामि भो भर-
द्वाज इहागच्छ इहतिष्ट पूजा गृहाण ममसमुख सुप्रसन्नो वरदोभव
॥ २ ॥ ॐ भूर्भुव स्व गौतमा य नम गौतम आवाहयामि ।
भोगौतम इहागच्छ इह तिष्ट पूजा गृहाण ममसंमुख सुप्रसन्नो वर
दोभव ॥ ३ ॥ ॐ अत्रये नम अत्रिं आवाहयामि भो अत्रे इहागच्छ
इहतिष्ठपूजागृहाण ममसंमुख सुप्रसो वरदो भव ॥ ४ ॥ ॐ भूर्भुव स्व
जमदग्नये नम जमदग्नि आवाहयामि भो जमदग्ने इहागच्छ इह
तिष्ठ पूजागृहाण ममसमुख सुप्रसन्ना वरदोभव ॥ ५ ॥ ॐ भूर्भुव स्व
वसिष्ठ इहागच्छ इहतिष्ठपूजागृहाण मम संमुख सुप्रसन्नो वरदोभव
॥ ६ ॥ ॐ भूर्भुव स्व विश्वामित्र नम आवा हयामि । भो विश्वा
मित्र इहागच्छ इह तिष्ठ पूजा गृहाण मम समुख सुप्रसन्नो वरदो भव
॥ ७ ॥ ॐ भूर्भुव अरुन्धत्यै नम अरुन्धत्यै नम अरुन्धती मावा
हयामि भो अरुन्धति । इहागच्छ इहतिष्ठ पूजा गृहाण मम संमुखा
सुप्रसन्ना वरदाभव ॥ ८ ॥ ॐ भूर्भुव स्व याज्ञवल्क्याय नम याज्ञ
वल्क्य मावा हयामि । भोयाज्ञवल्क्य इहागच्छ इहतिष्ठ पूजागृहाण मम
संमुख सुप्रसन्नोवरदो भव ॥ ९ ॥ ॐ इमा देव गौतम भरद्वाजा वयमेव-

गौतमोऽयंभारद्वाजऽइमावेव विश्वामित्र जमदग्नीऽअयमेव विश्वामित्रो-ऽयं जमदग्निरिमा वेव वसिष्ठ कश्यपा वयमेव वसिष्ठोऽयं कश्यपो वागेयात्रि र्व्वाचन्नमत्ति नामैतद्यदत्रिरिति सर्व्वस्यात्ता भवति सर्वस्यान्नम्भवति यऽएवं वेद ॥ ४ ॥ सङ्कल्पः—अद्येत्यादि शुभपुण्य तिथौ ममात्मनः श्रुति स्मृति पुराणोक्त फल प्राप्त्यर्थं श्री परमेश्वर प्रीत्यर्थं उत्सर्जनाङ्गत्वेन अरुधन्ती सहित कश्यपादि सप्तर्षिस्व ऋषि पूजन महं करिष्ये ॥ तत्रादौ निर्विघ्नता सिद्धयर्थं महागणपति पूजनं स्मरणं वा करिष्ये । [ एव गणपतिपूजां स्मरणं वा कृत्वा ऋषीन्ध्या-येत् ] ॥ ध्यानम्—ॐ सप्तऽऋषयः प्रतिहिताःऽशरीरं सप्त रक्षन्ति सद् मप्रमादम् । सप्तापःऽस्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौसत्र सदौ च देवौ ॥ ३ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढ मस्यपा छं सुरेस्वाहा ॥ ४ ॥ सहस्रशी० ॥ ५ ॥ ॐ भू र्भुवः स्वः अरुन्-धन्ती सहित कश्यपादि स्व ऋषिभ्यो नमः ध्यान पूर्वक मा वाहनं समर्पयामि ॥ आसनम्—सुवर्ण घट्टित दिव्यं नाना रत्न समन्वितम् । आसनं रुचिरं यत्र गृह्यतांभो मुनीश्वराः ॐ पुरुष ए० ॥ ६ ॥ ॐ भू-र्भुवः स्वः अरुन्धती सहित काश्यपादिस्व ऋषिभ्यो नमः आसनं समर्प-यामि ॥ पाद्यम्—गङ्गाजलं समानीतं गन्ध द्रव्येण संयुतम् । पाद्यार्थं प्रति गृह्णन्तु कश्यपाद्या महर्षयः [ १ ]—ॐ एतावानस्य० । ७ ॥ ॐ भू र्भुवः स्वः अरुन्धती सहित कश्यपादि स्व ऋषिभ्यो नमः पाद्यं समर्पयामि ॥ अर्घ्यम्—सुवर्ण पात्र संयुक्तं गन्ध पुष्पाक्षतैर्युतम् । सप्तर्षयः प्रगृह्णन्तु इद मर्घ्यं मयार्पितम् ॥ ॐ त्रिपादू० ॥ ८ ॥ ॐ भू र्भुवः स्वः अरुन्धती सहित कश्यपादि स्व ऋषिभ्यो नमः अर्घ्यं समर्पयामि । आच-मनम्—कर्पूर वासितं तोयं सुवर्ण कलशेस्थितम् । दत्तमाचमनीयं च ऋषिणां प्रीतये सदा । —ॐ ततो वि० ॥ ९ ॥ ॐ भू र्भुवः स्वः अरु-न्धती सहित कश्यपादि स्व ऋषिभ्यो नमः ॥ आचमनीयं समर्पयामि ॥ स्नानम्—सुगन्ध द्रव्य संयुक्तं पवित्रा मङ्गलं जलम् । स्नानार्थं वः समानीतं मुनयः प्रतिगृह्यताम् ॥—ॐ तस्मा धज्ञात्सर्व० । १० ॥ ॐ भू र्भुवः स्वः अरुन्धती सहित कश्यपादि स्व ऋषिभ्यो नमः स्नानं समर्पयामि ॥ अथ चेपर्क—पञ्चामृतस्नानम्—पयो दधि घृतं चैव मधु च शर्करान्वितम् । पञ्चामृत मयानीत स्नानार्थं प्रति गृह्यताम्:—ॐ पञ्चनद्यस० ॥ ११ ॥ ॐ भू र्भुवः स्वः अरुन्धती सहित कश्यपादि स्व ऋषिभ्यो नमः पञ्चामृत स्नानं समर्पयामि ॥ गन्धोदकस्नानम्—ॐ गन्ध द्वारा दु० ॥ १२ ॥ ॐ भू र्भुवः स्वः अरुन्धती सहित कश्यपादिस्व ऋषिभ्यो नमः गन्ध स्नानं समर्पयामिः—पूर्वपूजां समाप्य । पुरुष सूक्ते

नाभिषेकं कुर्यात् ॥ ॐ सहस्रशी० ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्त ऋषिभ्यो नमः महाभिषेकं स्नानं समर्पयामि ॥ इति चेपकम् ॥ वस्त्रम्—सूक्ष्माण्यतीव शुभ्राणि वस्त्राणि विविधानि च । ऋषयः प्रति गृह्णन्तु उष्णशीत निवारणे । ] ॐ तस्माद्यज्ञा० ॥ ८ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्त ऋषिभ्यो नमः वस्त्रं समर्पयामि ॥ यज्ञोपवीतम्

यज्ञोपवीतम्—नानामन्त्रैः समद्भूत त्रिवृत्तं ब्रह्मसूत्रकम् । प्रत्येकं दीयते स्वच्छं ऋषयः प्रति गृह्णताम् ॥ ॐ तस्मा दश्वा० ॥ ४ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्तऋषिभ्यो नमः यज्ञोपवीतंसमर्पयामि ॥ गन्धम्—आत्मसन्तापहारं च सुगन्ध द्रव्य संयुतम् । चन्दनसमर्पयामि ऋषीणांप्रीतिहेतवे ॥ ॐ तम्यज्ञ० ॥ ५ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्त ऋषिभ्यो नमः गन्धं समर्पयामि ॥ अक्षतम्—अक्षता शुभ्र तन्दुल जा शुक्ला शङ्ख शुभ्रा मनोरमा । अक्षतान्सम्प्रयच्छामि गृह्णन्तु मुनि पुङ्गवा । ॐ अक्षन्नमी० ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्त ऋषिभ्यो नमः अक्षतान् समर्पयामि हरिद्रा—हरिद्राकुङ्कुमं चैव कज्जलभूषणानि च ॥ कङ्कणं कण्ठ सूत्रं च गृहाण परमेश्वरि ॥ ॐ अहिरिव० ॥ १०॥ ॐ भूर्भुवः स्वः अरुन्धतीसहित कश्यपादिसप्त ऋषिभ्यो नमः हरिद्रा कुङ्कुमादि द्रव्याणि समर्पयामि ॥ इति चेपकम् ॥ पुष्पाणि ( तुलसीदल—बिल्वपत्र—कमलानि च ऋषिभ्यो विशेषतः ) माल्यादीनि सुगन्धीनि मालत्यादीनि सत्तमा । मयार्पितानि पुष्पाणि गृह्णन्तु मुनिपुङ्गवा ॥—ॐ यत्पुरु० ॥ १८ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादि ऋषिभ्यो नमः ऋतुकालोद्भवपुष्पाणि समर्पयामि । धूपम्—कृष्णागुरुसमुद्भूतो धूपोऽयं च सुशोभनः । सुगन्धः कश्यपादिभ्यः ऋषीभ्यो दीयतेऽधुना ॥ ॐ ब्राह्मणो० ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्त ऋषिभ्यो नमः धूपं दर्शयामि ॥ दीपम्—पञ्च वर्ति समायुक्तं सर्वं मङ्गल शोभनं । मयानिवेदितो भक्त्या दीपोऽयंप्रतिगृह्यताम् ॥—ॐ चन्द्रमाम० ॥ २० ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिसप्त ऋषिभ्यो नमः दीपं दर्शयामि ॥ नैवेद्यम्—फलमूल समायुक्तं नाना शाक समन्वितम् । शर्कराघृत संयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥—ॐनाभ्याऽआ० ॥ २१ ॥ ॐ भूर्भुवः स्वः कश्यपादिसप्त ऋषिभ्यो नमः नैवेद्यं समर्पयामि ॥ नैवेद्य मध्ये पानीयं समर्पयामि । उत्तरापोशनं हस्त प्रक्षालनं मुख प्रक्षालनं करोद्वर्तनार्थे चन्दनं च समर्पयामि ॥

( अथ क्षेपकम्—फलम्—नारिकेलं कूष्माण्डंच कदली कर्कटी फलम्। ऋतुकालोद्भवं चान्यद्दीयतेऽद्य मुनीश्वराः। १। ॐ याः फलि० ॥ २२ ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहित कश्यपादि स्व ऋषिभ्यो नमः फलानि समर्पयामि ॥ इति क्षेपकम् ॥ ताम्बूलम्—पूगी फलं स कर्पूरं नाग वल्ली दलैर्युतम् ॥ एला लवङ्ग संयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ॐ— यत्पुरुषे० ॥ २३ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिस्व ऋषिभ्यो नमः ताम्बूलंसमर्पयामि ॥ अथ क्षेपकम्—दक्षिणा' हिरण्य गर्भ गर्भस्थं हेम बीजं विभावसोः। अनन्त पुण्य फलद मतः शान्तिप्रयच्छमे ॥ ॐहिरण्य गर्भः० ॥ २४ ॥ ॐ भूर्भुवः स्वः— अरुन्धती सहित कश्यपादिस्व ऋषिभ्यो नमः दक्षिणां समर्पयामि ॥ कर्पूरार्त्तिक्यम्'—ब्रह्मिष्ठा ब्रह्मरूपाश्च कश्यपाद्या महर्षयः। ब्रह्म यज्ञादि दातारः सन्तु मे कीर्ति कर्मणि ॥ ॐ इदंछह० ॥ २५ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिस्व ऋषिभ्यो नमः कर्पूरार्त्तिक्यं दर्शयामि ॥ इति क्षेपकम् ॥ प्रदक्षिणा—यानि कानि च पापानि जन्मान्तर कृतानि च १ तानि तानि विनश्यन्ति प्रदक्षिणा पदे पदे ॥ ॐ सप्तास्या० ॥ २६ ॥ ओं भूर्भुवः स्वः अरुन्धती सहित कश्यपादिस्व ऋषिभ्यो नमः प्रदक्षिणां समर्पयामि ॥ मन्त्रपुष्पयुक्तो नमस्कारः—शरणागत दीनार्थ परि त्राण परायणाः। रक्षन्तु मुनय सर्वे मामद्य शरणागतम्। सप्तर्षयः शुभाः श्रेष्ठा सर्वेषां च शुभ प्रदाः। पुष्पाञ्जलि मया-दत्तं गृह्णन्तु मुनिसत्तमाः ॥—ॐ यज्ञेन यज्ञ० ॥ २७ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादिस्व ऋषिभ्यो नमः मन्त्र पुष्प युक्तं नमस्कारं समर्पयामि ॥ प्रार्थना'—मन्त्र हीनं क्रिया हीनं भक्ति हीन मुनीश्वराः। यत्पूजितं मया सर्वं परि पूर्णं तदस्तुमे ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादि स्वऋषिभ्यो नमः प्रार्थनां समर्पयामि ॥ अर्पणम्—अनेनमया वेदोत्सर्जनाङ्गत्वेन कृतेन ध्याना वाहनादिषोडशोपचारादि पूजनेन अरुन्धती सहित कश्यपादि सप्तर्षिस्व ऋषयः प्रीयन्तां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति ऋषि पूजनम् ॥ ततः स्व'पितृभ्यो यज्ञोपवीत दानम्—अमुक गोत्रेभ्यः अस्मत्पितृ पितामह प्रपितामहेभ्यः। तथा द्वितीयं अमुक गोत्रेभ्यः अस्मन्मातामह प्रमातामह वृद्ध प्रमातामहेभ्यः। तृतीयं—कव्यवाड नलादि

( १ ) प्राचीनावीति दक्षिणाभिमुखः सर्वे कुशोदकं गृहीत्वापुरतोयज्ञोपवीतानि निधाय ॥

दिव्यपितृभ्य इमानि यज्ञोपवीतानिस्वधा सम्पद्यन्ताम् इति अर्घ्यपरि समर्पयेत् ॥ [ जीविपित् के रवि पितु पित्रादि भ्यो मातामहादिभ्यश्च यज्ञोपवीतानि देयानि ।.] तत सभ्य कृत्वा सर्वान्त्राह्मणान् । गन्धादिना सम्पूज्य तेभ्यो यज्ञोपवीतानि दत्त्वा पश्चात् सर्वे स्वय मपिधार्याणि ॥ यज्ञो पवीत धारण प्रयोग[1]—आचम्य प्राणानायम्य ॥ सङ्कल्प, अद्येत्यादि मम श्रौत स्मार्त कर्मानुष्ठान सिद्धयर्थं तथाच अमुक कर्माङ्गत्वेन यज्ञो पवीतधारण मह करिष्ये । सूत्र त्रिगुणी करणम्—इद विष्णुरिति मेधातिथिर्ऋषि । विष्णुर्देवता । गायत्री छन्द सूत्र त्रिगुणी करणे विनियोग —ॐ इद विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढ मस्य पा ७ सुरे स्वाहा ॥१॥

प्रक्षालनम्—आपोहिष्ठेतिसिन्धुद्वीप ऋषि । आपो देवता । गायत्री छन्द । यज्ञोपवीत प्रक्षालने विनियोग —ॐ आपोहिष्ठा मयो भुव स्तानऽऊर्ज्जे दधातन महेरणाय चक्षसे ॥२॥ यो व —शिव तमो रस स्तस्यभाजयतेह न —उशतीरिवमातर ॥ ३ । तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा चनऽ ॥४॥ ततो यज्ञो पवीतानि प्रक्षाल्य तन्तर दशगायत्री मन्त्रैरभि मन्त्र्य ॥ तन्तु देवतानामा वाहनम्—प्रणवस्य । ब्रह्मा ऋषि परमात्मा देवता । गायत्री छन्द प्रथम तन्तौ ॐ कारा वाहने विनियोग । ॐ प्रथम तन्तौ ॐ कार मावाहयामि । अग्निन्दूतमिति मेधा तिथि ऋषि । अग्नि र्देवता । गायत्री छन्द । द्वितीय तन्तौ ग्न्यावाहने विनियोग —ॐ अग्नि न्दूतम्पुरोदधे हव्यवाह मुपब्रुवे । देवा २ँ ऽ आसा दयादिह ॥ ५ ॥ द्वितीय तन्तौ अग्निमावाहयामि । नमोस्तु सर्पेभ्य इत्यस्य प्रजापति ऋषि सर्पा देवता । अनुष्टुप् छन्द । तृतीय तन्तौ सर्पा वाहने विनियोग —ॐ नमोस्तु । सर्पेभ्यो येकच पृथिवीमनु । येऽअन्तरिक्षे येदिवि तेभ्य—सर्पेभ्यो नम — ॥ ६ ॥ तृतीय तन्तौ सर्पाना वाहयामि । वय ७ सोमेत्यस्य बन्धु ऋषि सोमो देवता । गायत्री छन्द । चतुर्थ तन्तौ सोमा वाहने विनियोग —ॐ वय ७ सोमव्रते तव मनस्तनूषुबिभ्रतऽ प्रजावन्तऽ सचेमहि॥१॥ चतुर्थ तन्तौ सोममावाहयामि ॥ उदीरतामित्यस्य शङ्ख ऋषि । पितरो देवता । त्रिष्टुप छन्द पञ्चम तन्तौ पित्रा वाहने विनियोग —ॐ उदीरतामवरऽउत्परासऽउन्मध्यमा ऽ पितर—सोम्यास— । असु य्यऽ ईयुर वृकाऽऋतज्ञास्ते नो वन्तु पितरो हवेषु ॥ ८ ॥ पञ्चम तन्तौ पितृ ना वाहयामि ॥ प्रजापतेरित्यस्य हिरण्यगर्भ ऋषि । प्रजापतिर्देवता ।

---

(१) १ व पृष्ठ प्रयोग् वा दोष्यम् ।

त्रिष्टप् छन्दः। षष्ट तन्तौ प्रजापत्या वाहने विनियोग.—ॐ प्रजाप तेन। त्वदेता न्यन्न्यो विश्वारूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयं थं स्याम पतयोरयीणाम् ॥ ६ ॥ षष्ठतन्तौ प्रजापतये नमः प्रजापतिमा वाहयामि आनो नियुद्भिरित्यस्य। वसिष्ठऋषि। अनिलो देवता त्रिष्टप् छन्दः। सप्तम तन्तौ अनिला वाहने विनियोगः। ॐ आनो नियुद्भिःशतीनीभिरद्ध्वर थं सहस्रिणीभिरुपयाहि यज्ञम् ॥ व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदान ऽः ॥ १० ॥ सप्तम तन्तौ अनिलाय नमः अनिल मावाहयामि ॥ सुगाव इत्यस्यात्रिऋषि। गृह पतयो. देवता। आर्षी त्रिष्टप् छन्दः ॥ अष्टमं तन्तौयमा वाहने विनियोगः— ॐ सुगावो देवाऽ. सदनाऽ अकर्म्मयऽआजग्मेद थं सवनञ्जुषाणाऽ। भरमाणा वहमाना हवी थंष्यस्मेधत्त वसवो वसूनि स्वाहा ॥ १ ॥ अष्टम तन्तौयमाय नम. यममावा हयामि ॥ विश्वेदेवासऽआगत इत्यस्यामधु छन्दा ऋषि.। विश्वेदेवा देवता.। त्रिष्टुप्छन्दः। नवम तन्तौ विश्वेषा देवानामा वाहने विनियोगः—ॐ विश्वेदेवासऽआगत शृणुतामऽइमथं हवम्। एदम्बर्हिर्नि• षीदत ॥ १२ ॥ नवम तन्तौ विश्वेदेवेभ्यो नमः विश्वान्देवा ना वाहयामि ॥ यज्ञो पवीत मन्थि देवताऽवाहनम्—ब्रह्मजज्ञान मित्यस्य। प्रजापतिऋषि। ब्रह्मा देवता गायत्री छन्द.। मन्थि मध्ये ब्रह्मा वाहने विनियोग ॥ ॐ ब्रह्मयज्ञानम्प्रथम स्पुरस्ता द्विसीमतः सुरुचोव्वेनऽआव ऽ सवुद्धन्याऽ उपमाऽ अस्यव्विष्ठाऽ सतश्च योनिमसतश्च व्विवः। १३ ॥ इदं विष्णुरित्यस्यमेधा तिथिऋषि। विष्णुर्देवता। गायत्री छन्द। मन्थि मध्ये विष्णवा वाहने विनियोगः— ॐ इदंविष्णु० ॥ १४ ॥ त्र्यम्बक मित्यस्य। वसिष्ट ऋषि. रुद्रो देवता। विराट् आर्षीत्रिष्टुप् छन्दः। मन्थि मध्येरुद्रा वाहने विनियोग.— ॐ त्र्यम्बकं० ॥ १५ ॥ यज्ञोपवीत मन्थि देवताभ्यो नम.—मन्थि देवता आवा हयामि ॥ प्रणवाद्या वाहित देवताभ्यो नम. यथास्थानमहं न्यसामि ॥ मानसो पचारैः सम्पूज्य। अथ ध्यानम्—प्रजापतेर्यत्सहज पवित्र कार्पास सूत्रोद्भव ब्रह्म सूत्रम्। ब्रह्मत्व सिद्ध्यै च यशः प्रकाश जपस्य सिद्धिं कुरु ब्रह्म सूत्रम् ॥ ॐ युवा सुवासा परिवीत ऽआगात्सऽउश्रेयान्भवति जायमानः। तन्धीरास. कवय उन्नयन्ति स्वाध्या मनसा देवयन्त.। यज्ञोपवीत धारणम्,—यज्ञोपवीत मिति मन्त्रस्य। परमेष्ठी ऋषि. लिङ्गोक्ता देवता। त्रिष्टुप् छन्दः। यज्ञोपवीत धारणे विनि योग —ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात्। आयुष्य मग्र्यम्प्रति मुञ्च शुभ्रं यज्ञोपवीतम्बल मस्तु तेजः यज्ञोपवीत मसि यज्ञस्य त्वा यज्ञो-

पवीते नोपन त्यामि ॥ अनेन मन्त्रेण यज्ञोपवीतानां पृथक्-पृथक् धारणं कुर्यात् । प्रति यज्ञोपवीत धारणं स्याचमनत्रयं राचमम् धारणान्ते जीर्णसूत्र त्याग मन्त्रः'—एतावद्दिन पर्यन्तं ब्रह्म त्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथा सुखम् ॥ इति मन्त्रेण जीर्णं यज्ञोपवीतं शिरो मार्गेण निःसार्य शुद्ध भूमौ त्यजेत ॥ पश्चा यथा शक्ति गायत्री मन्त्र जपं कुर्यात् ॥ अर्पणम्—अनेन नव यज्ञोपवीत धारणार्थे कृतेन यथा शक्ति गायत्री जप कर्मणा श्री सविता देवता प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य० ॥ इति यज्ञोपवीत धारण प्रयोग ॥

## अथोत्सर्ग तर्पणम्

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य छन्दसां क्वचिदन ध्यायादि काले पठनादनधिकरिभिः आचरणेन प्राप्त मालिन्यस्य निरासार्थं मुत्सर्गाख्य तर्पणमहं करिष्ये इति सङ्कल्प्य । देवतर्पणम्[२]— ॐ विश्वेदेवासऽआगत श्रृणुताम इम ꣳ हवम् । एदम्बर्हि र्निषीदत ॥ २६ ॥ विश्वे देवाः ꣳ शृणु तेम ꣳ हवम्येबेऽअन्तरिक्षे यऽउपद्दय विष्ठ । ये अग्नि जिह्वाऽउतवा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम् ॥ ३० ॥ इति मन्त्राभ्यां देवाना वाह । ॐ देवास्तृप्यन्तु । छन्दा ꣳ सि तृप्यन्तु । ॐ वेदास्तृप्यन्तु ॥ ॐ ऋषय स्तृप्यन्तु । ॐ पुराणा चार्या स्तृप्यताम् । ॐ गन्धर्वास्तृप्यन्ताम् । ॐ इतर चार्यास्तृप्यताम् । [ अथ चोपकम्—केचित्संवत्सरावयवात् पृथक्त्वेन तर्पयन्ति तद्यथा ]— ॐ अहोरात्रा स्तृप्यन्ताम् । अर्धमासास्तृप्यन्ताम् । ॐ मासास्तृप्यन्ताम् । ॐ ऋतव स्तृप्यन्ताम् । ॐ संवत्सरः सावयवस्तृप्यताम् ॥ इति चोपकम् ॥ ] ॐ पितर स्तृप्यन्ताम् ॥ आचार्या स्तृप्यन्ताम् तत्र सव्यं जान्वाच्य दक्षिणाभि मुखो ऽपसव्येन तिलमिश्रित जलमञ्जलीगृहीत्वा अमुक गोत्राःअस्मत्पितरः अमुकशर्माणो वसुरूपा स्तृप्यन्तांस्वधानमः । अमुकगोत्राः अस्मत्पितामहाः अमुक शर्माणो रुद्ररूपा स्तृप्यध्व स्वधानमः ॥ [ अन्येतु आभि रद्भिः रक्षीरता मित्यादि नोक्त तर्पण विधिना शिष्यैरहरहः क्रियामाणेन सर्वान् पितृन् तर्पयन्ति ॥ जीवत्पितृकैः पुत्रैशिष्यैस्त्वाचार्यं पितृतर्पणं कार्यम् ॥ तद्य—अमुकगोत्राः अस्मदा चार्यस्य पितरः अमुक शर्माण स्तृप्यध्वस्वधा । एव माचार्यस्य पितामह प्रपिता महाना ज्ञेयम ॥ ]

---

(२) दक्षिण जान्वाच्येशानाभि मुखाः सव्येन प्रागग्रैर्दर्भैर्देवतीर्थेन देवाना मञ्जलि त्रयं दद्यात् ॥

ततः आचमनम्,—तूष्णीम् पश्चात् ॥

## वंशानां ब्रु वणम्

अथ व ६ शाः समान मासाञ्जीवी पुत्रात्साञ्जीवी पुत्रो माण्डूकायने माण्डूकार्थानिर्माण्डव्या न्माण्डव्यः कौत्सात्कौत्सो माहित्ये माहित्थिव्वामकक्षायणाव्वाम कक्षायणो वात्स्याद्वात्स्यःऽशाण्डिल्या च्छाण्डिल्यऽःकुश्रेऽःकुश्रियज्ञ वचसो राजस्तम्बायनाद्यज्ञ वचा राजस्तम्बायनस्तु रात्कावषेयात्तुरऽः कावषेयऽःप्रजापतेः प्रजापतिर्ब्रह्मणोब्रह्मस्वयम्भु ब्रह्मणे नमऽः ।१।। वंशोक्ता ऋषय स्तृप्यन्ताम् । (एवं ऋष्युपरि उदकं क्षिपेत्) अथ वंश शस्तदिदं वय ६ शौर्पण्याच्छौर्पणाय्यौ गौतमाद्गौत्तमो वात्स्यां द्वात्स्यो व्वात्स्याच्च पारा शर्य्याच्च पाराशर्य्यऽः साङ्कृत्याच भारद्वाजाच्चभारद्वाज ऽश्रौदवा हेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवाब गौतमाच गौतमो वैजवापायनाच्च वै ष्ट पुरे याच वैष्टपुरेयऽः शाण्डिल्याच्च रौहिणायनाच्च रौहिणा यनऽःशौनका च्चात्रेयाच रैभ्या च्च रैभ्यऽः पौतिमाष्यायणाच्चकौण्डिन्यायनाच्च कौण्डिन्यायनऽः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्नि वेश्याच्च ।।२।। आग्नि वैश्यः सैववात् सैववऽः पाराशर्य्यात्पाराशर्य्योजातुकर्ण्याज्जातू कर्ण्योभारद्वाजा द्भारद्वाजो भारद्वाजःचा सुरायणाच्च गौतमाच्चगौतमोभारद्वाजा द्भारद्वाजोवैजवा पायनाद्वेजवा पायनऽः कौशिकायनेः कौशिकायनि घृतकौशिकाद्घृत कौशिकः पाराशर्य्यायणात्पाराशर्य्यायणऽः पाराशर्य्या त्पाराशर्य्यो जातुकर्ण्या जातुकर्ण्यो भारद्वाजा द्भारद्वाजो भारद्वाजाचा सुरायणच्च यास्काचा सुरायणस्त्रैवणेस्त्रै वणि रोपजन्धने रौप जन्ध निरासुरेरासुरि भारद्वाजा द्भारद्वाजा आत्रे यात् ।।३।। आत्रे योमाण्टे माण्टिर्गौतमाद् गौतमो-गौतमा द्गौतमो व्वात्स्याद्वात्स्यऽः शाडिल्याच्छाण्डिल्यऽकैशोर्य्यात्काप्यात्कैशोर्य्यऽःकाप्यऽकुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भी कौण्डिन्या द्विदर्भीकौण्डिन्योवत्सन पातोबाभ्रवाद्वत्सन पाद्बाभ्रवऽः पथऽःसौभरात्पन्थाऽःसौभरोऽयास्यादाङ्गि रसादयास्यऽ आङ्गिरसऽआभूतेस्त्वाष्ट्रां दा भूतिस्त्वाष्ट्रोव्विश्वरूपा त्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनोदधीचा थर्वणाद्ध्यङ्ङाथर्व्वणो दैवाद् थर्वा दैवोमृत्योऽःप्राध्व ६ सनान्मृत्युः प्राध्वं६ सनात्प्राध्वऽः ६ सनऽएकर्षेरेकर्षि व्विप्रजितेर्विप्रजिति व्यष्टेव्यष्टिऽः सनारो ऽःसनारु ऽः सनातनात्सनातनऽः सनगात्सनगऽः परमेष्टिनऽः परमेष्ठी ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मण नम ऽः ॥ ४ ॥ वंशोक्तास्त्रृषयस्तृप्यन्ताम् अथव ६ शस्त दिदं वयशौपर्णाय्याच्छौर्पणा-

त्यो गौतमाद्गौतमोवात्स्याद्वा त्स्योवात्स्याच्च पाराशर्य्याच्च पाराशर्य्यं साङ्कृ
त्याच्च भारद्वाजाच्चभारद्वाजश्चौदवाहेश्चशाण्डिल्याच्च शाण्डिल्योवैजवापाच्च
गौतमाच्च गौतमो वैजवा पायनाच्च वैष्ठ पुरेयाच्च वैष्ठयः
शाण्डिल्याच्चरोहिणायनाच्च रौहिणायनः शौनकाच्चजैवन्तायनाच्च
रैभ्याच्चरैभ्यःपौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः
कौण्डिन्याभ्या कौण्डिन्याः और्णवाभेभ्यः और्णवामाः कौण्डिन्या
त्कौण्डिन्यः कौण्डिन्या त्कौण्डिन्यः कौण्डिन्याच्चाग्नि वेश्याच्च ॥ ५ ॥
आग्निवेश्यः सैतवा त्सैतवः पारा शर्य्या त्पाराशर्य्या आतू कर्णाज्जातू
कर्ण्यो भारद्वाजाद्भार द्वाजोभारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमोभार
द्वाजाद्भारद्वाजो वलाका कौशिका द्वालाका कौशिकः काषायणात्कायणः
सौकरायणात्सौकरायणस्त्रै वणेस्त्रै वणिरौपजन्धनेरौप जन्धनिः सायकाय
नात्सायकायन ःकौशिकायनेः कौशिकायनि घृ त कौशिकाद्घृत कौशिकः
पाराशर्य्यायणा त्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातू
कर्ण्यो भारद्वाजो भारद्वाजे भारद्वाजाच्चासुरायणाच्चयास्काच्चासुरायणस्त्रैवणे
स्त्रै वणिरौप जन्धन रौप जन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजः आत्रे यात्
॥६॥आत्रेयाद्रात्रेयो माण्टेर्माण्टि गौतमा द्गौतमागौतमा द्गौतमो वात्स्याद्वा
त्स्यशाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्या त्कैशोर्य्यः काप्यः कुमार
हारितात्कुमार हारितोगालवा द्गालवाद्विदर्भी कौण्डिन्यो वत्सनपातो
वाभ्रवाद्वत्सन पाद्वाभ्रवः पथः सौभरात्पन्थाः सौभेरायास्याद्वाङ्गिरसा
द्यास्यःआङ्गिरसः आभूतेस्त्वाष्टाद्या भूतिस्त्वाष्ट्रोविश्वरूपा त्वाष्ट्राद्
विश्वरूपस्त्वाष्ट्रो शिवभ्यामश्विनौ दधीचः अथर्वणाद्दध्यङ्डाथर्वणो दैवाद
थर्वांदैवात्मृत्या प्राध्व ंस नान्मृत्यु प्राध्व ंस सनात् प्राध्य ंस सनः
एकर्षे रेकर्ष विप्रजिते विप्रजितिर्व्यष्टे र्व्यष्टिः सनारोः सनारुः सनातना
त्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु
ब्रह्मणेनमः वंशाकाः सपयस्तृप्यन्वाम्॥७॥अथवंश शस्त दिद वयः भार
द्वाजापुत्रा भारद्वाजापुत्रो वात्सीमाण्डवी पुत्रा द्वात्सीमाण्डवी पुत्रःपारा
शरी पुत्रा पाराशरी पुत्रो गार्गी पुत्राद्गार्गी पुत्रः पाराशरी कौण्डिनी
पुत्रा त्पारा शरा कौण्डिनी पुत्रोगार्गी पुत्रा द्गार्गी पुत्रो वाढयी पुत्राद्वाडेयी
पुत्रा मौषिकी पुत्रान्मौषिकिपुत्रो हारिकर्णी पुत्राद्धारि कर्णी पुत्रोभारद्वाजी
पुत्राद्भारद्वाजी पुत्रः पैङ्गी पुत्रात्पैङ्गी पुत्रः शौनकी पुत्राच्छौनकी पुत्रः ८
काश्यपी वाला क्या माठरी पुत्रा त्काश्यपी वालाक्यामाठरी पुत्रः
कौत्सी पुत्रा त्कौत्सी पुत्रो बौधी पुत्रा द्बौधीपुत्रः शालङ्कायनी पुत्राच्छा
लङ्कायनी पुत्रो वार्षगणी पुत्रा द्वार्षगणी पुत्रो गौतमी पुत्राद्गौतमीपुत्र
आत्रेयी पुत्रा दात्रेयी पुत्रो गौतमी पुत्राद्गौतमी पुत्र वात्सी पुत्रा द्वात्सी

पुत्रो भारद्वाजी पुत्राद्भारद्वाजी पुत्रऽः पाराशरी पुत्रा त्पाराशरी पुत्रोव्वार्का-रुणीपुत्राव्वार्कारुणी पुत्रऽआर्तभागी पुत्रादार्तभागीपुत्रऽःशौङ्गीपुत्राच्छौङ्गी पुत्रऽः साङ्कृती पुत्रात्साङ्कृतीपुत्रऽः ॥ ६ ॥ आलम्बी पुत्रादालम्बी-पुत्रऽआलम्बायनी पुत्रादालम्बायनी पुत्रो जायन्ती पुत्राज्जायन्ती पुत्रो-माण्डूकायनी पुत्रान्माण्डूकायनी पुत्रो माण्डकीपुत्रान्माण्डकी पुत्रऽः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरी पुत्राद्राथी तरीपुत्रऽःक्रौञ्चिकी पुत्राभ्यां क्रौञ्चिकी पुत्रोवैदभृती पुत्रा द्वैदभृतीपुत्रो भालुकी पुत्राद्भालुकी पुत्र ऽः प्राचीन योगी पुत्रा त्प्राचीन योगीपुत्रऽः साञ्जीवी पुत्रात्साञ्जीवी पुत्रऽः कार्शकेयी पुत्रात्कार्शकेयी पुत्र ॥ १० ॥ प्राश्नी पुत्रा दासुरि वासिनः । प्राश्नीपुत्रऽआसुरायणा दासुरायणऽ आसुरेरासुरिर्य्याज्ञ वल्क्याद्याज्ञ वल्क्यऽउद्दालकादुद्दालको -रुणादरुणऽउपवेशेरुपवेशिऽः कुश्रेऽः कुश्रिर्व्वाजश्रवसोव्वाजश्रवसोव्वाज-श्रवाज्जिह्वा वतोबध्योगाज्जिह्वावा न्बाध्योगोसिताद्वार्षगणाद् सितोव्वा र्षगणो हारितात्कश्यपाद्धरितऽः कश्यऽः शिल्पा त्कश्यपा च्छिल्पऽः कश्यऽ कश्यपान्नैध्रु वेऽः कश्यपोनैध्रु विर्व्वाचो वागम्भि-ण्याऽ अम्भिण्यादित्यादा दित्यानीमानि शुक्लानियजु षि पिव्वाज वल्केयना ख्यायन्ते ॥ ११ ॥ वंशोकाऽऋषयस्तृप्यन्ताम् ॥ ॐ तत्सवितु-रिति चतुर्वारं गायत्रीं पठेत् ॥ इति प्रवि वंश वंशोका नामृषीणां तर्पणम् । ततः तत्स वितुर्वं० साविव्याश्चतु. कृत्वाऽनुत्रु वणम् । सर्वेषांवदन्ते ॐ विरताः स्म इतिसकृदुच्चैर्ब्रूयात् ॥ अध्यायाः—इषेत्वा ॥ १ । कृष्णोसि ॥ २ ॥ समिधाग्निम् ॥ ३ ॥ एदम् ॥ ४ ॥ अग्ने-स्तनू ऽः ॥ ५ ॥ देवस्यत्वा ॥ ६ ॥ व्वाचस्पतये ॥ ७ । उपयाम गृहीतोसि ॥ ८ ॥ देवसवितः ॥ ९ ॥ अपो देवा ऽः ॥ १० ॥ युञ्जान ऽः प्रथमम् ॥ ११ ॥ दृशानो रुक्म ऽः ॥ १२ ॥ मयि गृह्णामि ॥ १३ ॥ ध्रुवक्षितिध्रुवयोनि ऽः ॥ १४ ॥ अग्ने जातान् ॥ १५ ॥ नमस्ते ॥ १६ ॥ अश्मन्नूर्जम् ॥ १७ ॥ व्वाजश्च ॥ १८ ॥ स्वाद्वीन्त्वां ॥ १९ ॥ क्षत्रस्ययोनिः ॥ २० ॥ इमम्मे ॥ २१ ॥ तेजोसि ॥ २२ ॥ हिरण्य गर्भ ऽः सम् ॥ २३ ॥ अश्वस्तूपर ऽः ॥ २४ ॥ शादन्दद्भि ऽ ॥ २५ ॥ अग्निश्च ॥ २६ ॥ समास्त्वा ॥ २७ ॥ होता यक्षत् ॥ २८ ॥ समिद्धोऽ अञ्जन् ॥ २९ ॥ देवसवित ऽः ॥ ३० ॥ सहस्र शीर्षा पुरुष ऽः ॥ ३१ ॥ तदेव ॥ ३२ ॥ अस्या जरासः ॥ ३३ ॥ यज्जाग्रतः ऽः ॥ ३४ ॥ अपेत ऽः ॥ ३५ ॥ ऋच वाचम् ॥ ३६ ॥ देव-स्यवा ॥ ३७ ॥ देवस्य ॥ ३८ ॥ स्वाहा प्राणेभ्यः ॥ ६३ ॥

ईशावास्यम् ॥ ४० ॥ ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितम्मुखम्
योसा वादित्ये पुरुष ऽः सोसावहम् ॥ ॐ खम् ॥ खम्ब्रह्म।
अध्यायोक्ता ऋपयस्तृप्यन्ताम् ॥ अथकाण्डिकाः'—व्रतमुपैष्यन्
॥ १ ॥ सर्वै कपालान्ये वान्यत्तरऽउपदधाति ॥ २ ॥ सर्वं स्रुच
ऽः संमार्ष्टि ॥ ३ ॥ हिङ्कृत्या अवाह ॥ ४ ॥ सर्वै प्रवराया
आनयति ॥ ५ ॥ ऋतवोह्वै देवेपुयज्ञे भागमीषिरे ॥ ६ ॥
सर्वैपर्णशाखया वत्सानपा करोति ॥ ७ ॥ मनवे ह वै प्रात ऽ.
॥ ८ ॥ सयत्राह ॥ ९ ॥ स सयदा इत श्चेतश्च सम्भरति
॥ १० ॥ उद्धृत्या हवनीयम्पूर्णाहुतिं जुहोति ॥ ११ ॥ सूर्योहवाऽ
अग्नि होत्रम् ॥ १२ ॥ अथ हुतेग्नि होत्रमुपतिष्ठते ॥ १३ ॥
प्रजापतिर्हवा इद मग्रऽएकऽएवास ॥ १४ ॥ पितामहा हविषा हवै
देवा व्यृत्रजघ्नु ऽः ॥ १५ ॥ देवयजनं योषयन्ते ॥ १६ ॥ दक्षि-
णेना हवनीयं प्राचीन ग्रीवे कृष्णाजिनेऽउपस्तृणाति ॥ १७ ॥
सप्तपदान्यनुनि' क्रामति ॥ १८ ॥ शिरो वै यज्ञस्यातिथ्य बाहू
प्रायणियोदयनीयौ ॥ १९ ॥ तद्य ऽएष पूर्वार्ध्योग्निपिष्टस्यूणराजो
भवति ॥ २० ॥ उदरमे वास्यसदऽः ॥ २१ ॥ अग्निमादत्ते ॥ २२ ॥
तद्यत्रैतत्प्रवृतो होता होतृषदन ऽउपविशति ॥ २३ ॥ प्रजा पति-
र्वैप्रजा ऽ' मसृजानो रिरिचानऽइवामन्यत ॥ २४ ॥ प्राणो हवाऽ
अस्योपा ध्शु ऽ. ॥ २५ ॥ चक्षुर्हवाऽअस्य शुक्रा मन्थिनौ
॥ २६ ॥ मनुपित्रा समुप हूता ऽ. स्मऽइत्युक्त्वोत्तिष्ठति ॥ २७ ॥
मनोहवाऽअस्यसवित्रा ॥ २८ ॥ आदित्येन चरुणोदय नीयेन
प्रचरति ॥ २९ ॥ प्रजापतिर्वाऽएष यद ध्शु ऽः ॥ ३० ॥
देवाश्च वाऽअसुराश्च ॥ ३१ ॥ अयस्तु यज्ञवाज्यविलापिनीं चादाय
॥ ३२ ॥ अरण्योरग्नी समारोह्य ॥ ३३ ॥ केशवस्य पुरुषस्य
॥ ३४ ॥ आग्नेयोष्टा कपाल ऽः पुरोडाशो भवति ॥ ३५ ॥
असद्वाऽइदमग्रऽआसीत् ॥ ३६ ॥ प्रजापति परमित्याएयभ्यध्यात्
॥ ३७ ॥ एतद्वै देवा ऽ अब्रु वन् ॥ ३८ ॥ अथैनमत ऽ ग्वन त्येव
॥ ३९ ॥ पर्णस्याय निषक्ता ऽएताऽआपो भवन्ति ॥ ४० ॥
नूया ध्श सिकता ध्श नियन्ति ॥ ४१ ॥ कवमग्नति मुच्य-
न्निर्भाति ॥ ४२ ॥ स्वर्गं नाभे वाग्नि निश्चित्पाहु ऽ ॥ ४३ ॥
गार्ह पत्य चेष्यन्पलाश शाखया व्युदूहति ॥ ४४ ॥ अथातो
नैऋतीर्गार्हस्त्नि चिनोगार्हपत्योभवति ॥ ४६ ॥ आत्मन्नग्नि गृहीत्वे
ष्टेष्यन् ॥ ४७ ॥ कूर्ममुपदधाति ॥ ४८ ॥ आशानुव ऽउपदधाति
॥ ४९ ॥ द्वितीयांचितिमुपदधाति ॥ ५० ॥ तृतीयाचितिं मुपदधाति

। ५१ ॥ चतुर्थीं चितिमुपदधाति ॥ ५२ ॥ पञ्चमीं चितिमुपदधाति ॥ ५३ ॥ नाकसदऽउपदधाति ॥ ५४ ॥ ऋतव्याऽउपदधाति ॥ ५५ ॥ अथातऽःशतरुद्रियं जुहोति ॥५६॥ उपवसथीये हन् प्रात रुदितऽआदित्ये । ५७ ॥ अथातो वैश्वानरं जुहोति ॥ ५८ ॥ अथातो राष्ट्र भृतो जुहोति ॥ ५९ ॥ अथातऽः पयोव्रत तायै ॥ ६० ॥ अग्निरेप पुरस्ता चीयते । ६१ ॥ प्रजापतिऽःस्वर्ग लोक मजिगा ७ सत् ॥ ६२ ॥ प्राणो गायत्री ॥ ६३ ॥ प्रजापतिंविस्रस्तम् ॥ ६४ ॥ तस्य वाऽएतस्याऽग्नेऽः ॥ ६५ ॥ हेतेहणे ॥ ६६ ॥ सम्वत्सरो वै यज्ञऽः प्रजापतिऽः ॥ ६७ ॥ त्रिर्ह वै पुरुषो जायते ॥ ६८ ॥ वागघवाऽएतस्याग्नि होत्रस्याग्नि होत्री ॥ ६९ ॥ उद्दालको हारुणिऽ। ॥ ७० ॥ उर्वशी हाप्सराऽ: ॥ ७१ भृगुर्ह वै वारुणिऽः ॥७२॥ पशु बन्धेन यजते ॥ ७३ ॥ तयथा ह्वै ॥ ७४ ॥ अयंवै यज्ञोयोयं पवते ॥ ७५ ॥ समुद्रं वाऽएते प्रचरन्ति ॥ ७६ ॥ यद्वा- लोके । ७७॥ दीर्घसत्र ७ ह्वाऽएतऽउपयन्ति ॥ ७८ ॥ तदाहुर्य दैनदीर्घ सत्री ॥ ७९ ॥ सोमो वै राजायज्ञऽः प्रजापतिऽः । ८० । विश्व रूपं वै त्वाष्ट्रं मिन्द्रोऽहन् ॥ ८१ ॥ इन्द्रस्य वै यत्र ॥ ८२ । एतस्माद्वै यज्ञात्पुरुषो जायते ॥ ८३ ॥ ब्रह्मो दनं पचति ॥ ८४ ॥ प्रजापतिर्देवेम्योयज्ञान्व्यादिशत् ॥ ८५ ॥ प्रजापते रद्वयस्यत् ॥ ८६ । प्रजापति रकामत् ॥ ८७ । अथ प्रावर्गीतमस्य ॥ ८८ ॥ पुरुषोह नारायणोऽकामयतः ॥ ८९ ॥ ब्रह्म वैस्वम्भु तपोऽतप्यत ॥ ९० । अथास्मै श्मशानं कुर्वन्त्यौः शान्तिः ॥ ९१ ॥ देवा ह्वै सत्रंनृपेदुऽः ॥ ९२ ॥अथातो रौहिणौ जुहोति ॥ ९३ ॥ सर्वे तृतीये हन् ॥ ९४ ॥ द्वया ह प्राजा पत्याऽः ॥ ९५ ॥ ह्त्व बाला कि र्हानू चानोगार्ग्यऽआस ॥ ९६ ॥ जनकोह्वै वैदेहऽः ॥ ९७ ॥ जनक ऽ ह वैदेहं याज्ञवल्क्यो जगाम ॥ ९८ ॥ पूर्णमदऽ पूर्णमिदम् । ९९ ॥ श्वेत केतुर्ह वाऽआरुणेयऽः ॥ १०० ॥ भारलीपुत्रा दासुरि वासिनः । चतुर्दशकाण्डेऽध्यायोक्ता ऋषयस्तृप्यन्ताम् ॥ अथ शतस्थानानि—ॐ इषेत्वां ॥ १ ॥ परिते ॥ २ ॥ अग्नेनयं ॥ ३ ॥ उपयाम गृहीतोसि सुशर्म्मासि ॥ ४ ॥ [ प्रथमा] सोमस्यत्विषि- ॥५॥ परस्याऽअधि ॥ ६ ॥ अन्यावत्- ॥ ७ ॥ राड्यमि ॥ ८ ॥ नमोहिरण्य बाहवे ॥ ९ ॥ इन्द्र मम ॥ १० ॥ इमोवि ॥ ११ ॥ अन्नात्परिस्रुत- ॥ १२ ॥ अश्विना तेजसा ॥ १३ । पृथिव्यै स्वाहा । १४ ॥ प्रजापतये च ॥ १५ ॥ तेऽमरर ॥ १६ ॥ वसून पात्वयऽः ॥ १७ ॥ अयमिह ॥ १८ ॥ भनुनऽः ॥ १९ ॥ इयत्यमे ॥ २० ॥ ([ शेष प- चसप्ततिः ] ॥ हिरण्मयेन पात्रेण- । ॐखम्ब्रह्म । शतोक्ता ऋषयस्तृप्यन्ताम् ॥ व्रतमुपैष्यन ॥ १ ॥ तद्यदेवं विनष्टि ॥ २ ॥ अथाऽतलिप्ताभ्यां पवित्राभ्याम् ॥ ३ ॥ वृहन्तोचापविष्टमेति ॥४॥ वसूनां

तानि यदा गृह्णाति ॥ ७३ ॥ योगनीतिष्ठन् ॥ ७४ ॥ कतमऽआत्मेति ॥ ७५ ॥ अथ हैन मनुष्याऽऊचु—॥७६॥ अथ यामिच्छेद्गर्भन्दधीतेति॥७७॥ सप्त सहस्र पञ्च शत शेष चतुर्विंश शति ॥ ७८ ॥ प्राश्नीपुत्रा दासुरि वासिनः । ७६ ॥ चतुर्दश काण्ड शतोका श्रवयस्तृप्यन्ताम् ॥ अथ 'प्रपाठका'—व्रत मुपैष्यन् ॥ १ ॥ चतुर्धाविहितो ह्वाऽअग्रेग्निराम ॥ २ ॥ तेदाऽआर्द्राऽ स्रुऽ ॥ ३ ॥ स स्रुचोत्तरा माघारयिष्यन् ॥ ४ ॥ यज्ञेन देवेवाऽ । यज्ञेन वेदेवा दिवम पोद्क्रामन् ॥ ६ । स वैस्रुचोत्गृहति ॥ ७ ॥ स यद्वाऽइतू स्वेतरचसम्भरति ॥ ८ ॥ वरुणो हैनद्राज्य कामऽआदृधे ॥ ६ ॥ यत्र वै प्रजापति ऽ प्रजा ऽ ससृजे ॥ ० ॥ प्रजापतिर् वाऽएते नाग्ने वद्ने ने जे ॥ ११ ॥ महा हविषा हवै देवा वृत्र जघ्नुऽ ॥ १२ ॥ देवयजन योप तन्वे ॥ १३ ॥ वाचयच्छति ॥ १४ ॥ नाडे कृष्णा जिन मास्तृणाति १५ ॥ नद्यऽएवपूर्वोर्ध्यो वपिष्ठ स्थुणा रात्रो भवित ॥ १६ ॥ विजामानो हैवास्यधिष्ण्याऽ ॥ १७ ॥ पाश कृत्त्वाप्रतिमुञ्चति ॥ १८ ॥ सोत्यप य जति ॥ १६ ॥ प्राणोप्रसे ह्वा अश्योगु ए पा २० ॥ आत्मा ह्वाऽअरारामयणऽ ॥ २१ घ्नन्ति वाऽ० तदज्ञम् ॥ २२ ॥ सवाऽअवभृथुमभ्य वैति ॥ २३ ॥ तद्यत्रै तद्वादशाहेन व्यूढ श्छन्द सायजते ॥ २४ ॥देवारचवाऽ असुरारच । २५॥ न ह स्पत्यन चरुणा प्रचरति ॥ २६ ॥ सवाऽअपऽ सम्भरति ॥ २७ ॥ मैत्रावरुण्या पयस्य या प्रचरति ॥ २८ ॥ असद्वाऽइदमग्रऽआसीत ॥ २६ ॥ प्राजापत्यश्च रद्धाऽआलम्भन्ते ॥ ३० ॥ प्रदीप्ताऽएतेग्नयो भवन्ति ॥ ३१ ॥ तस्याऽएतस्याऽआषाढा पूर्वं करोति ॥ ३२ ॥ रुक्म प्रति मुञ्चबिभति ॥ ३३ ॥ गार्हपत्यञ्चेष्यन् पलाश शाखाया व्युदू हति ॥ ३४ ॥ अथ दर्भस्तम्भ मुपदधाति ॥ ३५ ॥ आत्मन्नग्निं गृह्णीतवेष्यन् ॥ ३६ ॥ कूर्म मुप दधाति ॥ ३७ प्राणभृतऽउपद धाति ॥ ३८ ॥ अथ विश्व ज्योतिषमुप दधाति ॥३६ ॥ अथा तोन्वा यृत्तम् ॥ ४० ॥ गार्हपत्यमुप दधाति ॥ ४१ ॥ अथात शतरुद्रिय जुहोति ॥ ४२ ॥ प्रत्ये त्यग्नि मह रिष्यन् ॥ ४३ ॥ अथ कान्यत्र धनु जुहोति ॥ ४४ ॥ अथ प्रातः माव स्तुतार मुपा करिष्यन् ॥ ४५ ॥ अग्निरेष पुरस्ता चीयते ॥ ४६ ॥ अथा तस्य यत्र स्वैर ॥ ४७ ॥ सम्वत्सरोवै प्रजापतिरग्निऽ ॥ ४८ ॥ नेवराऽइदमग्रे सदासोन्नेव सदासीत् । ४६ ॥ संवत्सरोवै यज्ञः प्रजापतिः ॥ ५० ॥ अपिवाग्रवदि ॥ ५१ ॥ प्रजापतिर्वै प्रजाऽ सृजमानोऽतप्यत ॥ ५२ ॥ अथा तऽस्याध्याय प्रशऽ मा ॥ ५३ ॥ अत्र वैयज्ञो नोपनतो ॥ ५४ ॥ पुरुष ह नारायण प्रजापतिरुवाच ॥ ५५ ॥ सोमो वै राजा यज्ञऽ प्रजापति ॥ ५६ ॥ प्रजापतिर्यज्ञमसृजत ॥ ५७ ॥

ब्रह्मौदनं पचति ॥ ५८ ॥ नियुक्ते पशुषु । ५९ ॥ प्रमुन्चाश्वं दक्षिणतं चे दिम् ॥ ६० ॥ पुरुषोह नारायणोऽकामयत ॥ ६१ ॥ देवाह वै सत्रन्नि- षेदुः ॥ ६२ ॥ सयत्रैता ७ होतान्वाह ॥ ६३ ॥ द्वयाह प्राजापत्याः ॥ ६४॥ इन्द्र वाला किहांनू-चानो गार्ग्योऽआस ॥ ६५ ॥ अथहैनं भुज्युर्लाह्यायनिः पप्रच्छ ॥ ६६ ॥ जनक ७ ह वैदेहं याज्ञवल्क्यो जगाम ॥ ६७ ॥ भूमि रन्त रिक्षं द्यौरिति । ६८ ॥ प्राश्नी पुत्रादासुरि वासिनः । ६९॥ इति चतुर्दश काण्डे प्रपाठोक्ता ऋषय स्तृप्यन्ताम् । इति प्रपाठकाः ॥ अथ अत विसृ जेत् स यस्मिन्नृत्वावि मुंल्लोके मेत्यथ नियाम्याभ्योमहाभ्यानि गृहतेऽथ गृहपतिः सु ब्रह्मण्या माह यनिता वाऽएतास्तानि दश भवन्ति ताऽएताऽअङ्गुलयोमध्यमैव तृतीयांचितिः महोवाचाथर्व ७ शस्तस्मा ह्हैतदुवाचमे वाऽएताऽयास्मै । यदसौत्रायणीमर्यादायाऽएवलोष्ट माहत्य प्राश्नी पुत्रा दासुरि वासिन० ॥ १ ॥ अन्त्यकाण्डकोक्ता ऋषयस्तृप्य- न्ताम् । एवं अत विसृजेत परम्। इति इच्छतीति तस्माच्चातुर्मास्यान् तस्मिन् समुपहूयमिष्टया स्तमिथोऽश्यादधति द्वादशवा त्रयोदश वा दक्षिणा भवन्ति यावा नाग्निर्यां वत्यस्यममात्रा तावत्तद् भवति तस्मा- त्समान् सम्बन्धनास्तस्मादिमे प्राणाऽउपरिष्टाद् सञ्ज्ञन्नांः सर्वादे ने वर्हिं जो लोका इति ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः कशिनीरेवेमाऽ आप्ये तर्हि प्रजा जायन्ते तस्मादिमावात्मानमधिरो बाहू तस्मादुहै तत्त्रीराम्च पितादेवन सद्दयन्तेन्वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥२॥ चतुर्दशकाण्ड अन्त्य काक्रो क्तोक्ता ऋषय स्तृप्यन्ताम् ॥ नमस्कारः— ततः वदेवदवाम्युक्तं न मृषा भ्रान्तयद्वन्ति देवा इति नहैवैवं विदुषः किञ्चनमृषा श्रान्तं भवति तथो हास्यै तत्सर्वे देवाऽअवन्ति ॥ ११ ॥ इति नमस्कारः । विसर्जनम्—ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानवऽइन्द्र प्राशूर्भवा सचा १४६३४स्य स्तमर्षरान्वि सर्जनम् ॥ अते भास्वन्—ॐ समुद्रङ्गच्छ स्वाहान्तरिक्षङ्गच्छ स्वाहा देवंसवितारङ्गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाऽहोरात्रेगच्छ स्वाहा छन्दा७ सिगच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभोगच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनो मे हार्दि यच्छ दि वन्ते धूमोगच्छतु स्वर्ज्योतिः—पृथिवीम्भस्मनापृण स्वाहा ॥ ११ ॥ ततो विरापमनं दद्युः ॥ आचार्यादि ब्राह्मण पूजनं कृत्वा ॥ ( तेभ्यो दक्षिणां दत्वा ब्राह्मणाशिषो गृह्णीयात् । कृतस्योत्सर्गोपाकर्म कर्मणः साङ्गतासिद्धयर्थं ब्राह्मणकाशेन यथा शक्ति ब्राह्मणभोज नियष्ये इति सङ्कल्प्य ॥ ) अर्पणम्—अनेनाध्यायोत्सर्ग कर्माङ्गत्वेन कृतेन ऋषि पूजन तर्पणादि कर्मणा श्रीभगवान्परमेश्वरः प्रीयतां न मम । ॐ तत्सद्- ब्रह्मार्पणमस्तु ॥ इति ध्यायोत्सर्गः ॥

# अथ ऋषिश्राद्धम् ।

कृत प्राणायामोदेशकालो सङ्कल्प—उत्सर्गाङ्गभूत ऋषि श्राद्ध मह करिष्ये ॥ ॐ इदं विष्णुर्वि० ॥ १ ॥ इति मन्त्रेणादिग्बन्धः ॥ ऋषिश्राद्धस्योपहाराः शुचयोभवन्तु ॥ इत्युपहार प्रोक्षणम् । देशकाल पात्रसम्पदस्तु ॥ अरुन्धती सहित कश्यपादि स्व ऋषयः यथादत्त विभागं वः स्वाहा अरुन्धतीसहित कश्यपादि स्व ऋषयः,यथा दत्तं गन्धा द्यर्चनं यथायथा विभागं वः स्वाहा । इति गन्धादि दानम् । ऋषिश्राद्ध साङ्गता सिद्ध्यर्थ सप्त मङ्गल कान् ब्राह्मणान् यथाकालं यथा सम्पन्नान्नेन तर्पयिष्ये । तेन अरुन्धती सहित कश्यपादि स्व ऋषयः प्रीयन्ताम् । ऋषिश्राद्ध साङ्गता सिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणा आचार्याय तुभ्य मह सम्प्रददे आचार्यः । ॐ कोऽदा त्कस्माऽअदात्कामोऽदात्कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ४६ ॥ इति मन्त्रं पठेत् । उपविष्टेषु ब्राह्मणेषु दक्षादि दानम् ॥ तद्यथा-ॐ शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । अघोरा ऋषयः सन्तु । सर्वत्र सन्त्विति विप्राः प्रति वचनं दद्युः । उत्सर्ग कर्मणो न्यूनाति रिक्त दोष परिहारार्थं नाना नाम गोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां सम्प्रददे ॥प्रार्थना—उत्सर्गाङ्गभूतं ऋषिश्राद्धं परिपूर्ण मिति आचार्यादयः प्रति वचनं दद्युः । ततः सहनोवतु सहनौ भुनक्तु सहवीर्यं करवावहै तेजस्विनावधीतमस्तु मा विद्विषावहै इति ॥ पश्चात्—उभाऋ वी० इति मन्त्र पठेत् ॥ इति ऋषि श्राद्धम् ॥ इद ऋषि श्राद्धं कृता कृतं अस्ति ॥ इति श्रावणी पद्धति अध्यायोपाकर्मः पारस्करगृह्यसूत्रे—अथातो ऽध्यायोपाकर्मौषधीनां प्रादु- र्भावे श्रवणेन श्रावण्यां पौर्ण मास्यांऽः श्रावणस्यपञ्चम्यऽः हस्तेनवाज्यभागाविष्ट्वा ज्याहुती जुहोति । पृथिव्याऽइत्यृग्वेदे ऽन्तरिक्षायवायव इतियजुर्वेदे सूर्यायेति सामवेदे दिग्भ्य श्चन्द्रमसऽइत्य थर्ववेदे ब्रह्मणे छन्दोभ्यश्चेतिसर्वत्र प्रजापतयेदेवेभ्यो ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतयेऽइति चैत देवव्रतोद्देशेन विसर्गेषु सदसस्पति मित्यस्त धानाश्च सर्वेऽनुपठेयु हुत्वा हुत्वौदुम्बर्यस्तिस्त्रस्तिस्त्रः समिध ऽआर्दाः सपलाशा

---

पञ्च गव्यम्—शरीर शुद्ध्यर्थे पञ्चगव्यप्राशनं कार्यम् ॥

पञ्च गव्यं पवित्रं तु आहरे ताम्र भाजने ( १ ) गायत्र्या चैव गोमूत्र ( २ ) गन्ध द्वारेति गोमयम् ( ३ ) आप्याय स्वेति चक्षीरं ( ४ ) दधिक्राव्णेति वैदधि ( ५ ) घृतेजोसि शुक्र मित्याज्यं ( ६ ) देवस्य त्वा कुशोदकम् ॥

घृताक्ता. सावित्र्या ब्रह्म चारिणश्च पूर्व कल्पेन रात्रो भवति स्यक्तव्यानाऽप्रत्तादन्तः प्राश्नीयुर्दधि क्राव्णऽइति दधि भक्षेयु' स यावन्तगणमिच्छेत्तावन्तस्तिलाना कर्पफल केन जुहुयात्सावित्र्या शुक्र ज्योतिरित्य नु वाकेन वामाशनान्ते प्रत्यक्त मुखेभ्यऽउपविष्टेभ्य ॐ कारमुक्त्वात्रिरच सावित्रीमध्याया दीन्प्रब्रूयाद्दपि मुखानि वह्व चाना मऽनोस्तु महनोवतुसह न ऽइद वार्य वदस्तु ब्रह्म ऽइन्द्रस्तद्वेद येन यथा न विद्विषा महऽइति त्रिरात्र नाधीयीर लोम नखा नामनिकृ- न्तनमेके प्रागुत्सर्गात् ॥

## अथोपाकर्मप्रयोगः'—

[ गुरु. हस्तौ पादौ प्रक्षाल्य द्विराचम्यात्र सभ्यान्मे लौकिकाग्नेर्वा पश्चाद्धिष्ण्ये सदप्राङ्मुख उपविश्य प्राणा याम त्रयं कृत्वा देशका लौमङ्कीर्त्य श्री परमेश्वर प्रीत्यर्थं अध्यायोपाकर्मणि पञ्च भूसंस्कार पूर्वक मग्निस्थापनमह करिष्य इति सङ्कल्प्य' पञ्चभूसंस्कारान्कुर्यात् । तेचर—१र्भै. परि समुह्य २—गोमयोदकेनो पलिप्य । ३—स्रुवेणो ल्लिख्य । ४—अनामिकाङ्गुष्ठाभ्यामुद्धृत्य । ५—उदकेनाभ्युक्ष्य ॥ तत अग्निं प्रतिष्ठाप्य पात्र स्थापनादि कुर्यात् । तत्र पूर्वेण ब्रह्मणो- गमनम् । अग्ने रुत्तरत पात्रासादनम् । द्वे पवित्र ताम्रमयी आज्य स्थाली । पात्राश्च समिध । प्राञ्चा वाघारो । समिद्धतमे आज्य भागौ । नित्त होम सावित्री मन्त्रेण । पूर्णपात्र दक्षिणा । त्रिरात्रं लोमनखा नामनि कृन्तनम् ॥) ॥] ऋषिच्छन्दोदेवतास्मरणम्'—इषेत्वे त्यादिकस्य खम्ब्रह्मान्तस्य माध्यन्दिनीयस्य वाज सनेय कस्य यजुर्वेदा म्नायस्य विवस्वा ऋषि । वायुर्देवता । गायत्र्यादीनिसर्वाणि छन्दांसि । अध्यायोपाकर्मणिविनियोग ॥— देवताभिध्यानम्'—तत्र—प्रजापतिम् । इन्द्रम् । अग्निम् । सोमम् । पृथिवीम् । अग्निम् । ब्रह्माणम् । छन्दा ७ सि । अन्तरिक्षम् । वायुम् । ब्रह्माणम् । छन्दाऽसि । दिवम् । सूर्यम् । ब्रह्माणम् । छन्दा ७ सि । दिश. । चन्द्रम- सम् । ब्रह्माणम् । छन्दा ७ सि । प्रजापतिम् । देवान् । ऋषीन् । श्रद्धाम् । मेधाम् । सदसस्पतिम् । अनुमतिम् ॥ एता. प्रधानदेवता रूपाघारोत्तेण ! अग्निम् । वायुम् । सूर्यम् । अग्ना षष्ठी ।

अग्नीवरुणौ। अग्निम्। वरुणम्। सवितारम्। विष्णुम्। विश्वान्देवान्। मरुतः। स्वर्कान्। वरुणम्। प्रजापतिम्। एता अत्र प्रधानार्थादेवता अस्मिन्कर्मण्यहं यक्ष्ये॥

[ ब्रह्मवरणम् ( दक्षिण तो ब्रह्मासनमास्तीर्य। अमुक शर्मन् अस्मिन्कर्मणित्वं ब्रह्मा' भव। भवामीति प्रति वचनम्। ब्रह्मातूष्णीं आसनावलोकनं-आसनात्तृणनिरसनञ्च कृत्वा उपविशेत्॥ अग्ने रुत्तरतः प्रणीतार्थमासनद्वयनिधाय। प्रणीता चमसं वाम हस्ते कृत्वा आत्माभिमुखं जलेनापूर्य प्रथमा सनेनिधाय चमस दण्डमालभ्यब्रह्मणां-अवलोक्य तेन सङ्केतादिना ऽनुज्ञातः प्रणीयोत्तरासनेनिदध्यात्। तत उदगग्रैः प्रागग्रैः कुशैरग्निं परिस्तीर्य। अर्थवदासाद्य। अग्ने रुत्तरतः प्राक्संस्थ मुदक्संस्थं वा पात्रासादनम्। पवित्रच्छेदनार्थं दर्भास्त्रयः। पवित्रे द्वे। प्रोक्षणी पात्रम्। आज्य स्थाली। सम्मार्जन कुशास्त्रि प्रभृतयः। उपयमनकुशाः सप्तप्रभृतयः। समिधस्त्रि प्रभृतयः। स्रुवः। आज्यम्। धानाः पूर्णं पात्रं च॥

अथोप कल्प नीयानि'—प्रति शिष्यं नव नव समिध आर्द्राः सपत्रा औदुम्बरस्य। दधिभक्षणार्थं। लौकिका धाना बाहु मात्र मौदुम्बर काष्टं तिल स्थापनस्थाने सर्पफणाकार मार्कपर्फलकम्। तिलाश्चेति। पवित्र करणम्। द्वयोरुपरि त्रीणि निधाय द्विमूलेन द्वौ कुशौ प्रदक्षिणी कृत्य सर्वान्युगपद्धृत्वा नामिका ङ्गुष्ठाभ्यां—छित्वा तानुत्तरतः प्रक्षिपेत्। प्रोक्षणीपात्रं प्रणीतो त्तरतो निधाय। प्रोक्षणीपात्रे पात्रान्तरेण प्रणीताद्भि स्तासांप्रोक्षणम्। स पवित्र हस्ते नोत्तानेन, पात्रप्रोक्षणम्। आज्य स्थाल्याः प्रोक्षणम्। सं मार्ग कुशानां प्रोक्षणम्॥ उपयमन कुशानां प्रोक्षणम्। समिधांप्रोक्षणम्॥ स्रुवस्यप्रोक्षणम्॥ आज्यस्य प्रोक्षणम्। धानानां प्रोक्षणम्॥ पूर्ण पात्रस्य प्रोक्षणम्॥ प्रणीताग्न्योर्मध्ये सञ्चरे प्रोक्षणींनिधाय। कुशोप ग्रहेण आज्यस्थाल्यामाज्य निर्वापः। आज्याधि श्रयणम्। ततो ज्वल दुल्मुकेन पर्यग्निकरणम्। इतरथावृत्तिः। अर्धश्रिते स्रुवंप्रतप्य। संमार्ग कुशैः संमृज्य। अग्रैर्मूलादारभ्याग्र पर्यन्तं मूलैश्च दारभ्यमूलपर्यन्त प्रणीतोदकेनाभ्युक्ष्य। पुनः प्रतप्य। दक्षिणतो निद॰

(१) औदुम्बरस्य या शाखा फलक द्वय संयुता। इाकर्प फलकं नामायज्ञकैः परि कल्पितम्॥ २॥ एताः सप्तविंशत्याहुतयः आज्येन तत प्रेक्षितधानाभि धारणम्॥ स्रुवेण धाना अवदाय। मदमस्रति मन्द्रतमित्य यनेन मन्त्रेण जुहुयात्॥

ध्यात् ।आज्य मुद्वास्य । उत्तरतो निधाय । ततोऽग्नेः पश्चिमतो निदध्यात् ।
पवित्राभ्यामाज्यमुत्पूय । प्रोक्षणीश्चपूर्ववदुत्पूयं । आज्यमवेक्ष्य । अप द्रव्य-
निरसनम् । उपयमन कुशानादाय । तिष्ठन् समिधोऽभ्यादाय । प्रोक्षण्युदक
शेषेण सपवित्रेण हस्ते नेशानमारभ्येशान पर्यन्तं प्रदक्षिणमग्निं पर्युक्ष्य ।
इतरथावृत्तिः । पवित्रयोः प्रणीतासु निधानम् । सोपयमं स्रुव हस्त-
मुत्तानं हृदिनिधाय दक्षिण जानु निपातः ब्रह्मणोन्वारम्भः । दक्षिण
हस्तेनस्रुवेण होमः । ] मनसा—ॐ प्रजापतये स्वाहा इदं प्रजापतये
नमम ॥ स्यागान्तेद्रव्य प्रक्षेपः । प्रोक्षणीपात्रे संस्रवधारणम् ) । ॐ
इन्द्राय स्वाहा । इदं इन्द्रायय नमम ॥ ॐ अग्नये स्वाहा इदमग्नये
नमम ॥ ॐ सोमाय स्वाहा इदं सोमाय नमम ॥ १ ॥ ऋग्वेदे—सप्त[1]
विंशत्याहुतयः । ॐ पृथिव्यै स्वाहा इदं पृथिव्यै न ममः । ॐ अग्नये
स्वाहा इदमग्नये नमम । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे नमम । छन्दोभ्यः
स्वाहा । इदं छन्दोभ्यो नमम् ॥ यजुर्वेदे—ॐ अन्तरिक्षाय स्वाहा इदं
मन्तरिक्षाय नमम ॥ ॐ वायवे स्वाहा इदं वायवे नमम । ॐ ब्रह्मणे
स्वाहा इदं ब्रह्मणे नमम । ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो नमम ।साम-
वेदे—ॐ दिवे स्वाहा इदं दिवे नमम । ॐ सूर्याय स्वाहा । इदं सूर्याय
नमम । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे नमम । ॐछन्दोभ्य.स्वाहाइदं छन्दो-
भ्योनमम ॥ ४ ॥ अथर्वण वेदेः—ॐदिग्भ्यः स्वाहा इदं दिग्भ्यो नमम ।
ॐ चन्द्रमसे स्वाहा इदंचन्द्रमसे नमम । ॐ ब्रह्मणे स्वाहा इदं ब्राह्मणे
नमन । ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो नमम । ॐ प्रजापतये स्वाहा
इदंप्रजापतये नमम । ॐ देवेभ्य. स्वाहा इदं देवभ्यो नमम । ॐ ऋषिभ्यः
स्वाहा इदं ऋषिभ्यो नममः ॐ श्रद्धायै स्वाहा इदं श्रद्धायै नमम । ॐ
मेधायै स्वाहा इदं मेधायै नमम ॐ सदसस्पतये स्वाहा इदं सदस्पतये
नमम । ॐ अनुमतये स्वाहा इदं अनुमतये नम । ॐ सदसस्पति-
मद्भुतम् प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिषं स्वाहा ॥ १३ ॥
इदं सदसस्पतये नमम । ( इमं मन्त्रं गुरुणायपठ्यमानं शिष्या अपि
सहानुपठेयुः ॥ तत उदुम्बर समिन्निवय मभिघार्य हस्ते गृहीत्वा उत्थाय
प्राङ्मुखस्तिष्ठन्त्वः ) ॥ ॐ तत्सवितुर्वरेण्यं० ॥ २ ॥ स्वाहा इदमग्नये
नमम । ( इत्युच्चार्य एकां समिधमादध्युः । एव मन्त्रेण द्वितीयां तथा
तृतीयाम् । ततः सर्वे उपविशेयुः । आचार्यः पुनः । श्रुवेणाधाना अवा
दाय । ) ॥ द्वितीयांधानाहुतिं पूर्ववत् ॐ तत्सवितु० ॥ ३ ॥ स्वाहा

( १ ) एवाः सप्तविंशत्या हुतयः आज्येन ततः ... पानामिधारणम् ॥
सुवेणधाना अवदाय । सदसस्पतिमद्भुत मित्यनेनमन्त्रेणजुहुयात् ॥

इदमग्नये नमम ॥ ततस्तिस्रोऽपराःसमिधो घृत्तेनाभ्यज्य । उत्थाय प्राङ्मुखास्तिष्ठन्तः—ॐ तत्सवितु० ॥ ६ ॥ स्वाहा इदमग्नये नमम । ( इत्युचार्य एकां समिधमादध्युः । ) पुनः ॐ तत्सवितु० ॥ ६ ॥ स्वाहा इदमग्नये नमम । एवं द्वितीया । पुन. ॐ तत्सवितु० ॥ ६ ॥ स्वाहा इद मग्नेय नमम ॥ एवं तृतीयां हुत्वा चार्योधाना हुतिंजुहुयात् । ॐ सदसस्प० ।- स्वाहा इदं सद सस्पतये नमम ॥ मन्त्रानुपठनं ( शिष्याणामपि-समिन्त्रयं पूर्व वज्जुहुयात् ) ॐ तत्सवितु० ॥ ६ स्वाहा इदमग्नये नमम । एवं द्वियीयां । ब्रह्म चारीतु । शिष्योऽहर हरग्नि कार्य क्रमेण समिदाधान कुर्यान् न सावित्र्या । अन्यत्सर्वं समानम् । ) धाना भक्षणम् ( ततोधा उपकल्पिताधानास्तिस्र स्तिस्रोगृहीत्वा )—ॐ शन्नोभवन्तुवाजिनो हवेषुदेव वातामितद्रवऽः स्वर्काऽः । जम्भयन्तोऽहिंवृकऽः रक्षा ᳪ सि सनेम्यस्म्यद्युयवन्नमीवाऽः ॥ ६ ॥ इति मन्त्रेणदन्तै रस्वा दन्तः प्राश्नीयुः ॥ ततो—द्विराचमनम् ) दधिभक्षणम्"—ॐदधिक्राव्णोऽ अकारिषञ्जिष्णोरश्वस्यवाजिनः । सुरभि नो मुखा करत्प्रणऽ आयुᳪषि तारिषत् ॥ १० ॥ इति मन्त्रेण दधि भक्षेयु.) ॥ द्विराचमनम् । ( तत आचार्यो यावन्तशिष्यगणं आत्मन इच्छेत्तावतस्तिलान्गणयित्वा आकर्षफलकेना वदाय )—ॐ शुक्रज्योतिश्च । चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्चशुक्रश्चऽऋतपाश्चात्यᳪहाऽः॥११॥ इत्या यत्नु वाकेन सावित्र्या वा जुहुयात् । ॐ तत्सवितु० ॥ १२ ॥ स्वाहा इदं सवित्रे न मम ॥ ( सं स्रवप्रक्षेपः । ततो धानाभ्यः स्विष्टकृत् )—ॐ अग्नयेस्विष्ट कृते स्वाहा इदमग्नयेस्विष्टकृतेन मम ॥ भूराद्या नवा हुतयः"—( आज्येन जुहुयात् । सर्वत्र त्यागान्ते द्रव्य प्रक्षेपः । तद्यथा— ॥ १ ॥ ॐ भूः स्वाहा इदमग्नयेन मम ॥ २ ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥ ३ ॥ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ४ ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽ अवयासि सीष्ठाऽः । यजिष्ठो वह्नितमऽः शोशुचानो विश्वा द्वेषा ᳪसि प्रमुमुग्ध्य स्मत्स्वाहा ॥ १३ ॥ इदमग्नी वरुणाभ्यां न मम ॥ ५ ॥ सत्वन्नोऽअग्ने वमो भवोती नेदिष्ठोऽअस्याऽउषसोव्युष्टौ । अव यक्ष्व नोवरुण ᳪ रराणोवीहि मृडीक ᳪ सुहवो नऽएधिस्वाहा ॥ १४ ॥ इदमग्नीवरुणाभ्या न मन ॥ ६ ॥ अया श्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमयाऽ असि । अया नोयज्ञं वहास्यानोधेहि भेषज ᳪ स्वाहा । (सौनमन्त्रः) । इदमयाय न मम । [ इद मग्नये अयसे न मम इति ] केचित् ॥ ७ ॥ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽ अद्य सवितोत विष्णु विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ।

[ सौत्रमन्त्राः ] । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ८ ॥ उदुत्तमं वरुणपाश मस्मदवाधमं विमध्यम छं श्रथाय । अथा वयमादित्य व्रते तवा नागसोऽदित ये स्याम स्वाहा ॥ १५ ॥ इदमादित्यायादितये न मम ॥ ६ ॥ उपांशु । ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम । [ संस्रव प्राशनम् ] आचमनम् । पवित्राभ्यां मार्जनम् । अग्नौ पवित्र प्रतिपत्तिः' ॥ ब्रह्मणे पूर्ण पात्रदानम्,—यथा,—ब्रह्मन् अस्योपाकर्मणोऽङ्ग तयाविहित पूर्णं पात्रं प्रति गृह्यताम् । ॐ द्यौस्त्वाददातु पृथिवीत्वा प्रतिगृह्णातु इति मन्त्रस्य ब्रह्मा जपं कुर्यात् । ( प्रणीता विमोकः । ततोऽग्निमुत्तरेण कुशेषु प्रस्तड् मुखो पविष्टेभ्य. शिष्येभ्यः प्राङ्मुख आचार्यः ओंङ्कारमुक्त्वा त्रिरव साविनी मनु त्रयान् )—यथा—ॐ तत्सवि० दयात् ३३ । ( इति निः ) इषेत्यादि ईशावास्यान्तम् । तत सुपैप्यन्तित्यादि सर्वमन्त्र ब्राह्मण योध्यादि प्रब्रूयात् । वह्‌वाऋषिमुखानि । पर्वाणि छन्दोगानाम् । सूक्तान्यथर्वणा नाम् । ( एवं सर्व पठित्वागुरुः शिष्याश्च जपन्ति ) ॥ ॐ सहनोस्तु, सहनोत्तु सहनऽइद वीर्य वदस्तु ब्रह्म इन्द्रस्तद्वेद येन यथा न विद्विषामहे ॥ इतिमन्त्रं जपित्वा त्रि रात्रमध्ययनं लोम नखा नमति कृन्तनमवपनं च करिष्या महे ॥ इति सर्वेषा सङ्कल्पः ॥ ) प्रागुत्सर्गा द्वा नियमो लोमनख निकृत्तनम् । उत्सर्गा वधि लोमनखा नाम कृन्तन मह करिष्ये इति । छन्द सामुत्सर्गात्प्राङ् मन्त्र ब्राह्मण योरध्ययनम् ॥ इत्यु पाकर्म प्रयोगः ॥

## अथ तीर्थ श्राद्ध विधिः

वाचष्पतेः—श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते । नित्यं नैमित्तिक काम्य वृद्धि श्राद्धतयैवच ह पार्वण चेति मनुना श्राद्ध पञ्च विध स्मृतम् ॥ अह्नेकादशे प्राप्ते पार्वणन्तु विधीयते ॥ तीर्थेषुब्राह्मणा नैव परीक्षेत कदा चन ॥ अन्नार्थिन मनु प्राप्तं भोज्यं न मनुर ब्रवीत् । सक्तुभि पिण्डदानं च संयावे पायसे न वा । कर्त्तव्य मृषिभि र्दिष्टं पिण्या केन गुडे न वा ॥ देयन्तु तिलपिण्याकं शक्ति मद्भिर नरैः सदा ॥ श्राद्धेतु तत्र कर्त्तव्य मर्घावाहन वर्जितम् ॥

## अथ पार्वण तीर्थ श्राद्धम्

अथ तीर्थेति कर्त्तव्यता पूर्वे तीर्थ प्राप्ति काल एवं तीर्थ साष्टांग प्रणम्य नारिकेल फल पुष्प खर्ज्जूरादिकं आदाय अमुक तीर्थाय नम. इति निवेद्य ॐ रारेय नीरं पृष्ट्वा ॐ नमोस्तु देव देवाय शिति कण्ठाय दण्डिने रुद्राय चाप हस्ताय चक्रिणेवेधसे नमः । सरस्वती च

सावित्री वेद माता गरीयी । सन्नि धात्री भवत् वत्रः तीर्थे पाप प्रणाशिनी ॥ तीक्ष्ण दंष्ट्र महाकाय कल्यान्त दहनो पम ॥ भैरवाय नमस्तुभ्य मनुज्ञा दातु मर्हसि ॥ इति मन्त्रेण क्षेत्रपाल गणेशं च नमस्कृत्य सचैलं स्नायात् ॥ तत. त्रिधिना पूर्ववत् तीर्थस्नानं देश काल कीर्त नान्ते यथोक्ते नस्नायात् ॥ इति स्नायायात् ॥ इति स्नात्वा ॥ प्रायश्चित्तार्थे गो भू हिरण्या दिकं दद्यात् ।। क्षौर कुर्यात्.तत्र मन्त्रः—यानि कानि च पापानि ब्रह्महत्या समानिच । केशानां श्रित्यतिष्ठन्ति तस्मात्कैशान्वपाम्यहम् ॥ ततः प्रथमं दक्षिण कर्ण मास्य वामकर्ण पर्य्यन्तं उदकं सस्थम् केशववपनम् ॥ तत.श्मश्रु क्षौम नखा प्राणा क्रमेण वपनम् । वप्तानां केशादीनां जले गर्तेवा प्रक्षेप. ततः मृत्तिका स्नायात् तत्रमन्त्र. .. ओं अश्व क्रान्ते-रथ क्रान्ते विष्णु क्रान्ते वसुन्धरे मृत्तिके हरमे पाप यन्मया दुष्कृत कृतम् ॥ मृत्तिके ब्राह्मणा दत्ता काश्यपेयाभि मन्त्रिता ॥ मृत्तिकेदेहिमे पुष्टिं.



## श्री हंसकुण्ड ब्रह्मतीर्थ

त्वइसर्वं प्रतिष्ठितम् ॥ ओं इदं विष्णुर्वि० इतिमन्त्रेण । तत्र निमज्योन्मज्य जलादुत्तीर्य धौते वाससी परिधाय भस्मादीना त्रिपुण्ड्रोर्ध्व पुण्ड्रादिकं कृत्वा संध्या मुपास्य ॥ तर्पणं कुर्यात् तत सभ्यादिवे रूपकरणैस्तीर्थ श्राद्ध मारभेत् तत्राय विधि. ॥

श्राद्धस्थानम्.—मनु.—शुचि देशं विविक्त'तु, गोमये नोप लेपयेत् । दक्षिणा प्रवण रचैव प्रयत्ने नोप पादयेत् ॥

श्राद्धस्थले देवस्य सं निधापनम्—पाद्मे—शिवस्य नार्मदलिङ्ग शालिग्रामशिला चयः । पीठे मस्थापयित्वा तु श्राद्धञ्च कुरुते नरः । पितर स्तस्य तिष्ठन्ति कल्प कोटि शतदिवि ॥

कुशामन्त्रण मंत्र — विरिञ्चिनासहोत्पन्न परिमेष्ठि निसर्गज नुद सर्वाणि पापानि दर्भ ? स्वस्ति करो भवः ॥

हविर्विपये—आगोधूमच यच्छाद्धं माप मुद्ग विवर्जितम्। तैल पक्वैन रहित कृतमप्य कृत भवेत् ॥

सूतके—विष्णु स्मृतौ—व्रत यज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं नस्यात् अनारब्धे तु सूतकम् ॥

विधवा कर्तृक श्राद्धम् ॥ —स्वमर्तृ प्रमिति त्रिभ्ये स्वपितृभ्य स्तथैवच। विधवा कारये च्छ्राद्ध यथा काल मतिद्रिता ॥ आमान्ने नतु शूद्रस्य तृष्णातुद्विज पूजनम्। कृत्वा श्राद्धन्तु निर्वाप्य सजति नाशये दथ. ॥

आचम्य हरिंस्मृत्वा ॥ शुक्ल वापीत वस्त्र परिधाय आसनो परि उपविश्य दीपं धृत्वा तिल तैलवा प्रज्वाल्यरक्षोघ्नदीपाय नमः इतिसम्पूज्य [ दीपं दक्षिणाभिमुखं सस्थाप्यश्राद्धकर्ता पूर्वाभिमुखं उपविश्य ] पुण्याक्षत सहित नमस्कृतम्—यन्ब्रह्म वेदान्तविदो वदन्ति परं प्रधान पुरुषंस्तथान्ये विश्वोद्गते कारणमीश्वरम्भा तस्मै नमोविघ्नविनाशनाय ॥ शुक्ला-बर धरं विष्णु शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनध्यायेत् सर्व विघ्नो पशान्तये इति नमस्कृतम् ॥ स्ववामभागे गन्धादिना भूमौ चतुष्कोण मण्डलं विधाय तत्र शङ्ख चक्र च ७।४। विलिख्य तत्र कुशानास्तीर्य्य वा त्र्यमुष्टितण्डुलधृत्वा-तदुपरि कर्मपात्रे संस्थाप्य ॥ [ताम्रेण्य स्ट्ग] पात्रे पवित्रम्—दक्षपाणिने—ॐ पवित्रेस्थोवैष्णव्यो सवितुर्वः प्रसव उत्तपुनाम्यच्छिद्रेणपवित्रेण सूर्य्यस्य रश्मिभि. तस्यते पवित्रपते पवित्र पूतस्य यत्काम पुने तच्छकेयम् ॥ इति मन्त्रेण पवित्र क्षिपेत् स्व दक्षिण हस्ता नामिकाया पवित्रेस्थ इति मन्त्रेण कुश पवित्री मय धारयेत् ॥ पात्रे च शन्नोदेवीति जलम्—ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतय शय्योरभिस्रवन्तुन. इति मन्त्रेण पात्रे तु जलक्षिपेत् ॥ इति मन्त्रावात् यवोसीति यवान्—ॐ यवोसियवयास्मद् द्वेषो यवयाराविदिव स्यान्तरिक्षायत्वापृथिवी त्वा शुन्धतांल्लोका पितृषदना पितृषदन मसि ॥ इति यवान्क्षिपेत् ॥ विलोसीति विल्लान् विलोपी सोम देवत्यो गोसवो देवनिर्मित प्रत्नमद्भि पृक्तस्स्वधयापितृन्ल्लोकान्प्रीणाहिन स्वाहा इतिविलान्क्षिपेत्। तत्र वरुणा वाहनं कुर्यात्—आवाहयाम्यहं देवीं गत्वा त्रैलोक्यमातरम् ॥ यस्या स्मरणमात्रेण सर्वपाप प्रणाशनम् ॥ ॐ भूर्भुव स्व वरुणां देवता इहागच्छ इहातिष्टम् प्रतिष्टितोवरदोभव ॥ गन्धाक्षत ( मूत्रराज ) रजतपुष्पादिभि. तूष्णिनिधाय । गन्धद्वारेति गन्धम् । श्री रम्नतिष्ठप ॐ धर्म पात्रं तु सम्पन्नं अस्तु । इतिमन्त्रणा

पृच्छेत् [ अस्तुसु सम्पन्नं मिति यजमानोब्रूयात् ] प्रतिवचनम् ॥ ततः तज्जलेन ॐ अपवित्रः पवित्रो या सर्वा० इति मन्त्रेण आद्रीयवस्तूना-त्मानां च सिंचेत् पुण्डरी काक्षं स्मृत्वा इतितत् श्राद्धदेशे सामग्री आत्मानं च सम्प्रोक्ष इति ॥ ततःकुशादिक आदाय ॐ अद्येत्यादि प्रधान सङ्कल्प सिद्धिरस्तुदेश काल कीर्ति नान्ते अमुक गोत्राणा मस्मत्पितृ पितामह प्रपिता महानांमसुकामुक शर्माणां वा ( ब्रह्मणां वा गुप्तानां ) यथायोग्य सपत्नीकानां वसुरुद्रादित्य स्वरूपाणां अक्षय तृप्त्यर्थं पार्वण श्राद्ध विधानेन धूरि लोचन सञ्ज्ञक विश्वेदेव पूर्वकं अमुक तीर्थ प्राप्त निमित्तकं सपिण्डक मामान्न तीर्थे श्राद्धं करिष्ये ॥ ॐ कुरु चेति प्रत्युक्तिः ॥ ॐ देवताभ्य पितृभ्यश्च महायोगीभ्य एव च ॥ नमः स्वधायै स्वाहायै नित्य मेव नमो नमः इतित्रि । सप्त व्याधादशार्णे पुमृगाः कालञ्जरे गिरौः चक्रवाकाशर-द्वीपे हंसा सरसिमानसे । तेपि जाता कुरुक्षेत्रे ब्राह्मणा वेदपागाः ॥ प्रस्थित दीर्घ मध्यात्तंयू यं किमवलीदथः ॥ श्राद्धारम्भे गयांध्यात्वाध्यात्वा देवंगदाधरम् । उभाभ्यांचनमस्कृ य ततः श्राद्ध समाचरेत् ॥ गया गया गयादित्यो गायत्री च गदाधरः गया गयासुरश्चैव षड्गया मुक्तिदायकाः ईशान विष्णु कमला सन कार्तिकेय वह्नि त्रयार्क रजनी शगणेश्वराणाम् ॥ क्रौञ्चामरेन्द्र कलशोद्भव कश्यपानां पादान्नमामि सततं पितृ मुक्तिहेतोः ॥ ॐ गयायै नमः ॐ गदाधरायैनमः । ततः कृष्णकव्यमिदं रक्षमदीय मिति अपसव्येन दिग्बन्धनं कुर्यात्-तिल सहित मोटकं आदाय तिलान् पूर्वादिक्रमेण विकिरेत् ओं अग्निष्वात्ताः पितृगणाः प्राचीरक्षन्तु मे दिशम् ॥ अपहता असुरा रक्षा ᳪसि वेदि षद् । ओं तथा वर्हि पद यान्तुयाम्याये पितरः स्थिता ॥ अपहता असुरा रक्षा ᳪ सिव्वेदिषदः ॥ ओं उदीची मपि सोमपः पितरः यान्तु ॥ अपहता असुरा रक्षा ᳪ सिव्वे-दिषदः ओं ऊर्ध्वं तस्त्वर्यमा रक्षेत्कव्यवाडनलोप्यधः ओं रक्षोभूत पिशा-चेभ्य स्तथैवाऽसुर दोषतः ॥ सर्वतः रधिपस्तेषां ॥ यमो रक्षा करोतुमे ॥ इति मन्त्रैस्तिलान्विकीर्यदिग्बन्धन मोटक मनेन वक्ष्यमाण मन्त्रेण वाम कक्ष्यांधारयेत् ओं निहन्मि सर्वं पदमेध्यवद् भवेद्धतारचसर्वेऽसुरदानवामया ॥ रक्षांसि यक्षाः स पिशाच गुह्यकाहता

---

श्राद्धे वैश्व देव —यातुधानामयाः पूर्वं श्राद्धमध्ये क्षयवंयाःवह्निकृचाः श्राद्धशेषेण कुर्युर्वैश्वदेवकम् ॥ वैश्वदेवकम् ॥ वैश्वदेव अञ्जली प्रमाणं माह अत्रिः—निर्यग्यवोदरान्यधावूर्ध्व वानद्वियस्त्रयः । अञ्जलीः सैव विज्ञेयः श्रोते स्मार्ते च कर्मणिः ॥ इति वचनात् ॥ भार्यारजस्वलात्वे-दिन चतुष्टयं प्रति पालयेत् । रजस्वला तीर्थे देवमन्दिरादौपञ्चमदिनेन गन्तव्यम् ॥

मया यातुधानाश्च सर्वे इति ॥ ततस्तिल सहित कुशत्रयं गृहीत्वा-प्रयान्तु दूरतः सर्वदैतेयादानवास्तथा ॥ सर्वं विष्णो पशान्त्यर्थं त्वपामिवः कुशा स्तिलान् इति मन्त्रेण दक्षिणस्यां क्षिपेत् ॥ ततः सव्य-कृष्ण हव्य मिदं रक्षमदीय इति सव्यं कृत्वा हरिं स्मरेत् ओं नमो नमस्ते गोविन्द पुराण पुरुषोत्तम । इदं श्राद्धं हृषी केश ! रक्षतां सवतो दिश ॥ अथा सनम्—ततः सव्येन कुशादिक मादाय ओं अद्येहामुक गोत्राणा मस्म पितृ पितामह प्रपितामहानाममुकामुक शर्माणा [ ब्रह्माणां गुप्तानां ] यथायोग्यसपत्नी कानां वसुरुद्रादित्य श्वरूपाणां तथा द्वितीय गोत्राणामस्मन्मातामह प्रमातामह वृद्ध प्रमाता महाना अमुकामुक शर्माणा यथायोग्य सपत्नी कानां वसुरुद्रादित्य स्वरूपाणां श्राद्ध सम्बन्धिनाधूरि लोचन शङ्ककानां विश्वेषां देवानामिद मासन मस्तु ! इदं कुशरूप श्रासन मास्यतां आस्ये इत्यासनंदत्वा । ततः अर्चनम्—कुशोसि कुशपुत्रोसि ब्राह्मणानिर्मितः पुरा । त्वयार्चितः सोर्चितोस्तु यस्याहं नाम कीर्तये ॥ पूर्ववत् अपसव्येन मोदक मादाय-ॐ अद्येहामुक गोत्राणामस्मत्पितृ पितामह प्रपिता महाना-ममुका मुकामुक शर्माणा [ ब्रह्मणा-गुप्तानां ] यथा योग्य सपत्नी का नां वसुरुद्रा दित्यस्वरूपाणां तथा द्वितीय गोत्राणा मस्मन्माता-मह प्रमातामहवृद्ध प्रमातामहाना ममुकामुकामुकशर्माणां सपत्नीकानां वरुण प्रजापत्यग्नी स्वरूपाणा श्राद्ध कर्त्तव्यामुक तीर्थं श्राद्धे इदं मोदक रूप मासन पोढ़ा विभज्य युग्मश्च स्वधा, इदं मोदक रूप आसन मास्यतां आस्ये इत्यासन दत्वा । ततः सव्येन ॐ कुशोसि कुश पुत्रोसि ब्राह्मणा निर्मितः पुरा । त्वयर्चितः सोर्चितोस्तु यस्याहं नाम कीर्तयेति अर्चयिष्ये इति पृष्ट्वा ॐ अर्चयेति प्रत्युक्तः ॐ नमोस्त्व नन्ताय सहस्रमूर्तयेति मन्त्रेणगन्ध पुष्पाक्षत धूप दीप नैवेद्यादिभिः सम्पूज्य । कुशादिक मादाय ॐ अद्यामुक गोत्राणा मस्मत्पितृ पितामह प्रपितामहानाममुका मुकामुक शर्माणां ( ब्रह्मणा-गुप्तानां ) यथा योग्य सपत्नीका नां वसु रुद्रादित्य स्वरूपाणां श्राद्ध सम्बन्धिनोविश्वेदेवा धूरि लोचन नामानः एतान्यर्चना न्यत्रगन्ध पुष्पाक्षतयवा धूप दीप यज्ञो पवीत वासांसि वो नमः ॐ अर्चनं-विधौ मर्व परिपूर्ण मस्तु इति जलं दद्यात् अस्तु प्रति वचनम् । ततः अपसव्येन ॐ अर्चयिष्ये इति पितृ ब्राह्मणां पृष्ट्वा ओं— अर्चयेति प्रत्युक्तः गन्धादिभि सम्पूज्य धूप दिशो धारयेत् । पितृ ब्राह्मणां सम्पूज्य ॥ ओं पितृ पितामह प्रपितामहानां यथा योग्य सपत्नी केभ्यो नमः । ओं नमोऽः मातामह प्रमातामह वृद्ध प्रमाता-

महाना यथा योग्य सपत्नी का ना तथा च आप्त समस्ताना पूजन कुर्यात् ॥ कुश मोटकादिक मादाय ओं अद्यामुक गोत्रा अस्मत्पितृ पितामह प्रपितामहा अमुकामुकामुक शर्माण (ब्रह्मा गुप्तो) यथा यथा योग्य सपत्नीका वसु रुद्रादित्य स्वरूपा तथा अमुक गोत्रा अस्मन्मातामह प्रमातामह वृद्ध प्रमाता महा अमुकामुकामुक शर्माण यथायोग्य सपत्नी का वरुण प्रजापति अग्नि स्वरूपा अत्र कर्त्तव्या मुक तीर्थे श्राद्धे एतान्यर्चनान्यत्र गन्ध पुष्पाक्षत ताम्बूलपूगीफल यज्ञोपवीत धूप दीप नैवेद्यादीनि पोढा विभज्य युष्मभ्य स्वधा इत्यु त्सृजेत् । ओं अर्चनविधे सर्वपरि पूर्ण मस्तु इति जल दद्यात् ओं अस्तु परिपूर्णं इति प्रति वचनम् । अथ अन्नसकल्प । सव्यन सोपस्कर मन्न सम्प्रोक्ष्य सोपस्कर यव जल धृत मधुयुत मन्न उपनीय मधुनामिधार्य ऋजुहस्ताभ्या अन्न पात्र आलभ्य पृथिवीते पात्र द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृत जुहोमि स्वाहा । इद विष्णुर्विचक्रमे त्रेधानिदधे पदम्, समूढ मस्य पा ꣳ सुरेस्वाहा। ओं कृष्ण हव्यमिद रक्ष मदीयमिति पठित्वा । ओं इद अन्न इति अन्ने इमा आप इति जल इद माज्यइति घृते ॥ इद हविरिति पुनरन्ने एतानि उपकरणानि इति क्रमेण अन्न जल घृतेषु विप्र करे दक्षिणा ङ्गुष्ठनिवेश्य ॥ ओं यवोसियवयास्म द्वेषो यवयारितिमन्त्रेण यवान्नोपरि विकीर्य कुश यव जलान्यादाय—वाम हस्ताङ्गुल्यङ्गुष्ठे क्रमेणान्नमापरचपृष्ट्वा ओं अद्यामुक गोत्राणामस्मत् पितृ पितामह प्रपितामहानाममुकामुकामुक शर्माणा (ब्रह्मा गुप्तो) यथायोग्य सपत्नी का ना वसुरुद्रादित्य स्वरूपाणा तथा द्वितीय गोत्राणा अस्मन्मातामह प्रमातामह वृद्ध प्रमाता महानाममुकामुकामुक शर्माणा यथा योग्य सपत्नी का ना वरुण प्रजापति अग्नि स्वरूपाणा श्राद्ध सम्बन्धिभ्य धूरि लोचन सञ्ज्ञक विश्वेभ्य देवेभ्य इद मन्न अमृत स्वरूपेण सपयता न मम स्वाहा ॥ इति कुशादिक उत्तसृजत् ॥ अपसव्यन ॥ सोपस्कर तिल घृत मधुजल युत मन्न उपनीय मधुना विधार्य अधो मुखाभ्या व्यस्ताभ्या पाणिभ्या अन्न पात्र आलभ्य पृथिवीते पात्र द्यौ रपिधान ब्राह्मस्य मुखे अमृते अमृत जुहोमि इद विष्णु-विचक्रमेत्रेधा निदधे पदम् समूढ मस्य पा ꣳ सुरेस्वाहा ओं कृष्ण कव्यमिद रक्षमदीय इति पठित्वा ओं इद अन्न ओं इमा आप ओं इद आज्य ओं इद हविरिति पुमरन्ने । ओं—एता न्युपकरणानि क्रमेण अन्न जल घृतेषु विप्र दक्षिणा ङ्गुष्ट निवेश्य । ओं उप हता असुरा रक्षा ꣳ सि वेदिषद इति ब्राह्मणा नाम मतो भूमावेव ।

तिलान् विकीर्य मोटका दीन्यादाय वाम हस्ताङ्गुष्टाङ्गुलिभिः क्रमेणान्नं अपरच सृष्ट्वा ओं अद्येहामुक गोत्रे भ्यः अस्मत्पितृ पितामह प्रपितामहेभ्यः अमुकामुकामुक शर्मभ्यः [ ब्रह्म-रुद्रेभ्यः ] यथा योग्य सपत्नी केभ्यः वसु रुद्रादित्य स्वरूपेभ्यः तथा द्वितीय गोत्रेभ्यः मातामह प्रमातामह वृद्धप्रमातामहेभ्यः यथा योग्य सपत्नी के भ्यः वरुण प्रजापति अग्नि स्वरूपेभ्यः इद मामान्नं सजलं सोपस्करं परि विष्टं परि वेदयमाण मक्षय तृप्ति हेतोस्तेयथा यथा भागं विभज्यभुज्यतो स्वधा ॥ इति पितृ ब्राह्मण समीपे मोटकादिकमुत्सृजेत् । सकृत् अपोदत्त्वाः ततः सव्ये न देव ब्राह्मण करयोः ओं भवन्तौ प्राशयन्तो मित्य पोशान वैश्वदेव ब्राह्मण जलं दद्यात् ॥ अपसव्येन भवन्तः प्राशयन्तु इति पितृ ब्राह्मणाय जलं दद्यात् ॥ अन्नहीन क्रिया हीनं विधि हीन च यद्भवेत् तत्सर्वं मच्छिद्र मस्तु इति जपेत् ॥ सव्येन गायत्रीं जपित्वा ओं मधुव्वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीनः सन्त्वोषधी । ओं मधुनक्त मुतोषसो मधुमत् पार्थिवꣳ रजः ॥ मधुद्यौरस्तुनः पिताः ॥ ओं मधुमान्नोव्वनस्पतिर्म्मधु माँ॥ अस्तु सूर्यः । माध्वी र्गावो भवन्तुनः ॥ ओं मधु मधु मधु इति पठित्वा । ओं अन्नहीनं क्रिया हीनं विधिहीन चयद्भवेत् । तत्सर्वं मच्छिद्र मस्तुश्रीभास्करस्य प्रसादतः ।ओं नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेक चक्षुषे । नम पिनाक हस्ताय वज्रहस्ताय वै नमः इति पठेत् ॥ यथा सुखं जुषध्वम् इति वचना नन्तरं ते ब्राह्मणा मौनिनो भूत्वाभुञ्जीरं संज्ञया च भक्ष्यं प्रार्थयेयुः ॥ ततोदर्भेष्वासीनः गायत्रीं मधुव्वाता इत्यादि ऋचम् ओं मधु मधु मध्वीति च जपेत् । ततः कृणुष्वपाजः मिति रक्षोघ्नी ऋचं पठेत् [ ऋचं अग्रेद्रष्टव्यः ] ततः तिलान्भूमौक्षिप्त्वा ओं उदीरता मित्यादिपितृ मन्त्रान् ओं सहस्र शीर्षेत्यादि पुरुष सूक्तम् ओं आशुः शिशानः इत्यादि कम प्रति रथं मधुव्वाता इत्यादि पितृसूक्तं वे नमस्तेऽस्तु इत्यादि हविरेतच्च पविनाशि ।अग्रेद्रष्टव्यः) यथा शक्तिजपेत् । नमस्तुभ्यंविरूपाक्ष नमस्तेनेकचक्षुषे नमः पिनाक हस्ताय वज्र हस्तायवै नमः ॥ इतिपठेत् अन्यद्वापिद्धित गीतादि पारायणं पठेत् ॥ अपसव्येन पिण्डदानार्थं वेदिकां निर्माय ओं ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधयाचरन्ति । परापुरं निपुरो ये भरन्त्यग्निष्टाँल्लोकान प्रणुदात्यस्मान् इति मन्त्रेण ज्वलदङ्गारं भ्रामयित्वा । तदङ्गारं दक्षिणस्यां क्षिपेत् ॥ ततः पिण्डकायां रेखा करणम् ।—वामेन पाणिनां दर्भ पिञ्जलीं गृहीत्वा सव्येन अगृहीत्वा—ओं अपहता असुरा रक्षांसिवेदिषद् । इति दक्षिणायां रेखां कृत्वातां मुत्तर तःक्षिपेत्, ततो जलेन ओं शन्नो देवीरिति पिण्डिकां आसिच्य, तदनुच्छिन्न मूल कुशानास्तीर्य,

सव्येन ओं देवताभ्य इतित्रि. पठित्वा अपसव्येनयवपिष्ट मयान् पिण्डान्निर्माय–मोटकादिक मादाय ओं अद्यामुक गोत्रअस्मत् पित अमुक शर्मन् [ब्रह्मा-गुप्त] वसुस्वरूप अमुक तीर्थ श्राद्धे पिण्डस्थाने अत्रावने निरस्वतेस्वधा। एव पितामह, प्रपितामहा (अम्बात्रितय) मातृ पितामहि प्रपितामहा (सपत्नजननी) मातामहप्रमातामहा वृद्धप्रमातामहा एतेसस्त्रिय स्त्री-पुत्र-पुत्री–पितृव्य सत्री मातुलसपत्नीक. स्वभ्रातासपत्नीक पितृ स्वपासापि अपत्यधवयुक् सापत्या सधवा, मातृष्वसा–आत्मष्वसा–श्वसुर. गुरुः-शिष्या आप्तमित्राणि–नमस्त (अत्र शस्त्र-वाहनादि) पितृभ्यो वसुस्वरूपेभ्य आयकर्तव्य अमुक तीर्थ श्राद्धे पिण्डस्थानेऽत्रावने निदवते स्वधा इति अवने जल छिन्न मूल कुशोपरिदद्यात्॥ तत सव्येन भो ब्राह्मण युष्मदनुज्ञया पिण्ड प्रदान मह करिष्ये इति पृष्ने ओं कुरुस्वेत्यनुज्ञात॥ अपसव्येन यव.पेष्टमयान् निर्माय पिण्ड मोटकादि सहितप्रथम पिण्ड आदाय—ओंअद्येहेत्यादि पूर्व सकल्पमुच्चार्य अमुक गोत्र ऽअस्मत्पित अमुक शर्मन् (ब्रह्मन् वागुप्तो) वसु स्वरूपाय कर्त्तव्य अमुक तीथश्राद्धे एप पिण्डोरअमृत स्वरूपोऽक्षय्य तृप्तिर्हेतोस्ते स्वधा। इदमुदक गागम्—ओं गङ्गे चेत्यादि गङ्गा जलम्। ओं अद्येहे त्यादि पूर्व सकल्प मुचार्य अमुक गोत्र. अस्मत्पितामह अमुक शर्मन् रुद्रस्वरूपाय कर्त्तव्य अमुक तीर्थ श्राद्धे एप पिण्डो अमृतस्त रूपोऽ अक्षय तृप्ति हेतो स्वधा। इद मुदक गागम्॥ २॥ ओं अद्येहेत्यादि पूर्व सङ्कल्पमुच्चार्य अमुक गोत्र अस्मत्प्रपितामह अमुक शर्मन् आदित्य स्वरूपाय कर्त्तव्य अमुक तीर्थ श्राद्धे एपपिण्डो अमृतस्वरूपोऽक्षय तृप्तिहेतोस्ते स्वधा। इद उदक गागम् गगेश्च यमुनेत्यादि॥ ३॥ ओं अद्येहे त्यादि पूर्व संकल्प सिद्धि रस्तुअमुक गोत्राये अस्मन्मात्रे. अमकी देवी गायत्री स्वरूपे (सापत्ये) अद्य कर्त्तव्य अमुक तीर्थ श्राद्धे एप पिण्डो अमृतस्त रूपेऽक्षय तृप्तिहेतोस्ते स्वधा। इद मुदकं गागम्॥ ओं अद्येहे त्यादि पूर्व सकल्प सिद्धिरस्तु अमुक गोत्रायै अस्मत्पितामही अमुकी देवी (सापत्यादेवी) सावित्रीस्वरूपेऽय कर्त्तव्य अमुक तीर्थ श्राद्ध एप पिण्डोअमृत स्वरूपे अक्षय तृप्ति हेतोस्ते स्वधा, इदमुदकं गागम्॥ ओं अद्येहेत्यादि पूर्व सकल्प सिद्धिरस्तु अमुक गोत्रायै अस्मत्प्रपितामही अमुकी देवी (सधवादेव्ये) सरस्वती स्वरूपे अद्य कर्त्तव्य तीर्थ श्राद्धे एप पिण्डो अमृतस्व रूपे अक्षय तृप्ति हेतोस्ते स्वधा॥ एव सपत्न जननी॥ इद मुदकगागम् गगे चेत्यादि॥ द्वितीयगोत्राम् ओं अद्येह त्यादि पूर्व सकल्प मुचार्य अमुक गोत्रा अस्मन्माता मह अमुक शर्मन यथा योग्य सपत्नीकः वसु स्वरूपाय

दद्यात्। ततः क्रमेण प्रत्येक पिण्डान् गन्धादिभिः सम्पूज्य धूपदीप नैवेद्यादि निवेद्य ॐ पितृ पितामह प्रपितामहेभ्यो नमः ॐ मातृ पितामहि प्रपितामहिभ्योनमः ॐ मातामह प्रमातामह वृद्ध प्रमाता महेभ्यः अमुका मुकामुक शर्मभ्यः सपत्नी केभ्यः वसु रुद्रादित्य स्वरुपेभ्यः तथा: अन्येभ्यः आ‌ऽसमस्तेभ्यः दृच पिण्डेभ्यः आधकर्तव्य अमुक तीर्थ श्राद्धेभ्यः एतानि पिण्डार्चनानि अत्र वस्त्र सूत्र गन्ध पुष्पाक्षत धूप दीप उपायन द्रव्य नैवेद्य ताम्बूल यज्ञोपवीत वासांसि अनेकधाभागं विभज्य युष्मभ्यः स्वधा ॥ इति पिण्डे उत्सृजेत्। ततः आशिषः प्रार्थयेत् सव्येन ॐ गोत्रन्नोवर्धताम् ॐ वर्धताम् इति प्रति वचनम्। ओं दातारोनोभिवर्धताम् ॐ वर्धन्ताम्। ओं वेदावर्धन्ताम्। ॐ सन्तति वर्धन्ताम्।—ओंवर्ध·ताम्। ॐ श्रद्धा चनो माव्य गमत् ॐ मागात् ॐ बहुदेयं चनोस्तु ॐ अस्तु। ॐ अन्नं चनो वहुभवेत् ॐ अतिर्थी श्चलभे महि। ओं लभध्वम्। ॐ याचितारश्चनः सन्तु ओंसन्तु। स्व तिलकं सत्वा नुष्ठान सम्पन्नाः सर्वदा यत्र वुद्धय. पितृमातृ परास्चैव सन्त्वस्मत् कुलजा नरा। ॐ यं कामंकामयते सोस्मै काम समृध्यतां मिति ब्राह्मण हस्तेनस्व तिलकं [ देव ब्राह्मण (वेश्वदेव) स्पर्शन पूर्वकं ] कारयेत्। ततः अपसव्येन ॐ स्वधावाच यिष्ये ॐ वाच्यताम्। रिक्ताञ्जलिना ॐ अद्यामुक गोत्रेभ्योऽऽस्मत्पितृ पितामह प्रपिता महेभ्योऽअमुका मुकामुक शर्मभ्यः यथायोग्य सपत्नी केभ्यः वसु रुद्रादित्य स्वरूपेभ्यः। तथा अमुक गोत्रेभ्य. अस्मन्मातामह प्रमातामह वृद्धप्रमाता महेभ्योऽमुका मुकामुक शर्मभ्य यथायोग्यस सपत्नी केभ्यवसुरुद्रादित्य स्वरूपेभ्य तथा अन्ये भ्यश्च समस्तेभ्योदृत्त पिण्डेभ्योः अमुक तीर्थ श्राद्धेभ्यस्वधोच्यताम् ॐ अस्तु स्वधा। ॐ ततः सपयस्कं पुटकं वाम हस्ते कृत्वा ॐ ऊर्जवहन्ती रमृतं घृतं पयः कीलालं परिश्रुतम्। स्वधास्थ तर्पयत् मे पितृ न्॥ इति दक्षिणाग्रां पयोधारां दत्वा पृच्छेत्। ओं पिण्डाः सम्पन्नाः ओं सुसम्पन्ना ओं पिण्डान्नुत्थाय यामि, ॐ उत्थापयस्व। ततः नम्री भूय पिण्डान् सव्येना प्राह्य। अपसव्येनोत्थापयेत्। पिण्डाधार कुशानुल्मुक च वह्नौक्षिपेत्। ततः सव्येन पिण्डिकायां शङ्ख चक्रं च ७। ४ विलिख्य ॐ शङ्खायनमः। ॐ चक्राय नमः। ॐ शंख चक्राभ्यां नमः इतियवैः अपसव्येन पिण्डान् पिण्डिकोपरि निधाय गयायां पितृ रूपेण स्वयमेव जनार्दनः त दृष्टवा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् इतिः सव्येन पूजयेत् ॐ वसन्ताय नमस्तुभ्यं ग्रीष्मायच नमो नमः॥ वर्षाभ्श्च शरत्संज्ञ ऋतवेच नमोनमः। हेमन्ताय नमस्तुभ्यं नमस्ते शिशिरायच। मास सम्वत्सरेभ्यश्चदिवसेभ्यो नमोनमः॥ इति वसन्तादिपड 'ऋतुभ्यो नमः पव' दक्षिणाद्रव्यणि आदाय पूजयेत्—हिरण्य गर्भ गर्भस्थं हेमवी• इतिरेय द्रव्यावनम'। ततः कुशादि

सहितं दक्षिणाद्रव्यं आदाय ॐ अद्यामुक गोत्राणा मस्मत्पितृपितामह प्रपितामहानाममुकामुकामुक शर्माणा यथा योग्य सपत्नीकानां वसु रुद्रा दित्य स्वरूपाणा तथ अमुक गोत्राणामसमन्मातामह प्रमातामह वृद्ध प्रमातामहानाममुकामुकामुक शर्माणा ( वा ) यथा योग्य सपत्नीकाना वरुण प्रजापति अग्नि स्वरूपाणा कृतैतत् अमुक तीर्थे पिण्डदान प्रतिष्ठाथ दक्षिणा द्रव्यं यथा नाम दैवत यथा नाम गोत्रायेत्यादि नाविश्वेदेव ब्राह्मणाय दद्यात्। पुन कुशादि सहित दक्षिणा द्रव्य आदाय ॐ अद्यामुक गोत्राणा मस्मत्पितृ पितामह प्रपितामहानाममुका मुका मुक शर्माणा ( वा ) यथायोग्य सपत्नी काना वसु रुद्रादित्य स्वरूपाणा। तथा द्वितीय गोत्राणा मस्मन्मातामह प्रमातामह वृद्ध प्रमाता महानाम मुका मुका मुक शर्माणा ( वा ] यथा योग्य सपत्नी काना वरुण प्रजापति अग्नि स्वरूपाणा तथा अन्येषामसमस्त पितृणा कृतैतत् अमुक तीर्थं श्राद्धे पिण्ड दान प्रतिष्ठार्थमिदं सुपूजितं हिरण्य यथानाम दैवत यथा नाम गोत्रेभ्य यथा यथा नाम शर्मभ्यि पितृ ब्राह्मणेभ्य यथा यथा भाग विभज्य दातु मह मुत्सृजे ॥ पुन भूयसी दक्षिणामादाय ॐ अद्यामुक गोत्राणामस्मत्पितृपितामह प्रपितामहानाम मुका मुका मुक शर्माणा ( वा ) यथायोग्य सपत्नीका ना वसुरुद्रादित्य स्वरूपाणा द्वितीय गोत्राणा अस्मन्मातामह प्रमातामह वृद्ध प्रमाता महानाम मुका मुका मुक शर्माणा ( वा ) यथा योग्य सपत्नीकाना वरुण प्रजापति अग्नि स्वरूपाणा अद्य कृतैतद् मुक-तीर्थं श्राद्ध सागता सिद्धये न्यूनाति रिक्तपूर्तये च अमुक द्रव्य ममुक दैवत ममुकामुकामुक गोत्रेभ्योऽमुका मुकामुकनाम शर्मभ्यो ब्राह्मणेभ्यो यथा भाग विभज्य यथा काले दातुमह मुत्सृजे इति ब्राह्मणेभ्यो दद्यात्। तत भूरि लोचन विश्वे देवा प्रीयन्ता मिति प्रणमेत्। अपसव्येन वाजे २ वत वाजिनो धनेषुविप्राऽमृता ऋतज्ञा अस्यमध्वा पिबमादयं तृप्ताय्यात पथिभिर्देव यानै। इति मन्त्रेणपितृन्विसृजेत ॥ सव्येन ॐ दृपताभ्य पितृभ्यश्च महायोगी-भ्ये च नम स्वाहायै स्वधायै नित्यमेव नमो नम। इति त्रिपठेत् अपसव्येन दीप आछाय। सव्यन हस्तौ पादौ प्रक्षाल्य चम्य इति पठेत्। ॐ यत्कृतम् तत्सुकृत मस्तु यन्न कृत तद्विष्णो प्रसादात् ब्राह्मणवचनात् परिपूर्णम् स्तु अस्तुमरि पूर्णम् इति ब्राह्मणा। ॐ प्रमादा कुर्वता कर्म प्रच्य वताध्वरेषु चस्मरणा त्वताद्विष्णो सम्पूर्ण स्यादिति श्रुति ॥ आयु पूजा धन विद्या स्वग मोक्ष सुखा निच प्रयच्छन्त तथा राज्य पितर — श्राद्ध तर्पिता ॥—॥ ततो वक्ष्यमान् आमह्मस्तम्ब पर्यन्त तर्पयेत् मानवा दीन्तिलोदकान्नलिभिस्तर्पयेत्—ॐ आमह्मस्तम्ब पर्यन्त देवर्षिपितृमानवा। तृप्यन्तु पितर स्तें मातृ माता महादय ॥ १ । पित

वशो मृतायेव मातृ व शे तथैवच । गुरुश्वसुर बन्धूना ये चान्ये बान्धवा स्मृता ।.२॥ ते तृप्ति मखिलायान्तु ये चास्मत्तोय काङ्क्षिण ये ऽबान्धवा बान्धवायेऽन्यजन्मनि बान्धवा ।३॥ तेसर्वेतृप्तिमायान्तुमद्दत्तेनाम्बुनाऽखिला ॥ देवासुरास्तथा यक्षानागागन्धर्वराक्षसा ॥४॥पिशाचागुह्यका सिद्धा कूष्माण्डास्तर व खगा ॥ जलेचराभूमि चरा वाय्वाहाराश्च जन्तव ॥५॥ ते तृप्तिमखिलायान्तुमद्दत्तेनाम्बुनाऽखिला नरकेषुसमस्तेषुयातनासुचयेस्थिता ॥ ६ ॥ तेषा माप्या यनायेतद्दीयते सलिल मया ॥ अतीत कुलकोटीना सप्तद्वीपनिवासि नाम् ॥ आब्रह्म भुवना, ल्लोकामिदमस्तु तिलो दकम् ॥ यत्र क्वचनसस्थानाक्षुत्तृष्णोपहतात्मनाम् ॥ इद मप्यक्षय मेवास्तु मया दत्त तिलो दकम् ॥ इतिमन्त्रेणतिल मिश्रित वारि धारा च दद्यात् । अथ वस्त्र निष्पीडन विधाय-एके चास्मत्कुले जाता अपुत्रा गोत्रिणो मृता । ते पिबन्तु मया दत्त वस्त्र निष्पीडनो दक मिति मन्त्रेण वजल भूमौ निक्षिपेत् ॥ तत सव्यं कृत्वा पूर्वाभि मुखो भूत्वा आचम्य जले ब्रह्मादि देवान् पूजयेत्॥—ॐ ब्रह्म यज्ञानम्प्रथम पुरस्ताद् द्विपी मत सु रुचोवेन ऽआव ॥ सबुध्न्या उपमाऽ अस्य विष्ठा शतश्च योनिम शतश्चविव ओं ब्रह्मणे नम आ इद विष्णुर्विचक्रमे त्रेधानिदधे पदम् ॥ समूढमस्य पा ᳪ सुरे स्वाहा ॥ ओं विष्णवे नम ॥ ॐ नमस्ते रुद्र मन्य वऽउतोतऽइषवे नम ॥ बाहुभ्या मुतते नम ॥ ओं रुद्राय नम ॥ ओं भूर्भुव स्व तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो योन प्रचोद यात् ॥ ओं मित्राय नम ॥ ओं वरुण स्योत्तम्भनासि वरुणस्य ऽऋतसदन मासीद ॥ ओं वरुणाय नम ॥ अथोत्थाय सूर्या यार्घ्यं दद्यात् ॥ अर्घपात्रे जलगन्धपुष्पादीनिनिक्षिप्य ॥ ओं एहि सूर्य सहस्राशोतेजो राशे जगत्पते ॥ अनुकम्पयमा भक्त्यागृहाणार्घ्यं दिवाकर इति मन्त्रेण अर्घ्यं दद्यात् ॥ तत उत्थायैव सूर्यो पस्थानम् । ओं अदृश्र मस्य केतवोविरश्मयोजनाँ ऽ अनु ॥ भ्राजन्तोऽ अग्नयो यथा ॥ उपयाम गृहीतोसि सूर्यायत्वाभ्राजायैषते योनि सूर्यायत्वा भ्राजाय ॥ सूर्यभ्राजिष्ट भ्राजिष्ट स्त्वन्देवेष्वसित्वम्मनुष्येषुभूयासम् ॥ ॐ हᳪस शुचिषद्वसुरन्तरिक्ष सद्धोता वेदि षदतिथि दुरोणसत् ॥ नृषद्वर सदृत सद् व्योम सदब्जा गोजा ऋतजा ऽ अद्रिजाऽऋतम्बृहत् इति मन्त्राभ्या सूर्य मुपस्थाय प्रदक्षिणी कृत्यदिग्भ्यो दिग्देवेभ्यश्च प्रणमेत् । ओंप्राच्यै दिशानम । ओं इन्द्रायनम । ओं आग्नेय्यै दिशे नम । ओंअग्नये नम । ओंदक्षिणस्यैदिशे नम ओं यमाय । ओं नैऋत्यैदिशे नम ओं निऋतये नम । ओं

प्रतीच्यैदिशे नम वरुणाय नम ॥ ओं वायव्यै दिशे नम ओं वायव्ये नम ॥ ओं उदीच्यै दिशे नम ओं कुबेराय नम ॥ ओं ईशान्यैदिशे नम ओं ईशानाय नम ॥ ओं ऊर्ध्वायैदिशेनम — ओं ब्रह्मणे नम ॥ ॐ अधोदिशे नम अनन्ताय नम ॥ तत उपविश्य प्रणमेत् ॥ ओं ब्रह्मणे नम । ओं अग्नये नम ओं पृथिव्यै नम । ओं ओषधिभ्यो नम । ओं वाचे नम । ओं वाचस्पतये नम । ओं विष्णवे नम । ओं महद्भ्यो नम । ओं अद्भ्यो नम । ओं अपाम्पतये नम । ओं वरुणाय नम । ओं सम्वर्चसाप यसा सन्तनु भिरगन्महि मनसा स ७ शिवेन ॥ त्वष्टा सु दत्रो विदधातु रायो नुमार्ष्टु तन्वो यद्विलिष्टम् ॥ इति मन्त्रेण सजल कर द्वयेन मुख विमृश्य । तच्चक्षुरिति मन्त्रेण चक्षु स्पर्श कुर्यात् ॥ ओं तच्चक्षु र्देवहितम्पुरस्ताच्छुक्र मुच्चरत् । पश्येम शरद शतञ्जीवेम शरद शत ७ शृणु याम शरद शत प्रब्रवाम शरद शतमदीना स्याम शरद शतम्भूयश्च शरद शतात् ॥ इति मन्त्रेण नामिकाङ्गुष्ठाभ्या जल स्पृष्ट्वा, चक्षु स्पर्श विदधीत । तत ॐ देवागातु विदो गातु त्वित्वागातुमित ॥ मनसस्पतइमन्देवयज्ञ ७ स्वाहा वातेधा इति मन्त्रेण पितॄन विसृज्य कायेन वाचेति मन्त्रेणेश्वरार्पण कुर्यात्- कायेन वाचा मनसेन्द्रियैर्वाबुध्यात्मनावा प्रकृति स्वभावात् ॥ करोमि यद्यत् सकल परस्मै नारायणाय यति समर्पयेति ११ कमपात्रस्य कुशान्कि भूभावुत् स्मृनत् ॥ यस्यस्मृत्या च नामोक्त्या तपोयज्ञ क्रियादिषु । न्यून सम्पूर्ण ता याति सद्योवन्दे तमच्युतम् ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्या पञ्चभिरेव च हूयते च पुनर्द्वाभ्या ससेविष्णु प्रसीदतु इति पठेत् तत गन्धाक्षत पुष्पाण्यादाय वक्ष्य माणमन्त्रा पठित्वा गन्धादिभि यजमानस्यतिलकं कुर्यु ॥ वैदिक मन्त्रा ओं शतमिन्नु शरदोऽअन्तिदेवा यत्रा न श्चक्रा जरसन्तनू नाम ॥ पुत्रासोयत्र पितरो भवन्ति मानोमध्यारी रिषतायुर्गन्तो ॥ १ ॥ अदिति र्द्यौरदिति रन्त रिक्ष मदितिर्माता सपिता सपुत्र ॥ विश्वेदेवाऽअदिति पञ्च जना ऽअदिति र्जात मदितिर्जनित्वम् ॥ स्वादु ष ७ सद पितरोवयोधा कृच्छ्रे श्रित शक्ती वन्तोगभीरा । चित्र सनाऽइषुबला ऽअमृध्रा सतो वीरा उरवो व्रात साहा ॥ ३ । ब्राह्मणास पितर सोम्या स शिवनोद्या वा पृथिवी अनेहसा ॥ पूषा न पातुदुरिता दृता वृधो रक्षा माकिर्नोऽअघशᳪसऽईशत ॥ ४ ॥ पितृभ्य स्वधा यिभ्य स्वधानम पितामहेभ्य स्वधायिभ्य स्वधानम । प्रपितामहेभ्य स्वधायिभ्य स्वधानम । अक्षन्न पितरो मामदन्त पितरोवी

तृपन्त पितरः पितरः शुन्धध्वम् ॥ ५ ॥ पुनन्तुमा पितरः सोम्यासः पुनन्तुमा पितामहा पुनन्तु प्रपिता महा ॥ पवित्रेण शता युपा। पुनन्तुमा पिता महाः पुनन्तु प्रपिता महाः । पवित्रेण शतायुपाविश्च म् आयुर्घ्यं श्नवै ॥ ६ ॥ ततो यजमानो गृहीत तिलको ब्राह्मण पादान् प्रक्षाल्य पादोदकं गृहीत्वा ॥ तान्ब्राह्मणान् पायसादिभि र्भोजयित्वा तेभ्यो लब्ध्याभ्यनुज्ञः सपरिवार स्वयं मपि भुञ्जीतः ॥ तत् ॥ श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् तद् भावे जलेवानिक्षिपेत्: इति सगुहितम् ॥ प्रा० धेनु' अ० द्रष्टव्य ।

## अथ पितृसूक्तम् ॥

ॐमधुमधु मधु ॐमधुव्राताऋताय वै मधु चरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ मधुनक्त मुत्तोपसो मृधु मत्पार्थिव छं रज मधुद्यौ रस्तुनः पिता ॥ २ ॥ माधुमान्नोवनस्पतिर्मधुमाँ ॥ २ ॥ ऽअस्तु सूर्यः माध्वीर्गावो भवन्तुनः ॥ ३ ॥ ॐ अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृ मते स्वाहा अपहृता असुरक्षा छं सि वेदि पदः ॥ ४ ॥ ये रूपाणि प्रति मुञ्चमाना । असुराः सन्तस्वधया चरन्ति परा पुरोये भरन्त्यग्निष्टौ ल्लोकात्प्रणुदात्यस्मात् ॥ ५ ॥ अत्र पितरो मादयध्वम् । यथाभागमा वृषायध्वम् । अमीमदन्त पितरो यथा भागमा वृषायिषत् ॥ ६ ॥ ॐ नमोवः पितरोरसाय नमोवः पितर शोषाय नमोवः पितरोजीवाय— नमोवः पितरः स्वधायै नमोवः पितरो घोराय नमोवः पितरो मन्यवे, पितर पितरो, ननोवो गृहान्नः पितरो दत्त सतोवः पितरो देष्मै तद्वः पितरोवास आधत्त ॥ ७ ॥ आधत्त पितरो गर्भं कुमारं पुष्कर स्रजम् । यथेह पुरुषोऽसत् ॥ ८ ॥ उर्ज्ज वहन्तीर मृतं घृतं पयः कीलालं परिश्रुतम् स्वधास्थतर्पयतमे पितृन्॥९॥ ॐ पितृभ्यः स्वधायिभ्य, स्वधानमः पितामहेभ्यः स्वधायिभ्य, स्वधानमः अक्षन्न पितरोऽमीमदन्त पितरोऽती तृपन्त पितरः पितरःशुन्धद्ध्वम् ॥१०॥ पुनन्तु मा पितरः सोम्यासः पुनन्तु माँ पिता महाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषाः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहा पवित्रेण शतायुपाविश्वं आयुर्व्यश्नवै ॥ ११ ॥ अग्न आयूछंपि पवसःऽआसु वोर्ज्ज धिय षनः आरे बाधस्व दुच्छुनाम् ॥ १२ ॥ पुनन्तु माँ देव जनाः पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जाव वेदः पुनीहिमा ॥ १३ ॥ पवित्रेण पुनी हिमा शुक्रेण देव दीद्यत् अग्ने क्त्वा क्तूँ १ रस्तु यशो पवित्र मचिष्यन्ने वितत मन्तरा ब्रह्मतेन पुनातु मा ॥ १४ ॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः

यः पोता मपुनातुमा ॥ १६ ॥ उभाभ्यांदेव सवितः पवित्रेण त च मां पुनीहिविश्वतः ॥ १७ ॥
वैश्व देवी पुनती देव्यागा धस्यामिमा बहुयः स्तन्वोवपृष्टाः । तया मदन्त सधमा देपुवय ७ स्याम पतयोरयीणाम् ।१८॥ ये समानाःसमनसः पितरो यमराज्ये तेषां ल्लोकः स्वधानमो यज्ञो देवेषु कल्पताम् ॥ १९ ॥ ये समाना समनसो जीवा जीवेषु मामकाः तेषा ७ श्रीर्मयि कल्पता मस्मिल्लोके शत ७ समाः ॥ २० ॥ द्वेसृती अशृणवं पितृणामह देवाना मुतमर्त्यानाम् ताभ्यामिदंविश्व मेजत्समेतिय पितरं मातरञ्च ॥ २१ ॥ इद ७ हविः प्रजननं मे अस्तु दश वीर ७ सर्व गण ७ स्वस्तये आत्म सनि । प्रजासनि पशु सनि लोक सन्य भयसनि । अग्निः प्रजां बहुलां मे करोत्वन्न पयोरेतो अस्मा सुधत्त ॥ २२ ॥ उदीरता मवर उत्परास उन्मध्यमाः पितरः सोम्यासः असुप ईयुर वृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥ २३ ॥ अङ्गिरसोनः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः तेषांवय ७ सुमतौ यज्ञियाना मपि भद्रे सौमनसे स्याम ॥ २४ ॥ ये नः पूर्वे पितरः सोम्यासोऽनू हिरे सोमपी थं वसिष्ठाः तेभिर्यमः सऽरराणो हवी ७ष्यु शन्नु शद्भिः प्रति काममत्तु ॥ २५ ॥ त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठ मनुनेषि पन्थाम तव प्रणीती पितरो न इन्दो: देवेषु रत्न मभ जन्त धीरा ॥ २६ ॥ त्वयाहि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ॥ वन्वन्न वातः परिधीं१ऽरपोर्णु वीरेभि रश्वै मघवा भवानः ॥ २७ त्वं सोम पितृभिः संविदानोऽनुद्यावा पृथिवीः आततन्थ ॥ तस्मै त इन्द्रो हविषा विधेम वय ७ स्याम पतयो रयीणाम् ॥ २८ ॥ बर्हिषदः पितरऽऊत्यर्वागिमा वोहव्या च कृमा जुषध्वम् ॥ त आगता वसा सन्त मेना थानः शंयोररपोदधात ॥ २९ ॥ आहं पितॄन्त्सुविदत्रां ॥ २ ॥ अविस्सेन पात च विक्रमणञ्च विष्णो बर्हिषदोये स्वधया सुतस्य भजन्त पित्वस्त इहा गमिष्ठा ॥ ३० ॥ उपहूताः पितरः सोमासो बर्हिष्येषु निधिषु प्रियेषु ॥ त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्व स्मान् ॥ ३१ ॥ आयान्तुनः पितरः सोम्यासो ऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तुतेऽवन्त्वस्मान् ॥ ३२ ॥ अग्निष्वात्ता पितर एह गच्छत सदः सदः सदतसु प्रणातयः अत्ताहवींषिप्रयतानिबर्हिष्यथारयि ७ सर्व वीरं दधातना ॥ ३३ ॥ ये अग्निष्वाता ये अनग्निष्वाता मध्ये दिवः स्वधयामादयन्ते तेभ्यः स्वराड सुनीतिमेतायथा वशन्तन्वंकल्पयाति ॥३४॥ अग्निष्वात्तानृतुव तोसहामहे नाराशं७ से सोमपी थं य आशुः । तेनो विप्रासः सुहवा भवन्तु वयं७ स्याम पतयो रयीणाम् ॥ ३५ ॥ आच्या जानु दक्षिणतो

निषद्येर्म यज्ञ मभिः गृणीत विश्वे माहिंध सिष्ठ पितरः केन चिन्नो यद्व आगः पुरुषता करांम ॥ ३६ ॥ आसीनासो अरुणीना मुपस्थे रयीं धत्त दाशुषे मर्त्याय पुत्रेभ्यः पितरस्तस्य वस्वः ॥ प्रयच्छतत इहोर्जंदधात ॥३७॥ यमग्ने कव्य वाहनत्वचिन्मन्यसे । रयिम् तन्नोगीर्भिः श्रवाय्यं देवत्रा पनयायुजम् ॥ ३८ ॥ यो अग्निः कव्य वाहनः पितृ न्यक्षदृता वृधः प्रेदुहव्यानि वो चति देवेभ्यश्चपितृभ्य आ ॥ ३६ ॥ त्वमग्न ईडितः कव्य वाहना वाहढव्यानि सुरभीणि कृत्वाप्रादाः पितृभ्यः स्वधयाते अक्षन्नद्धित्वं देव प्रयता हवीऽंषि ॥ ४० ॥ ये चेह पितरो ये च नेह याँश्च विद्मयाँ ॥ २ ॥ स्त्वन प्रविद्म त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञंध सुकृतंजुषष्व ॥ ४१ । इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासोय उपरास ईयुः ये पार्थिवे रजस्या निषत्ता ये वानूनंध सु वृजि ना सु विक्षु ॥ ४२ ॥ अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋत माशुषाणाः शुचीदयन्दी धिति मुक्थ शासु क्षामाभिदन्तो अरुणीरपव्रन् ॥ ४३ ॥ उशन्तस्त्वा निधीमह्यु शन्तः समिधी महि । उशन्नुशत आवह पितृन् हविषे अत्तवे ॥ ४४ ॥ ग्रीन्समुद्रा न्समसृप स्स्वर्गा नपां पतिं वृषभ इष्टका नाम् ॥ पुरीषंव्वसानः सुक्र तस्य लोके तत्र गच्छत यत्र पूर्वेपरेताः ॥४५॥ आप्या यस्वसेम तुते विश्वतः सोमविष्ण्यम् भवा वाजस्य सङ्गथे ॥ ४६ ॥ सन्ते पया ॐ सि समुयन्तु वाजाः सं वृष्ण्या न्यभि मातिषाहः आप्याय मानो अमृताय सोम दिविश्रवा ँ स्युत्तमानिधिष्वः ॥ ४७ ॥ अग्नि प्रियेषुधाम सु कामोभूतस्यभव्यस्यं सम्राडेको विराजति ॥ ४८ ॥ ओं तत्सत् ॥ इतियजुर्वेदे पितृ सूक्तम् ॥

## अथ हेमाद्रौ मार्कण्डेय पुराणे रुचिस्तवः ॥

रुचिरु वाच—नमस्येऽहं तीर्थं स्च्छाद्धे येव सन्त्यधि देवताः । देवै रपिहि तर्प्यन्ते येच श्राद्धे स्वधोत्तरैः ॥ १ ॥ नमस्येऽहं पितृन्स्वर्गे ये तर्प्यन्ति महर्षिभिः । श्राद्धैर्मनोमयैर्भक्त्याभुक्ति :मुक्ति मभीप्सुभिः ॥ २ ॥ नमस्येऽहं पितृन्स्वर्गे सिद्धाः संतर्पयन्ति यान् । श्राद्धेषु दिव्यैः सकलै रूप हारै रत्युत्तमैः ॥ ३ ॥ नमस्येऽहं पितृ न्भक्त्यायेऽर्च्यन्ते गुह्यकैरपि । तन्मयत्वेन वाञ्छद्भि र्ऋद्धि मात्यन्ति कीं पराम् । नमस्येऽहं पितृ न्मर्त्यैः रर्च्यन्ते भुवि ये सदा, श्राद्धेषु श्रद्धयाभिष्ट लोक प्राप्ति प्रदायिनः ॥ ५ ॥ नमस्येऽहं पितृन्विप्रैरर्च्यन्तेभुवि ये सदा वाञ्छिताभीष्ट लाभाय प्राजा

प्रत्यमद्दायिनः ॥ ६ ॥ नमस्येऽहं पितृन्ये वै तर्प्यन्तेऽरण्य वासिभिः। वन्यैः श्राद्धैर्यता हारैस्तपो निर्धूत किल्विषैः ॥ ७ ॥ नमस्येऽहं पितृन्विप्रै नैष्ठिकं ब्रह्म चारिभिः ये सं संयतात्मभिर्नित्यम् सं तर्प्यन्ते समाधिभि ८ ॥ नमस्येऽहं पितृञ्छ्राद्धे राजन्या स्तर्पयन्ति यान् कव्यैर शेषैर्विधिव ल्लोक त्रय फल प्रदान् ॥ ६ ॥ नमस्येऽहं पितृन्वैश्यै स्तर्प्यन्ते भुवि ये सदा स्वकर्माभिरतै र्नित्यं पुष्प धूपान्न वारिभिः ॥ १० ॥ नमस्येऽहं पितृञ्छ्राद्धे ये शूद्रै रपि भक्तितः सन्तर्प्यन्ते जगत्यत्र नाम्ना ज्ञाताः सु कालिनः ॥११॥ नमस्येऽहं पितृञ्छ्राद्धैः पाताले ये महा सुरैः सन्तर्प्यन्ते स्वधा हारास्त्यक्त दम्भ मदैः सदा ॥ १२ ॥ नमस्येऽहं पितृञ्छ्राद्धै रर्च्यन्तेये रसातले । भोगैर शेषैर्विधि वन्नागैः कामा नभीप्सुभिः ॥ १३ ॥ न मस्येऽहं पितृञ्छ्राद्धैः सर्पैः सन्त पितान्सदा । तत्रैव विधि वन्मत्र भोग संपत् समन्वितैः ॥ १४ ॥ पितृन्नमस्येनिवसन्ति साक्षात् ये देव लोके च तथान्तरिक्षे ॥ महीतले ये च सुरादि पूज्याः तेमेप्रयच्छन्तु मयोपनीतम् ॥ १५ ॥ पितृन्नमस्ये परमात्म भूता ये वै विमाने निवसन्ति मूर्ताः । यजन्ति यानस्तमलैर्मनोभिर्योगिश्वराः क्लेश विमुक्ति हेतुम् ॥ १६ ॥ पितृन्नमस्ये दिवि ये च मूर्ताः ॥ स्वधा भुजः काम्य फलाभि सन्धौ ॥ प्रदान शक्ताः सकलेप्सितानां वि मुक्ति दायेऽनभि सहितेषु ॥ १७ ॥ तृप्यन्तुतेऽस्मिन्पितरः समस्ता इच्छावतां ये प्रदिशन्ति कामान् ॥ सुरत्वमिन्द्रत्वमतोऽधिकं वा, सुतान्पशू न्स्वानिबल गृहाणि ॥ १८ ॥ सोमस्यये रश्मिषुयेऽर्क बिम्बे, शुक्ले विमानेच सदा वसन्ति ॥ तृप्यन्तु तेऽस्मिन्पितरोऽन्न तोयैर्गन्धादिनापुष्टि मितोव्रजन्तु ॥ १६ ॥ येषां हुतेऽग्नौहविषा च तृप्तिः ये भुञ्जते विप्र शरीरभाजः ये पिण्ड दानेन मुदं प्रयान्ति तृप्यन्तु तेऽस्मिन्पितरोन्नतोयैः ॥ २० ॥ ये खड्गिमांसेनसुरैरभीष्टैः कृष्णैस्तिलैर्दिव्यमनो हरैश्च । कालेन शाकेन महर्षिवर्यैः संप्रीणि तास्तेमुद मत्रायान्तु ॥ २१ ॥ कव्यान्य शेषाणि चयान्यभीष्टा न्यतीव तेषा ममराचितानाम् । तेषान्तु सानिध्य मिहास्तुपुष्प,गन्धाम्बुभोज्येषुमयार्पितेषु॥२२॥दिने दिनेयेप्रतिगृह्णतेऽर्चाम् । मासान्त पूज्या भुवयेऽष्टकासु, येवत्सरान्तेऽभ्युदये च पूज्या प्रयान्तु ते मे पितरोत्र तृप्तिम् ॥ २३ ॥ पूज्या द्विजाना कुमुदेन्दुभासो ये क्षत्रियाणाञ्च नवार्क वर्णाः । तथा विशांये कनका वदाता नीलीनिभा शूद्र जनस्य येच ॥ २४ ॥ तेऽस्मिन्समस्ता मम पुष्प गन्ध, धूपान्न तोयादि निवेदनेन, तथाग्नि होमेनचयान्तु तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्य ॥ २५ ॥ ये देव पूर्वाण्यति तृप्ति हेतोरश्नन्ति कव्यानि शुभाहृतानि, तृप्ता श्चये भूति सृतो भवन्ति तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मि तेभ्यः ॥ २६ ॥ रक्षांसि भूतान्य सुरांस्तथोग्रान् निर्णाश यन्तस्त शिवं

प्रजानाम् ।आद्याःसुराणाममरेशपूज्यास्तृप्यन्तुतेऽस्मिन्प्रणतोऽस्मितेभ्य॥२७॥ अग्निष्वात्ता बर्हि षदः आज्यपाः, सोमपास्तथा। ब्रजन्तु तृप्तिं श्राद्धे-ऽस्मिन् पितर स्तर्पिता मया॥ २८॥ अग्निष्वाताः पितृ गणाः प्राची रक्षन्तु मे दिशम्। तथा बर्हि षदः पान्तु याम्यां ये पितरस्तथा॥ २६॥ प्रतीची माज्यपा स्तद्व दुदीची मपि सोमपाः ऊर्ध्वंत स्त्वर्यमा रक्षेत्कव्य वाडनलोऽप्यधः॥३०॥विश्वे देवाश्चयः पान्तुऊर्ध्वं पान्तुमरुद्गणाः ।रक्षो भूत पिशाचेभ्यस्तथैवा सुर दोषतः। सर्वतश्चाधिप स्तेषां यमो रक्षां करो तु मे। ३१॥ विश्वा विश्व भुगाराध्यो धर्मो धन्यः शुभा ननः। भूतिदो भूति कृद्भीतः पितृणां ये गणा नव॥ ३२॥ कल्याणः कल्पदः कर्ता कल्पः कल्पतरा श्रयः कल्पना हेतु रनघाः षट्मिमे ते गणा स्मृताः॥ ३३॥ वरो वरेण्यो वरदः पुष्टिद् स्तुष्टिद् स्तथा। विश्व पाता तथा धाता सप्तैवैते तथा गणाः॥ ३४॥ महान्महात्मा महितोमहिमः वान् महाबलः। गणाः पञ्च तथैवैते पितृणां पाप नाशनाः॥ ३५॥ सुखदो धनदश्चान्यो धर्म दोऽन्यश्चभूतिदः। पितृणां कथ्यते चैत तथा गण चतुष्टयम्॥ ३६॥ एक त्रिंशत्पितृगणा यैर्व्याप्त मखिलं जगत्। तेमेऽत्र तृप्तापितरःस्तुष्यन्तु च सदा हितम्॥३७॥ स्तोत्रेणाने नच नरो योऽस्माँ स्तोष्यति भक्तितः तस्य तुष्टा वय भोगान्दास्यामो ज्ञानमुत्तमम्॥ ३८॥ तस्मा देत्त त्वया श्राद्धे विप्राणां भुञ्जतां पुरः श्रावणीय महा-भाग अस्माकं तृप्ति कारकम्॥ ३६॥ इतिरुचिस्तवः॥

## अथ रक्षोघ्नीऋचंपठेत्॥

ॐ कृणुष्व पाजः प्रसितिं न पृथ्वीं याही रोजेवामवां इभेन॥ त्रिष्वी मनु प्रसितिं द्रुणानोस्तासि विध्यरक्षसस्त पिष्टैः॥ १॥ तव भ्रमास आशु या पतन्त्य नुस्पृशधृषता शोशु चानः॥ तपूंष्यग्ने जुह्वा पतङ्गा न सन्दितो विसृज विष्व गुल्काः॥ २॥ प्रतिस्पशो विसृज तूर्णि तमो भवा पायुर्विशो अस्या अदब्धः। योनो दूरेऽअघश १० सोयो-ऽअन्त्यग्ने माकिष्टेव्ययथिरा दधर्षीत्॥ ३॥ उदग्ने तिष्ठ प्रत्याते नुष्वन्य मित्रा ओपतात्तिग्म हेते॥ यो नो अराति १० समिधान चक्रेन नीचा तंधक्ष्यतस तन्न शुष्कम्॥ ४॥ ऊर्ध्वो भव प्रतिविध्याध्य स्मदा विष्कृ-णुष्व दैव्यान्यग्ने॥ अवस्थिरा तनु हियांतु जूनां जामिमजा मिप्रमृणी द्वि शत्रून्॥ अग्नेष्ट्वा तेजसा सादयामि॥ इति रक्षोघ्नी ऋचम्।

गर्गः—कृष्णे भाद्रपदे मासि श्राद्धं प्रति दिनं भवेत्। पितृणां प्रत्यहं कार्यंनिषिद्धा हेऽपि तर्पणम् ॥

## अथ तर्पण प्रयोगः ॥

आचम्य प्राणा नायम्य कुश पवित्र धारणाम्—( दक्षिणहस्तस्या नामिक यां—ॐ पवित्त्रे स्थो वैष्णव्य यौसवितुर्व्वः प्रसवऽउत्पुनाम्य छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥तस्य ते पवित्त्रपतेपवित्त्रपूतस्य यत्कामंःपुने तच्छकेयम् ॥ १ ॥ मन्त्रेण धारयेत्, सल्पः ॐ विष्णवे नमः—अद्यपूर्वोचारित एवं गुण विशेषण विशिष्टायां शुभ पुण्य तिथौ ममाऽस्मनः श्रुतिस्मृति पुराणोक्त फल प्राप्त्यर्थं देव ऋषि मनुष्य पितृ तर्पणा महं करिष्ये ॥ आम्र पात्रे रौप्य पात्रे वा तर्पणार्थे उदक पूरणम्—( एतत्पात्रे प्रथम श्वेतगन्ध यवान्ऽतदभावेतण्डुलान् ) सुगन्ध पुष्पाणि तुलसी दल सहितानिनिदध्यात् तदन्तर तत्पात्रे परि हस्त प्रमाणान प्रादेश प्रमाणान् वाग्रीन कुशान् प्राग्मान् स्थापयित्वा पश्चान्मन्त्रेण तत्पात्रं जलेन [पूरयेत् ॥)—ॐ विश्वान्देवान् भवन्तु ( केपाश्चिन्मन्त्रैः श्राद्ध कर्माणि कुर्यात् नतु तर्पणे । ) आवाहयिष्ये ॐ आवाहय ॥ ॐ विश्वेदेवासऽआगत शृणुतामऽइमᳬ हवम् । एदम्वर्हिर्निषीदत ॥ २ ॥ व्विश्वेदेवाः । शृणुतेम ᳬ हवम्मे येऽअग्निरिन्ते यऽउपद्यविष्ठ । येऽअग्नि जिह्वाऽउत वा यजत्राऽआसद्यास्मिन्नवर्हिषि मादयध्वम् ॥ ३ ॥ ततो देवानामा वाहनम्—( पूर्व पात्रे परिस्थापित त्रीन्कुशान् तुलशीदल संयुक्तानदक्षिण कर सम्पुटे धृत्वा तदनन्तरं तस्योपरि वाम हस्त मयो मुखं कृत्वा पश्चा द्देवाना वाहयेत् ॥) आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ये तर्पणेऽत्र विहिताः सावधाना भवन्तुते ॥ ३ ॥ ॐ भवामः ॥ देव तर्पणम्—ॐ ब्रह्मास्तृप्यताम् । ओं विष्णुस्तृप्यताम् । ओं रुद्रस्तृप्यन्ताम् । ओं प्रजापतिस्तृप्यताम् । ओं देवास्तृप्यन्ताम् । ओं छन्दाᳬसि स्तृप्यन्ताम् । ओं वेदास्तृप्यन्ताम् । ओं ऋषयस्तृप्यन्ताम् । ॐ पुराणाचार्यास्तृप्यन्ताम् । ॐ गन्धर्वास्तृप्यन्ताम् । ॐ इतरा चार्यास्तृप्यन्ताम् । ॐ सम्वत्सरः सावयवस्तृप्यन्ताम्, ॐ देव्य स्तृप्यन्ताम् ॐ अप्सरसस्तृप्यन्ताम् । ॐ देवानुगास्तृप्यन्ताम् । ॐ नागा स्तृप्यन्ताम् । ओं सागरास्तृप्यन्ताम् । ॐ पर्वतास्तृप्यन्ताम् । ॐ सरितस्तृप्यन्ताम् ॐ मनुष्यास्तृप्यन्ताम् । ॐ यक्षास्तृप्यन्ताम् । ॐ रक्षाᳬसिस्तृप्यन्ताम् । ॐ पिशाचास्तृप्यन्ताम् । ॐ सुपर्णास्तृप्यन्ताम् । ॐ

भूतानिस्तृप्यन्ताम् । ॐ पशवस्तृप्यन्ताम् । ॐ वनस्पतयस्तृप्यन्ताम् । ओं ओषधयस्तृप्यन्ताम् । ओं ओषधयस्तृप्यन्ताम् । ओं भूतग्रामश्चतुर्विधस्तृप्यन्ताम् । ( तैः कुशैः ) अग्रागैः पूर्वाभिमुखो दक्षिण हस्तस्य सर्वाङ्गुल्यग्रै देवतीर्थेनान्य पात्रे एकैकाञ्जलिं क्षिपेत् ।। ) ओं तीर्थानि तृप्यन्ताम् । ॐ तीर्थ देवास्तृप्यन्ताम् । ॐ विश्वेदेवास्तृप्यन्ताम् । ॐ मोदास्तृप्यन्ताम् । ॐ प्रमोदास्तृप्यन्ताम् ॐ सुमुखास्तृप्यन्ताम् ; ॐ दुर्मुखास्तृप्यन्ताम् । ॐ अविघ्नास्तृप्यन्ताम् । ॐ विघ्न कर्तारस्तृप्यन्ताम् ।। मालाकारे यज्ञोपवीत विधाय– मनुष्यदेव तर्पणम् ।( ततो निवीतं कृत्वा पूर्वोक्त कुशानुदगग्रान्दक्षिणा हस्तस्य कनिष्ठका मूल प्रदेशेधृत्वा पश्चादुत्तराभिमुखं मनुष्य देवेभ्यो द्वौ द्वावञ्जली कायतीर्थेन देयौ ।। ) यथाॐ—सनकस्तृप्यतु । ॐ सन० ।। ॐ सनन्दनस्तृप्यतु । ॐ सनन्दन० ।। ॐ सनातनस्तृप्यतु । ॐ सना० ।। ॐ कपिलस्तृप्यतु । ॐ कपि० ।। ॐ आसुरिस्तृप्यतु । आसु० ।। ॐ वोढुस्तृप्यतु । ॐ वोढु० ।। ॐ पञ्चशिखस्तृप्यतु । ओं पञ्च० ।। पितृ तर्पणम्—: पूर्वोक्त कुशान्द्विगुणान्दक्षिणाग्र मूलान् द्विगुणी कृत्वाङ्गुष्ठ तर्जनी मध्य प्रदेशे ( दक्षिण हस्तस्य ) धृत्वा दक्षिणाभिमुखं पूर्वमन्त्रित् पात्र जले अपसव्येन कृष्णतिल मिश्रणं तेन जलेनाद्या सव्येन पितृतीर्थेन पितृ स्त्रीं स्त्रीनञ्जलीन् दद्यात् । ) यथा—ॐ कव्यवाडनलस्तृप्यताम् । ॐ कव्यवा०ॐ क०ॐ सोमस्तृप्यातम् ।।३।। ॐ यमस्तृप्यताम् ।। ३ ।। ॐ अर्यमास्तृप्यताम् । ३ ।। ओं अग्निष्वात्ताः पितरस्तृप्यताम् । ३ ।। ओं बर्हिषदःपितरस्तृप्यताम् । ३ ।। यमतर्पणम् ।।— ( यमांश्चैकैकं स्त्रींनञ्जलीन्दद्यादित्याहुः । ) यथा—ओं यमायनमः । ओं यमाय० ओंयमाय०। ओं धर्मराजायनमः ।।३।। ओंमृत्यवेनमः ।।३।। ओं अन्तकाय नमः । ३ ।। ओं वैवस्वताय नमः । ३ ।। ओं कालायनमः । ३ ।। ओं सर्वभूत क्षयायनमः । ३ ।। ओं औदुम्बरायनमः । ३ ।। ओं दध्नाय नमः । ३ ।। ॐ नीलायनमः । ३ ।। ओं परमेष्ठिने नमः । ३ ।।—ओं वृकोदरायनः । ३ ।। ओं चित्राय नमः । ओं चित्रगुप्ताय नमः । ३ ।। मनुष्य पितृतर्पणम्— ( स्वस्व पितृणां गोत्र नामो च्चारं कृत्वा पितृतीर्थेन प्रत्येकंत्रीं स्त्रीनञ्जलीन्दद्यात् ।। ) उशन्तस्त्वेत्या वाहनम्—ओं उशन्तस्त्वा । निधी मह्युशन्तऽसमिधी महि । उशन्नु शतऽआवह पितृन्हविषेऽअत्तवे ।। ४ ।। नमस्तपितृना वाहयित्वे—ओं आवाहय-(तर्पणेषु प्रथमा विभक्त्यन्त पद योजयेत् ।। ) यथा ओं उदीरता मवरऽ उत्परासऽउन्मध्यमाः पितरःसोम्यास । असुन्यऽईयुरवृकाऽ ऋत ज्ञास्ते नो वन्तु पितरो हवेषु ।। २ ।। ओं अयेहा मङ्गीरसोऽस्सलिनाऽ

मुकशर्मा ( वा ) वसु स्वरूप स्तृप्यता मिद तिलोदक तस्मैस्वधा ॥
प्रथमाञ्जलिम् ॥ अङ्गिरसोन । पितरो नवग्वाऽअथर्वाणोभृगवऽ
सोम्यास – ॥ तेषाञ्वय ७ सुमतौ यज्ञियानामपिभद्रे सौमनस
स्याम ॥ ६ ॥ ओं अद्येहामुक गोत्रोऽस्मत्पिताऽमुक शर्मा वसु स्वरूप
स्तृप्यतामिद तिलोदक तस्मैस्वधा । इतिद्वितीयाञ्जलीम् ॥ ओं आयन्तु ।
नऽ पितर–सोम्यासोग्निष्वात्ताऽ पथिभिर्देवयानैऽ । अस्मिन्न्यज्ञेस्व
धयामदन्त्वोधिब्रुवन्तुतेन्त्वस्मान् ॥७॥ ओं अद्येहामुकगोत्राऽस्मत्पितामुक
शर्मावसु स्वरूपस्तृप्यता मिद विलोदक तस्मैस्वधा ॥ इति त्रितियाञ्जलि
पित्रे दद्यात् ॥ ओं ऊर्ज्जं वहन्ती रमृतङ्घृतम्पय– कीलालम्परिस्रुतम् ।
स्वधास्थ तर्प्पयत मेपितॄन् ॥ ८ ॥ ओं अद्येहामुक गोत्रोऽस्मत्पितामहोऽ
मुक शर्मा ( वा ) रुद्र स्वरूप स्तृप्यता मिद विलोदकं तस्मैस्वधा ॥ इति
प्रथम । पितृभ्य–स्वधायिभ्य । स्वधा नम– पितामहेभ्य–स्वधा
यिभ्य–स्वधा नम –प्रपितामहेभ्य–स्वधायिभ्यस्स्वधानम– । अक्षन्पितरो
मीमदन्त पितरोता तृपन्तपितरऽ पितरऽ शुन्धध्वम् ॥ ६ ॥ ओं अद्येहाऽमुक
गोत्रोऽस्मत्पिता महोऽमुक शर्मारुद्र स्वरूपस्तृ० ॥ इति द्वितीया
ञ्जलीम् ॥ ओं ये चेह पितरो येच नेह यॉश्चविद्मयॉ२ उ च न
प्रविद्म । त्वंवेत्थ यतित जातवेदऽ स्वधाभिर्य्यज्ञथसुकृतञ्जुषस्व १० ॥
ओं अद्येहाऽमुक गोत्रोऽस्मत्पितामहोऽमुक शर्मारुद्र स्वरूपस्तृ० । इतित्रि
तीयपितामहाय,दद्यात् ओं मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धव ।
माध्वीर्न्नऽ सन्त्वोषधीऽ । ओं अद्येहामुक गोत्रोऽस्मत्प्रपितामहोऽमुकशर्मा
( वा आदित्य स्वरूपस्तृप्य मिद तिलोदक तस्मैस्वधा । इति प्रथमाञ्ज
लिम् ) ॥ ॐ मधुनक्त मुतो षसो मधु मत्पार्थिव ७ रज– । मधु द्यौ
रस्तु न ऽ पिता ॥ १२ ॥ ॐ अद्येहा मुक गोत्रो ऽ स्मत्प्रपिता
महोऽमुक शर्मा आदित्य स्वरूपस्तृ० ॥ इति–द्वितीयाञ्जलिम् ॥
ॐ मधु मान्नो व्वनस्पतिर्म्मधुमा २ ॥ ऽअस्तु सूर्य्य – । माध्वी
र्गावोभवन्तु न ऽ ॥ १३ ॥ अद्येहा मुक गोत्रो ऽस्मत्प्रपितामहो
ऽमुक शर्मा आदित्य स्वरूपस्तृ० ॥ इति प्रपिता महाय तृतीयाञ्जलि
दद्यात् ॥ ॐ आमावास्य प्रसवे जगम्या इमे धाता पृथिवी
विश्वरूप ॥ आपा गन्धाम्पितरा मातरा धामा सोमा अमृत स्थेन
गम्यात् ॥ ॐ अद्येहा मुक गोत्राऽस्मन्माता–अमुकदा ( सापत्यसवधा )
गायत्री स्वरूपा तृप्यता मिदं तिलोदकं तस्यै स्वधा ॥ इति प्रथमा
ञ्जलिंदद्यात् ॥ अत्र नैव पाक्यन मात्रे द्वितीया त्रितीया ञ्जली
दद्यात् ॥ ॐ धामा व्यावस्यप्रसवो जगम्या इमे धाता पृथिवी
विश्वरूपे ॥ धामा गन्धाम्पितरा मातरा धामा सामा अमृतस्त्रन

गम्यात् ॥ ॐ अद्येहामुक गोत्रा ऽस्मऽस्त्वितामही अमुक दा ( वा-यथा योग्या ) सवित्री स्वरूपा स्तृप्यता मिदं तिलोदकं तस्यै स्वधा ॥ इतिपितामह्यै प्रथमा ञ्जलि दत्वा ॥ अने नैव वाक्येन द्वितीय त्रितीया ञ्जली दद्यात् ॥ ततः—आमा व्याजस्यप्रसवो जगम्या देमे द्यावा पृथिवी विश्वरूपे ॥ आमागन्ता म्पितरा मातरा चामा सोमो अमृतत्वेन गम्यात् ॥ ॐ अद्येहामुक गोत्राः अस्मत्प्रपि-तामही अमुकदा ( यथा योग्या ) सरस्वती स्वरूपा तृप्यंतामिदं तिलोदकं तस्यैस्वधा ॥ इति प्रपिता मह्यै प्रथमा ञ्जलिं दद्यात् ॥ अने नैव वाक्येन प्रपितामह्यै द्वितीय तृतीयाञ्जली दद्यात् ॥ ॐ मधु । मधु । मधु । तृप्यध्वम् । तृप्यध्वम् । तृप्यध्वम् ॥ ॐ नमो व ऽः पितरो रसाय नमोव ऽः पितर ऽः शोषाय नमोव ऽः ऽः पितरो जीवाय नमोव ऽः पितर ऽः स्वधायै नमोव ऽः पितरो घोराय नमो व ऽः पितरो मन्यवे नमो व ऽः पितर ऽः पितरो नमो वो गृहान्न ÷ पितरो दत्त सतोव ÷ पितरो देष्मै तद्व ÷ पितरो व्वास ( आधत्त ) ॥ १४ ॥ ॐ अद्येहामुक गोत्रः ऽस्मन्माता महोऽमुक शर्मणाः ( वा ) यथायोग्य सपत्नीकः वरुण स्वरूपः स्तृप्यता मिदं तिलोदकं तस्मै स्वधा ॥ इति माता महाय सपत्नी काय प्रथमाञ्जलिं दद्यात् । एवं एव नमोवः इति मन्त्रेण माता महाय ( यथायोग्य सपत्नीकाय ) द्वितीय तृतीयां ञ्जलीं अपि देये ॥ ॐ नमो वः इति मन्त्रं समग्रं पठित्वा ॐ अद्येह अमुक गोत्रोऽ-स्मत्प्रमाता महो ऽमुक शर्मा ( वा ) यथायोग्य सपत्नीकः प्रजापति स्वरूपः स्तृप्यतामिदं तिलोदकं तस्मैस्वधा ॥ इति प्रमाता महाय प्रथमाञ्जलिं दद्यात् ॥ एतदेव वाक्य मुचार्य द्वितीय तृतीयाञ्जलिं अपि तस्मै देये ॥ ॐ नमो वः इति मन्त्रं समग्रं पठित्वा ॐ अद्येहामुक गोत्रो ऽस्मद् वृद्ध प्रमाता महो ऽमुक शर्मा ( वा ) यथा-योग्य सपत्नीकः अग्नि स्वरूपः स्तृप्यतामिदं तिलोदकं तस्मै स्वधा ॥ इति वृद्ध प्रमाता महाय सपत्नी काय प्रथमाञ्जलि दद्यात्–द्वितीय तृतीयाञ्जलि अपि एतदेव वाक्य मुचार्य देये ॥ [ ततो वक्ष्य माण-श्लोका ऽनुसारेण तावाम्बा इति ज्येष्ठ कनिष्टादीन्सपत्नी कांश्च तर्पयेत् ॥ अद्येह ऽमुक गोत्रा. अस्मद् सपत्न जननी ( उपमाता ) अमुकदा वसुरूपा तृप्यता मिदं तिलोदकं तस्यै स्वधा । इदं तिलो-दकं तस्यै स्वधा । इदंतिलोदकं तस्यै स्वधा ॥ अद्येहामुक गोत्रा ऽस्मद् पत्नी अमुक दा वसुरूपा तृप्यता मिदं तिलोदकं तस्यै स्वधा । इदं तिलोदकं तस्यै स्वधा ॥ इदं तिलोदकं तस्यै स्वधा ॥ अद्येहा-

मुक गोत्रे: अस्मत्सुतः अमुक शर्मा ( वा ) वसुरूप स्तृप्यता मिदं तिलो दकं तस्मै स्वधा । इदंति० ॥ अमुक गोत्रा अस्मत्कन्या अमुकदा ( यथायोग्या ) वसुरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ॥ इ० । इ० । अमुक गोत्रः अस्मत्पितृव्यः अमुकशर्मा यथा योग्य सपत्नीक ( ज्येष्ट कनिष्ट ) वसु स्वरूप स्तृप्यता मिदं मिदं तिलो दकं तस्मै स्वधा नमः ॥ इ० । इ० । अमुक गोत्रः अस्मन्मातुलः अमुक शर्मा यथा योग्य सपत्नीक वसुस्वरूप स्तृप्यता मिदं० । इ० । इ० ॥ अमुक गोत्रः अस्मद्भ्राता अमुक शर्मा ( वा ) यथायोग्य सपत्नीक वसुरूप स्तृप्यता मि० । इ० । इ० ॥ अमुक गोत्रः अस्मत्सापत्नभ्राता अमुक शर्मा ( वा ) यथा योग्य सपत्नीक वसुरूप स्तृप्यतामि० । इ० । इ० ॥ अमुक गोत्रा अस्मदात्म भगिनी अमुकदा ( यथायोग्या वसु रूपा तृप्यता मि० । इ० । इ० ॥ अमुक गोत्रा अस्मन्मातृ भगिनी अमुकदा ( यथायोग्या ) वसु रूपा तृप्यतामि० । इ० । इ० ॥ अमुक गोत्रा अस्मदात्म भगिनी अमुकदा ( यथायोग्या ) वसु रूपा तृप्यता मि० । इ० । इ० ॥ अमुक गोत्रा अस्म त्सापत्न भगिनी अमुकदा ( सापत्या ) वसुरूपा तृप्यता मि० । इ० । इ०॥ अमुक गोत्रः अस्मच्छ्वशुरः अमुक शर्मा वसुरूपस्तृप्यता मि० । इ० । इ०॥ अमुक गोत्राः अस्मद्गुरुः अमुक शर्मा वसुरूपस्तृप्यतामि० । इ० । इ० ॥ अमुक गोत्रः अस्मच्छिष्यः अमुक शर्मा वसुरूपस्तृप्यता मि० । इ । इ० ॥ अमुक गोत्रः अस्मन्मित्रः अमुक शर्मा वसुरूपस्तृप्यता मि० । इ । इ० ॥ अमुक गोत्रः अस्मदाप्तः । अमुक शर्मा वसु रूपस्तृप्यता मि० । इ० । इ०॥ ततो वक्ष्यमाणान् आब्रह्मस्तम्ब पर्यन्त देवर्षि पितृ मानवा दीन् तिलो दका ञ्जलिभि स्तर्पयेत् ॥ यथा—श्री आब्रह्मस्तम्बपर्य्यन्त देवर्षि पितृ मानवाः । तृप्यन्तु पितरः सर्वे मातृ माता महादय, पितृ वंशे मृता येच मातृ वंशे वथैवच । गुरुश्वशुर बन्धूना ये चान्ये बान्धवा स्मृताः ॥ ते तृप्ति माखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥ ये बान्धवा बान्धवा वा ये ऽन्य जन्मनिबान्धवा ॥ ३ ॥ ते सर्वे तृप्ति मायान्तु मद्दत्ते नान्बुनाऽ खिलाः ॥ देवासुरास्तथा यक्षा नागा गन्धर्व राक्षसाः ॥ ४ ॥ पिशाचा गुह्यकाः सिद्धा कूष्माण्डास्तर वः खगाः । जलेचरा भूमि चरा वायवा हाराश्च जन्तवः ॥ ५ ॥ ते तृप्तिमखिला यान्तु मद्दत्ते नाम्बुनाऽखिलाः । नरकेषु समस्तेषु यातना सुयवेस्थिताः तेषामाप्या यनायेतद्दीयते सलिलं मया ॥ भनीत कुल कोटीनां सप्तद्वीप निवासिनं ॥ ७ ॥ आब्रह्म भुवनां ल्लोकानिद मस्तु तिलोदकम् ॥ यतः कृतपन संस्थानां तु तृप्यो महताम्नताम् ॥ ८ । इद मधय मेवास्तु मयादत्तं तिलोदकम् ॥ अथवाऽत्र

निष्पीडनम् ।।— ये के चास्म-कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मयाऽदत्तं वस्त्र निष्पीडनोदकम् ।। इति मन्त्रेण तज्जलं भूमौक्षिपेत् वस्त्रं चतुर्धा कृत्वा । भूमौ वामभागे निष्पीडयेत् । तपित जले पवित्रं विसृजेत् ।। ततः —सव्य कृत्वा पूर्वाभि मुखो भूत्वा शुद्धोदकेनाचम्य प्राणा यामं कुर्यात् । अर्घ्य जले ब्रह्मादि देवान्पूजयेत् । ओं ब्रह्मयज्ञा नम्प्रथमम्पुरस्ताद्विसीमत ऽः सुरुचोव्वेनऽआवऽ । सवुध्न्याऽ उपमाऽअस्यविष्ठाऽः सतश्चयोनिम सतश्चव्विव÷ ।। १६ ।। ओं ब्रह्मणे नमः ।। इति मन्त्रेण पात्रे शुद्धोदकं पूरयित्वातन्मध्येऽनामिकयाष्टदलम् श्वेत गन्धाक्षतंपुष्पाणि तुलसीदलानि च प्रक्षिप्य पश्चाद्देवेभ्योऽर्घं ओं इदं विष्णुर्विचक्रमेत्रेधा निदधे पदम् । समूढ मस्यपा ॐ सुरे स्वाहा १७।। ओं विष्णवेनमः ।। ओं नमस्तेरुद्रमन्यव ऽउतोतऽइषवे नमः÷ ।। १८ ।। ओं रुद्रायनमः ।। ओं तत्सव्वितु ।। १६ ।। ओं सवित्रे नमः ।। ओं मित्रस्य चर्षणीधृतो वो देवस्य सानसिद्युम्नञ्चित्र श्रव-स्तमम् ।। २० ।। ओं मित्राय नमः । ओं इमम्मे वरुण श्रुधी हवामद्या च मृडय । त्वाम वस्यु राचके ।। २१ ।। ओं वरुणायनमः ।। सूर्योपस्थानम् ओं अदृश्रमस्य केतवोव्विरश्मयो जना २ँ ।। ऽअनु । भ्राजन्तो अग्नयो यथा । उपयाम गृहीतोसि सूर्य्याय त्वाभ्राजायैष ते योनिऽः सूर्य्याय त्वाभ्राजाय सूर्य भ्राजिष्ठभ्राजिष्ठ त्वन्देवेष्वसिभ्राजिष्टोह मनुष्येषुभूयासम् ।। २२ ।। हं ध्र सऽःशुचिष द्वसुरन्तरिक्ष सद्धोतावेदिषद् तिथिर्दुरोणसत् । नृषद्वरसदृत सद्व्योम सदब्जागोजाऽऋतजाऽअद्रिजाऽ ऽऋतम्बृहत् ।। २३ ।। दिग्देवतानां नमस्काराः—प्राच्यै-ओं इन्द्रायनमः ।। आग्नेय्यै-ओं अग्नयेनमः ।। दक्षिणायै-ओं यमाय नमः ।। नैर्ऋत्यै-ओं निर्ऋतये नमः ।। पश्चिमायै-ओं वरुणायनमः ।। वायव्यै-ओं वायवे नमः।। उदीच्यै-ओं सोमाय नमः ।। ईशान्यै-ओं ईशानायनमः ऊर्ध्वायै-ओं ब्रह्मणे नमः ।। अधस्तात्-ओं विष्णवे नमः ।। अवाच्यै-ओं अनन्ताय नमः ।। ( जलमध्ये ) ओं ब्रह्मणे नमः ।। ओं अग्नये नमः ।। ओं पृथि-व्यै नमः ।। ओं ओषधिभ्यो नमः ।। ओं वाचे नमः ।। ओं वाचस्पतये नमः ।। ओं विष्णवे नमः । ओं अद्भ्यो नमः ।। ओं अपाम्पतये नमः ।। ओं वरुणाय नमः ।। मुख

---

वृथा पतन्—गयने सफलं जन्म गयने सफलं तपः । गयने गोत्रजातर्षे याता वीनुमहादिरम् । पत्र शाखादि दानेनक्लेशिवापूयनी ह्यं तत् क्लेश सिद्ध रुज्जातः तत्त्वतं कुन्तु मर्दनः ।

त्रिमार्जनम् ( शुद्धोदकेन ) ओं संन्वर्चसा पयसा सन्तनू भिरगन्महि मनसा सं७ शिवेन ॥ त्वष्टा सुदत्रोविदधातुरायोनुमार्ष्टु तन्नवो यद्वि लिष्टम् ॥ २४ ॥ विसर्जनम्-ओं देवा गातु विदोगातु वित्त्वागातुमित । मनसस्पतऽइमन्देव यज्ञ ॐ स्वाहाव्वातेधा ऽः ॥ २८ ॥ अर्पणम्—अनेन यथा शक्ति देव ऋषि मनुष्य पितृ तर्पणाख्येन कर्मणा भगवान् मम समस्त पितृस्वरूपे जनार्दन वासु देवः प्रीयतां नमम। ॐ तत्सद्ब्रह्मार्पण मस्तु। श्री गदाधरस्तृप्यतु। ओं विष्णवे नमः इतित्रिः इति तर्पण प्रयोग

---

# श्री चक्र पूजनम् ॥

श्री गणेशाय नमः । अथ देव्यार्चनम्—आचम्य प्राणा नायम्य
गुशान्ति मंवतु ॥ ॥ मङ्गलोच्चारणम् ॐ स्वस्तिनऽऽइन्द्रो व्यृद्धश्रवाऽः
स्वस्ति नः पूषा विश्वव वेदाऽःस्वस्तिन स्तार्क्ष्योऽअरिष्ट नेमिऽः स्वस्तिनो
बृहस्पतिर्दधातु ॥ १ ॥ भद्रङ्कर्णेभिःऽशृणुयाम देवा भद्रम्पश्ये मा
क्षभिर्यजत्राऽःस्थिरै रङ्गैस्तुष्ट वा ꣳस स्तनूभिर्व्यशे महि देव हित
म्यदायु ः ॥ २ ॥ तम्प्रत्नथाभिरसुगच्छेभदेवा ऽः पुत्रै र्भ्रातृ भिरुत
वा हिरण्यैः ना कङ्गन्थनाऽः सुकृतस्य लोके तृतीये पृष्ठेऽअधिरोचने-
दिवः ऽ ॥ ३ ॥ नमस्काराः । श्रीमन्महा गणाधिपतये नमः । इष्ट देवता-
भ्यो नमः । कुल देवताभ्यो नमः । ग्राम देवताभ्यो नमः । स्थान देवताभ्यो
नमः । वास्तु देवताभ्यो नमः । वाणी हिरण्य गर्भाभ्यां नमः । श्री लक्ष्मी-
नारायणाभ्यां नमः । श्री उमामहेश्वराभ्यां नमः । शचीपुरन्दराभ्यां
नमः । मातृ पितृ चरण कमलाभ्यां नमः । सर्वेभ्यो देवेभ्यो नमः ।
निर्विघ्न मस्तु । सुमुख श्चैक दन्तश्च कपिलो गज कर्णकः । लम्बो-
दरश्च विकटो विघ्न नाशो गणाधिपः । धूम्रकेतुर्गणाध्यक्षोभाल चन्द्रो
गजाननः । द्वादशै तानि नामानियः पठेच्छृणुयादपि ॥ विद्यारम्भे
विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न
जायते ॥ शुक्लां म्बर धरं देवं शशि वर्ण चतुर्भुजम् प्रशन्नः वदन
ध्यायेत् सर्व विघ्नो पशान्तये ॥ अभिप्सितार्थं सिद्धयर्थं पूजितोय सुरा-
सुरैः सर्व विघ्न हरस्तस्मैगणाधिपतये नमः । सर्वमङ्गल माङ्गल्ये शिवे
सर्वार्थ साधिके शरण्ये त्र्यम्बके गौरी नारायणि नमोस्तुते । सर्वदा
सर्व कार्येषु नास्तितस्तेषां ममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलाय
तनम् हरिः तदेव लग्न सुदिनं तदेव तारावलं चन्द्र वलं तदेव ॥ विद्या
वलं दैव वलं तदेव लक्ष्मी पते तेऽङ्घ्रि युगं स्मरामिः ॥ लाभस्तेषां
जयस्तेषा कुतस्तेषां पराजयः । येषां मिन्दी वर श्यामो हृदय स्थो जना-
र्दनः ॥ यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः तत्र श्रीर्विजयो भूति
ध्रुवा नीति र्मतिर्मम ॥ सर्वेष्वा रब्ध कार्येषु त्रयस्त्रि भुवनेश्वराः । देवादि
सन्तुनः शिद्धि ब्रह्मेशान जनार्दना ॥ विनायकं गुरुं भानुं ब्रह्म विष्णु-
महेश्वरान् । सरस्वतीं प्रणम्यादौ सर्वकार्यार्थ सिद्धये ॥ सङ्कल्पः ॥—

ओं विष्णु २ः श्री मद्भगवतो महा पुरुषस्य विष्णुराज्ञाया प्रवर्त्तमानस्य अद्य ब्रह्मणो द्वितीये परार्द्धे श्रीश्वेत वराहकल्पे वैवस्वत् मन्वन्तरेऽष्टाविंशति तमे युगे कलि प्रथम चरणे भारतखण्डे भारतवर्षे जम्बूद्वीपे आर्यावर्तान्तरगत् हिमवत् प्रवर्तक देशे केदार खण्डे बाद्रिका धर्म शुभेन् दक्षिण पार्श्वे सरस्वती मन्दा किन्योर्मध्ये श्री शालिवाहन शाके बौद्धा वतारे अस्मिन्वर्त माने षष्ठी सम्वत्सराणां मध्ये अमुक नाम सम्वत्सरे अमुकाऽयने अमुकर्तौ अमुक मासे अमुक पक्षे अमुक वासरे अमुक तिथौ अमुक नक्षत्रे अमुक राशि स्थिते चन्द्रे अमुक राशि स्थिते श्री सूर्ये अमुक राशि स्थिते देव गुरौ शेषेषु ग्रहेषु यथा यथं राशि स्थान स्थितेषु सत्सु एवं गुणा विशेषण विशिष्टायां शुभ पुण्य तिथौ ममात्मन ……… श्रुति स्मृति पुराणोक्त फल प्राप्त्यर्थं मम ऐश्वर्यादिः वृध्यर्थं अप्राप्त लक्ष्मी प्राप्त्यर्थं प्राप्त लक्ष्म्यादिस्थिर काल संरक्षणार्थम् एकल मन इप्सित कामना मं सिद्धयर्थम् लोके वा सभायां राज द्वारे वा वा सर्वत्र यशो विजय लाभादि प्राप्त्यर्थं इह जन्मनि जन्मान्तरे बाल्य यौवन वार्धक्या वस्थासु वाक्पाणि पाद पायू पस्थ प्राणा रसना चक्षु श्रोत्र स्पर्श मनोभिः स्वरित ज्ञाता ज्ञात कामा काम महापातको पपातकादि सङ्कित्वानां पापा नां अन्यतत् सं सर्ग रूप महापात का नां स्पृष्टा स्पृष्ट मक्लौ करण अपात्रो करण जाति भ्रंश करण रस विक्रय गा विक्रय खरोष्ट्र विक्रय महिषि विक्रय अजादि पशु विक्रय ब्राह्मण दुर्भाषणो निरर्थक द्रुम च्छेदन श्मानया कर्ण ब्रह्मस्व हरण जाति भ्रंश करण रवि देवराज स्वाप हरण ब्राह्मण निन्दा वेद निन्दा देव निन्दा शिवनिन्दा अभक्ष्य भक्षण अभोज्य भोज्य अचोष्याऽऽचोषणम् अपेया पानम् अस्पृश्य स्पर्शनम् अश्राव्यस्य श्रवण अघ्रेयस्या घ्राणं अहिंस्याऽहिंसनम् अगम्याऽऽगमनम् अचिन्त्या चिन्तनम् अयाच्याऽऽयाचनम् अपुज्यो पूज नम् स्वविक मातृ पितृ तिरस्करणम् स्त्री पुरुष प्रति भेदनम् मिथ्या वादं पर द्रोह पर हानि धौर्यकरणमन्त्याज संभासण म्लेच्छ संग सनम प्रसङ्गेणापि स्वामि भेदनम् मित्र वचन भार्या निन्दनम् परान्न भोजनम् ॥ गणिकान्न भोजनम् अनु पात्र-पात्र भोजनम् नृहस्तान्न भोजनम् पंक्ति भेदादि करण तथा स्व परि रोगादि भोजनम् अन्यान्योपि श्रेयान सकल दुरितो पशम नार्थं तथा च गौरो धारण स्व पितृ पितामह प्रपिता महानां अमुका मुका मुक शर्मणा यथागोत्र ( नामस्य मनसा ) मयापी

वोध्यु दश छ समानऽआयुऽप्रमोषीऽ । अस्मिन्कलशे वरुणं साङ्गं स परिवारं सायुधं सशक्तिमा वा हयामि ततः-कलश प्रार्थनादेव दानव सम्वादे मथ्यमाने महोदधौ । उत्पन्नोऽसि सदा कुम्भ विधृतो विष्णुना स्वयम् त्वत्तोये सर्व तीर्थानि देवाः सर्वेत्वयिस्थिताः ॥ त्वयितिष्ठन्ति भूतानित्वयि प्राण प्रतिष्ठिताः । शिव स्वयंत्वये वाऽपि विष्णुस्त्व च प्रजापतिः आदित्या वसवोरुद्रा विश्वे देवाः स पैत्रिकाः त्वयि तिष्टन्ति सर्वेपि यतः कामः फल प्रदाः । त्वत्प्रसादा दिमां पूजां, कर्तु मीहे जलो द्भवः सानिध्यं कुरु मे देव प्रसन्नो भवसर्वदा । प्रसन्नो भव ॥ वरदो भव ॥ ॐ भू र्भु वः स्वः कलशस्थ वरुणाय नमः । आवा हयामि यथा मिलितो पचारार्थे गन्धा क्षत पुष्पाणि समर्पयामि । नमस्करोमि । अनन्तरम् । कलशोदकेन पूजा द्रव्या णि तथा ऽआत्मानं च अपवित्र पवित्रो वा सर्वावस्थां गतोऽपिवाः यः स्मरेत्पुण्डरी काक्षं सवाह्याभ्यन्तरः शुचिः ॥ ॐ आपोहिष्ठा मयो भुव स्तान ऽ उर्जेदधातन । महे रणाय चक्षसे ॥ योव÷शिव तमो रसस्तस्य भाजयते हन÷ । उशतीरि व मातर÷तस्माऽरङ्ग मा मवो यस्य क्षयाय जिन्वथ । आपो जन यथा चन ऽः ॥ इति सम्प्रोक्ष्य ॥ पश्चात् कलश मुद्रां प्रदर्श्य ॥ शङ्ख पूजनम्–शङ्खदो चन्द्र दैवत्यं कुक्षो वरुण देवता पृष्ठे प्रजापति श्चैव अग्रे गङ्गा सरस्वती । त्रैलोक्ये यानि तीर्थानी वासुदेवस्य चाज्ञया । शङ्खे • तिष्टन्ति विप्रेन्द्र तस्माच्छङ्खत्वः प्रचोदयात् । ॐ अग्निर्ऋ षि ऽः पव मान ऽः पाञ्च जन्य ऽः पुरो हितः तमी महे महा गयम ॐभूर्भु वः स्वशङ्खस्य देवतायै नमः आवा हयामि सर्वोप- चारार्थे गन्ध पुष्पाणि समर्पयामि नमस्करोमि । शङ्ख मुद्रांप्र- । घण्टा पूजनम्—आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । घण्टो नादंप्रकुर्वीत पश्चाद् घण्टा प्रपूजयेत् । ॐ सुपर्णोसि गरुत्म त्रिवृ त्ते शिरो गायत्र ञ्चक्षुर्वृ हद्रथन्तरे पक्षौ । स्तोम ऽआत्मंसा छन्दा- छ स्यङ्गानि यजु छ षि नाम ॥ सामते तनू र्वामदेव्यं य्येज्ञा य- ज्ञिय म्पुच्छन्धिष्ण्या ऽः शफा ऽः सुपर्णोसि गरुत्मान्दिवङ्ग च्छ स्व÷ पत ॥ ॐ भूर्भु वः स्वः घण्टास्थाय गरुडाय नमः आवाहयामि । सर्वो पचारार्थे गन्ध पुष्पाणि समर्पयामि नमस्करोमि । घण्टा मुद्रां

---

घण्टस्य गरुड मुद्रा—समुत्तोनु करो कृत्वा मंध यित्वा कनिष्ट के पुनश्चा- धो मतो कृत्वा तर्जन्यो मेधमेघयोः । मध्यमा नामिके देतु पश्चाविवरिचा- लयेत् ॥ मद्रेषा पक्षिराजस्य सर्वविघ्नविनाशिनी ॥

प्रदर्श्य ॥ दीप पूजनम्—त्रिनेत्रमा रक्त तनुं, सु शुक्लः वस्त्रं सुवर्णं स्रज मामे मीढ़े ॥ वराभय स्वक्ति क शक्ति हस्तं पद्म स्थ मा कल्प समूद युक्तम् ॥ ॐ अग्नि ज्योति ज्योति ज्योति रग्नि ऽः स्वाहा सूर्य्यो ज्ज्योति ज्योति ऽः सूर्य्य ऽः स्वाहा। अग्निर्व्वर्चो ज्ज्योति व्वर्च ऽः स्वाहा, सूर्य्यो व्वर्चो ज्योति व्वर्च ऽः स्वाहा । ज्ज्योति ऽः सूर्य्य ऽः सूर्य्यो जयोति ऽः स्वाहा ॥ ॐ भूर्भुर्व्वः स्वः दीप स्थ देवतायै नमः आवाहयामि सर्वो पचारार्थे गन्धा क्षत पुष्पाणि समर्पयामि नमस्करोमि ॥

गुं गुरुभ्यो नमः ॥ त्र्यम्बक ध्यानम्-हस्ताम्भोज युगस्थकुम्भ युगला-दुद्धृत्यतोयं शिरः सिंचिन्त करयो युगेन दधतं स्वांकेश कुम्भौ करौ ॥ अक्षस्रग् मृगहस्त मम्बुज गतंमूर्द्धस्थ चन्द्र स्रवं पीयूषो नत्तनुभजे सगि-रिजं मृत्युंजयं त्र्यम्बकम् ॥ इति त्र्यम्बकं नत्वा ॥ तारादि नमोन्तं मूल मन्त्रम्—माला मन्त्रम्—श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं क ए इ लह्रीं ह स कहल ह्रीं सकल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं स्वाहा ॥ जपित्वा वा स्व २ माला मत्रम् जपेत् ॥ अस्य श्रीत्रिपुर सुन्दरी मन्त्रस्य दक्षिणा मूर्ति ऋषिः पंक्तिः छन्दः श्री मत्रिपुर सुन्दरी देवता ऐं बीजं सौः शक्तिः क्लीं कीलकं ममाभिष्टसिद्धयर्थेजपेविनियोगः॥आम्यान्यान्यासानाह—दक्षिणा मूर्तये नमो मूर्ध्नि । पक्तये नमोमुखे । त्रिपुर सुन्दर्यै नमो हृदि । ऐं बीजाय नमो गुह्ये सौः शक्तये नमः पादयोः । क्लीं कीलकाय नमो नाभौः । इति मुन्यादि न्यासः ॥ कर शुद्धि न्यास माह—ह्रीं श्रीं अं मध्यमाभ्या नमः । ह्रीं श्रीं आं अनामिकाभ्यांनमः । ह्रीं श्रीं सौः कनिष्ठिकाभ्यां नमः । ह्रीं श्रीं अं अङ्गुष्टाभ्यां नमः । ह्रीं श्रीं आंतर्जनीभ्यां नमः । ह्रीं श्रीं सौः करतल कर पृष्टाभ्यां नमः अयं कर शुद्धि न्यासः ॥ आसन न्यासः ॥ आसन न्यासमाह देवीति—ह्रीं श्री ह्रीं क्लीं सौः देव्यासनाय नमः पादयोः ह्रीं श्रीं हैं- हस क्लीं हसौः चक्रासनाय नमः जंघयोः । ह्रीं श्रीं हसैं हसक्लीं हसौः सर्व मन्त्रासनाय नमः जानुनोः । ह्रीं श्रीं ह्रीं क्लींब्लें साध्य सिद्धा सनाय नमोलिंगेः इत्यासन न्यासः । स तारादि नमोन्त मूलम् ( माला

---

षडंग—हृद गुलित्रयं न्यस्येतर्जन्यादि द्वयंतुके । शिखाप्रदेशे याङ्गुष्ठ दशाङ्गुल्यस्तु व्रजाणि ॥ हृद नेत्रं पूर्वं मन्त्रं शक्ति रहस्य मुद्रिका ॥ प्रसा-रिताभ्यां हस्ताभ्यां कृत्वा ताल त्रयं सुधा ॥ तर्जन्य गुष्ठयो रग्रे स्फालयं च यथा दशः ॥ पर सौभाग्य दण्डनी मुद्रा लक्षणम्—वामे मुष्टिं दृढं बध्वा तर्जनीं प्रविसारयेत् । भ्रामयेद्वाम कर्णान्तं मुद्रा सौभाग्य दण्डनीति । इयं द्वयोमपि मुद्रामिति ॥

मन्त्रम् ) मध्यमा नामिमाभ्या शिरसि न्यसेत् ॥ पञ्च माह—श्रीं ह्रीं क्लीं ऍसो हृदये । ऑं ह्री श्रीं शिर-आद्य कूटेन शिखा । मध्य कूटेन कवच । त्रितिय कूटेन नेत्रम् । सौ ऍं श्रीं ह्रीं श्रीं अस्त्रम् ॥ इति षडगम् ॥ पुन सतारादि नमोन्त मूल मध्यमा नामिकाभ्या ( सुधास्रवन्ती दीपाकारा वृद्ध रन्ध्रस्था सौभाग्य दा देवींमाध्यायं ) शिरसिन्यसेत् ॥ पुनर्वाम कर्ण पर शौभाग्य दडनी मुद्रा कृत्वा वाम पार्श्वे मूर्धादिपादान्तम् तारादि नमोन्त मूल न्यसेत् ॥ पर सौभाग्य दण्डनी मुद्रा एवं क्षोभणी मुद्रा ॥ स तारादि नमोन्त मूल न्यसेत् ॥ दर्शयेत् ॥ रिपु जिह्वा मुद्रा एव द्राविणि मु० ( तारादि नमोन्त मूल सहित न्यसेत् ) दर्शयेत् । त्रिखण्डा मुद्रा एव कर्षिणी मुद्रा प्रत्येक तारादि नमोन्त मूल न्यसेत् ॥ मुखे स वेष्टय स्तारादि नमोन्त मूलं दक्ष कर्णा तो वामान्त कण्ठान्मुखा समन्त मेव न्यसेत् ॥ पुन प्रणव पुटा विद्या सर्वाङ्गे न्यसेत् ॥ ( विद्या अ आ० इत्यादि ) मुखे योनि मुद्रा बध्वा तथैव देवींन्यसेत् ॥ अर्थ जगद्वशीकरणान्यास ॥ देवी कात्या विश्वं रक्त ध्यायन अगुष्ठा नामिका भ्या ब्रह्मरन्ध्रे मणि बन्धे ललाटे विद्या न्यसे दितिसमोहनो न्यास ॥ अ नम पादयो । आ नम जयायो । इ नम जानुनो । ई नम कटि भागयो । उ नम लिंगे । ऑं नम पृष्ठे । ऋ नम नाभिदेशे । ॠ नम पार्श्वयो । ऌ नम स्तनयो । ॡ नम अंशयोए नम कर्णयो । ऐ नम ब्रह्मरन्ध्रे । ऑं नम वक्के औं कर्णज्येष्टेमि अ नम नेत्रयो । अ नम कर्णशष्कुली ॥ अथ सहार न्यास ॥ वाग्देवता न्यास माहषोडश स्वर पूर्व कतद्बीज पूर्वा वशिनी शिरसि न्यसेत्—यथा अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओं औं अ अः ब्लूं वशिनी वाग्दे वतायै नम शिरसि ॥ कवर्गस्य कामेश्वरी बीजाद्य भाले न्यसेत्—कं खं गं घ ङ क्लो ह्रो कामेश्वरी वाग्देवतायै नमो ललाटे ॥ चवर्गेण मोहनीं बीजन भ्रू मध्ये न्यसेत् ॥—यथा—च छ ज झ ञ न्व्लीं मोहनी वाग्देवतायै नमो भ्रू मध्य ॥ टवर्गेण स्वद्बीजस्य विमलां कंठेन्यसेत् ॥ ट ठ ड ढ ण ट्लू विमला वाग्देवतायै नम कंठे ॥ तवर्ग बीजाभ्या अरुणा हृदि

---

रिपु जिह्वा मुद्रा—यथा—अ गुष्ठ गर्भित मुष्टि ब प्नीत्या दक्षपाणिना । रिपु जिह्वा मद्रा प्रय मुद्रोक्ता शत्रु नशि नीति मुद्रा वाम पाद वेन कृतेति इय द्राविणी मुद्रा ॥ त्रिखण्डा ( अग्रे )

त्रिखण्डा मुद्रा लक्षणम्—परिवार्य करौ स्पष्टा वगुष्ठौ कारयेत्समौ ॥ अनामान्तर्गते कृत्वा वर्जन्यौ कुटिला कृती । कनिष्ठके नियु क्तेत नियोजने मदस्वरी ॥ त्रिखण्डेय समाख्याता त्रिपुरा ह्वान कर्माणि

न्यसेत् ॥ यथा—तं थं दं धं नंज्रीं अरुणा वाग्देवतायै नमोहृदि ॥ पवर्ग बीजाभ्यां जयिनीं नाभौ न्यसेत् ॥ यथा—पं फं वं भं मं ह्सल्व्र्यूं जयन्ती वाग्देवतायै न्यसेत् ॥ पवर्गों बीजाद्य सर्वेश्वरीं मूलाधारे न्यसेत् ॥—यथा—यं रं लं वं ह्म्ल्र्यूं सर्वेश्वरीवाग्देवतावैनमो मूलाधारे ॥ शादयो बीजाभ्यां कौलिनी उर्वादि पादान्तंन्यसेत्-स क्ष यथा-शं षं सं हं लं क्षंज्रीं कौलिनी वाग्देवतायै नमः ऊर्वादि पादान्तम् ॥ वाग्देवतायै नमः इति पदम् ॥ सृष्ठि न्यास माह—ब्रह्म रन्ध्र इतिअं ब्रह्म रन्ध्र इति ॥आंल लाटे । इं नेत्रयो । ईं कर्णयो । उं नसौ । ऊं गंडयो । ऋं दन्तेपु । ॠं ओष्ठयौ । लृं जिह्वायां । लॄं मुख मध्ये । एं प्टष्टे । ऐं सर्वांगे ओं हृदि । औं स्तनयौ । अं कुक्षौ । अः लिंगे ॥ स्थितिन्यास माहकेरति–अं अगुष्टाभ्यां न मः । आं तर्जिनीभ्यां नमः । इं मध्यमाभ्यां नमः । ईं अनामिकाभ्यां नमः । उं कनिष्ठिकाभ्यां नमः । ऊं ब्रह्मरन्ध्रे । ऋंमुखे । ॠं हृदि । लृं नाभ्यादि पादान्तम् । लॄं कंठादिनाभ्यन्तम् । एं ब्रह्म रन्ध्रात्कंठात् । ऐं पंच पार्दा गुलिपु ॥ ( ऐं-ओं-औं-अं-अः ) परवावृनिन्यासमाह ।—अं आं मूर्ध्नि वक्त्रे । इं ईं नेत्रयोर्द्धे, उं ऊं श्रुत्योर्द्धे, ऋं ॠंनसोर्द्धे, लृं लॄं गंडयोर्द्धे । एं ऐंओष्टयोर्द्धे । ओं औंमुखमध्ये । अं दन्त पंक्ते । अः वदने विन्यसेत् ॥ द्वितीय माह—अं शिखा । आं शिरः इं भाले । ईं भ्रूः । उं नासाः । ऊं मुखे । ऋं ॠं-लृं लॄं एं ऐं ओं औं अं अः दक्षकर सन्ध्यग्रेषु पंच एवं वामे पंच ॥ तृतीय माह—अं शिरः । आं ललाटे । इं ईं नेत्रयो उं मुखे । ऊं जिह्वायां । ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः दक्षपाद अंगुलिषु संध्यग्रं पंच एवं वामपादे पंच ॥ चतुर्थ माह–अं ललाटे । आंगले । इं हृदि । ईं नाभौ । उं मूलाधारे । ऊं ब्रह्मरंध्रे । ऋं मुखे । ॠं गुदे । लृं आधारे । लॄं हृदये । एं ब्रह्मरन्ध्रे । ऐं श्रीं करयो । ओं-अं पादयो । अः हृदिः ॥ पंचमं आह—प्रणव पुटितां विद्यां सर्वांगे न्यसेत् नमोंतां हृदिष—श्रीं अं ललाटे । ह्रीं आंगले । क्लीं-इं हृदि । ऐंईं नाभौ । सौं उं मूलाधारे । ओं ऊं ब्रह्मरंध्रे । ह्रीं ऋंमुखे । श्रीं ॠं गुदे । आद्यकूटेन लृं आधारे । मध्यकूटेन लॄं हृदि । तृतिय कूटेन एं ब्रह्म रंध्रे । सौः एं ऐं

---

इति कर्णाणीति त्रिखण्डया मुद्रयातु भाले मूलं न्यसेत् ॥ त्रैलोक्यस्याखिलं स्याहं कर्त्तेति स्वंविचिंत येत् ॥ योनि मुद्रा अग्रे द्रष्टव्यमुखे योनि मु०—मिथः कनिष्ठि के बध्वा तर्जनीभ्या अनामिको अनामिकोर्ध्वे शश्लिष्ट दोर्घ मध्य मयोरधः अङ्गुष्टाग्र द्वयं न्यस्ये योनि मुद्रे यमीरितेति ॥ अयं जगद्वशो करण न्यासः ॥

ओं करयौ। क्लीं ह्रीं-ओं अं पादयौ। श्रीं अ हृदि॥ षोढान्यासादयो निस्तरभयान्नोक्तास्ते उच्यन्ते॥ यथा—गणेशग्रह नक्षत्र योगिनी राशि पीठ लक्षण षोढा न्यासा॥—गणेश मातृ का मंत्र स्य दक्षिणा मूर्ति ऋषि गायत्री छन्द श्री मातृ का सुन्दरी दवता ममो पास्य श्री विद्या गत्वेन षोढा न्यासे विनियोग॥अक ख ग घ ङ आ ऐं हृत्। इ च० ५ क्लीं शिर। उ ट० ५ क सौ शिखा। ए त० ५ ऐं सो कवचम्॥ ॐ प० ८ ओं क्लीं नेत्रम्॥ अं यं० १० अ ऐं अस्त्र॥ ध्यानम्—उद्यत्सूर्य सहस्राभा पीनोन्नत पयोधरा॥ रक्त माला वरा लेप रक्त भूषण भूषिता॥ पाशा कुश धनुर्बाण भास्वत्पाणि चतुष्टया रक्त नेत्र त्रया स्वर्ण मुकुटोद्भासि चन्द्रिकाम्॥ एवं ध्यात्वान्यसेद्बीज पूर्वं ग अ विघ्नेश ह्रींभ्या नम। ग आ विघ्न राज श्रीभ्या नम। इत्यादि मातृ का स्थले न्यसेत्। अथग्रह मातृ का मन्त्रस्य दक्षिणा मूर्ति ऋषि गायत्री छन्द श्री मातृका सुन्दरी देवता मपो पास्य श्री विद्या गत्वेन षोढान्यासे विनियोग। ध्यानम्—रक्त श्वेत तथा रक्त सामं पीत चपाडुरम् धूम्र कृष्णं च धूम्र च धूम धूम्र विचिन्त येत्॥ रवि मुख्यान्काम रूपान्सर्वा भरण भूषितान्॥ वामो रुन्यस्त हस्ताश्च दक्षिणे नवर प्रदान्॥ अ १६ सूर्याय रेणुका वायै नम हृदि॥ य ४ चन्द्राया मृता वायै नम भ्रूमध्ये। क ५ मगलाय धामा वायै नमो नेत्रयो॥ च ८ बुधाय ज्ञान रूपा वायै नमो हृदि॥ व५ बृहस्पतये यशस्विन्य वायै नमो हृदयोपरिभागे। त ५ शुक्राय शाकयं वायै नम कटे॥ प ५ शनैश्चराय शाक्रय वायै नमो नाभौ। शं प स ह राहवे कृष्णा वायै नमो मुखे। लं क्ष केतवेधूम्रा वायै नमो गुदे॥ अथ नक्षत्र मातृ का मंत्रस्य दक्षिणा मूर्ति ऋषि गायत्री छन्दो नक्षत्र रूपिणी सुन्दरी देवता विद्या गत्वेन न्यास विनियोग ध्यानम्—ज्वल त्कालाग्नि सङ्काशा सर्वा भरण भूषिता। नति पाययोऽश्विनी मुख्या वरदा भय पाणय॥ अ आ आश्विन्यैनमो ललाटे। इ

१ तथां गणेश आत्मादपूजये दासना दिभि। अन्यचयं कुंकुमैराश कुर्या दा वरणाचनम्॥ आग्नेया दिषु कोणेषु हृदय च शिर शिरां। वमाम्यचाम नेत्रादिव त्वापूजयेत्सुधी॥ द्वितीयावरणे पूजा प्रागाद्यष्टे व शतप। विद्यादिमा विधात्री च भोगदा विघ्न घातिनी॥ निधि प्रदीपा पापघ्नी पुण्या पाशा श्विशिखा। दक्षादेषु वक्र तुंड एकदंष्ट्रो महोदर॥ गजास्य लम्बोदरश्च विकटा विघ्न राट्। धूम्रवर्णस्त दक्षेषु रक्षायाआयुधेषु वा।

भरण्यैनमोदक्षनेत्रे उइं ऊंकृत्तिकायैनमोवामनेत्रे । ऋं ॠं लृं लॄं रोहिण्यै नमोदक्षनेत्रे ।एंमृगशिरसेनमोवामकर्णे । ऐंआर्द्रायैनमोदक्ष नसि। ॐ औं पुनर्वसवेनमोवामनासि ।। कंपुष्यायनमःकंठे।खं गं आश्लेषायै नमो दक्ष स्कन्धे ।घं ङमघायैनमोवामस्कन्धे । चंपूर्वा फाल्गुन्यैनमो दक्ष कूर्परे । छं जं उत्तरा फाल्गुन्यै नमो वाम कूर्परे । झं ञं हस्ताय नमो दक्षिण मणि बन्धे । टं ठं चित्रायै नमो वाम मणि बन्धे । डं स्वात्यै नमो दक्ष हस्ते । ढं णं विशाखायै नमो वाम हस्ते । त थं दं अनुराधायै नमो नाभौ । धं ज्येष्ठायै नमो दक्ष कटौ। नं पं फं मूलाय नमो वाम कटौ । बं पूर्वाषाढायै नमो दक्षौरौ । भं उत्तराषाढायै नमो वामौ रौ । मं श्रवणाय नमो दक्ष । जानुनि । यं रंधनिष्टाय नमो वाम जानुनि । लं शतभिषायै नमो दक्ष जंघायाम् । वं शं पूर्वाभाद्रपदायै नमो वाम जंघायाम्। षं सं हं उत्तरा भाद्रपदायै नमो दक्ष पादे । लं क्षं अः रेवत्यै नमो वाम पादे । इति नक्षत्रमातृकाः सर्वेषु न्यासे ष्वादौ माया श्री बीजे योज्ये ।। न्यासा न्सर्वा न्प्रकुर्वीत् माया श्री बीज पूर्व कानित्युक्त त्वात् ।। योगिनी न्यास माह- योगिनी न्यासस्य मुनि छन्दसी पूर्वोक्ते । योगिनी रूपा सुन्दी देवता श्री विद्यां गत्वेन न्यासे विनियोगः । ध्यानम्—सिता सिता रुणा बभ्रू चित्रा पीताश्च चितयेत् ।। चतुर्भुजाः समैर्वक्रैः सर्वाभरण भूषिताः एवं ध्यात्वान्यसेत् ।। ह्रीं श्रीं डां डी डंमल वर यूं पूं डाकिन्यै नमः । अं १६ मम त्वचं रक्ष २ त्वगात्मने नमः कंठ देशे विशुद्धौ ।। १ ।। ह्रीं श्रीं रां रा रं मल वर यूं पूं राकिन्यै नमः । कं १२ मम रक्तं रक्ष २ असृगात्मने नमः हृदनाथा हृते ।। २ ।। लां लीं लं मलवर यूं पूं लाकि- न्यै नमः । ङ १० मम मांसं रक्ष २ मांसात्मने नमः नाभौ मणिपुरे ।। ३ ।। कां कीं कं मल वर यूं पूं काकिन्यै नमः । वं ६ मम मेदो रक्ष २ मेद आत्मने नमः लिंग मूले स्वाधिष्ठाने ।। ४ ।। शां शीं शं मल वर यूं पूं शाकिन्यै नमः व ४ ममास्थि रक्ष २ अस्थ्यात्मने नमः गुदे मूलाधारे ।। ५ ।। हां हीं हं मलवर यूं पूं हाकिन्यै नमः हं क्षं मम मज्जां रक्ष २ मज्जात्मने नमो भ्रूमध्ये आज्ञा चक्रे ।। ६ ।। यां यी यं मल वरयूं पूं याकिन्यै नमः ।। अं-मम शुक्रं रक्ष २ शुक्रात्मने नमः ब्रह्मरन्ध्रे ।। २ ।। इति योगिनी मातृकाः ।। राशि मातृका न्यास माह—राशि मातृका मन्त्रस्य मुनि छन्दसी पूर्वोक्ते । राशि रूपा सुन्दरी देवता श्री विद्यां गत्वेन न्यासे विनियोगः ।। ध्यानं—रक्त श्वेत हरि द्वर्ण मांडु चित्रासिता- न्स्मरेत् ।। पिशंग पिंगली बभ्र कर्बु रा शितधूम्रवान् ।। एवंध्यात्वान्यसेत् ।

अं आं इं ईं मेषाय नमः दक्ष पाद गुल्फे ॥ १ ॥ उं ऊं ऋं वृषायनमः दक्ष जानुनि ॥ २ ॥ ॠं लृं लॄं मिथुनाय नमः दक्ष वृषणे ॥ ३ ॥ एं ऐं कर्काय नमः दक्षकुक्षौ। ओं औं सिंहाय नमः दक्ष स्कन्धे। अं अः शं षं सं हं कन्याये नमः दक्षशिरो भागे ॥ कं खं गं घं ङं तुलाये नमो। वाम शिरो भागे ॥ चं छं जं झं ञं वृश्चिकाय नमः वामस्कन्धे। टं ठं डं ढं णं धन्विने नमः वामकुक्षौ। तं थं दं धं नं मकराय नमः वाम वृषणे। पं फं बं भं मं कुंभाय नमः वाम जानुनि। यं रं लं वं चं मीनाय नमो वाम गुल्फे। इति राशि मातृकाः ॥ पीठ मातृकाः ॥ माह—पीठ मातृका मन्त्रस्य मुनि छन्दो गानि श्री मातृका पीठ रुपिणी सुन्दरी देवता श्री विद्यां गत्वेन न्यासे विनियोगः ॥

ध्यानं—सिता सिता रुणा श्यामा हरित्पीतान्यनुक्रमात्। पुनरेवत्क्रमा देवी पंचाशत् स्थान शंचये ॥—ह्रीं श्रीं अं कामरूप पीठाय नमः ॥१॥ ह्रीं श्रीं आं वाराणसी पी० ॥ २ ॥ ह्रीं श्रीं इं नेपालपी० ॥ ३ ॥ ह्रीं श्रीं ईं पौंड वर्धनपी० ॥ ४ ॥ ह्रीं श्रीं उं कारमीर पी० ॥ ५ ॥ ह्रीं श्रीं ऊं कान्य कुब्ज पी० ॥ ६ ॥ ह्रीं श्रीं ऋं पूर्णागिरी पी० ॥ ७ ॥ ह्रीं श्रीं ॠं अर्बुदाचल पी० ॥ ८ ॥ ह्रीं श्रीं लृं आम्रात केश्वर पी० ॥ ९ ॥ ह्रीं श्रीं लॄं एकाम्र पी० ॥ १० ॥ ह्रीं श्रीं एं विस्रोत पी०। ह्रीं श्रीं ऐं काम कोठ पी० ॥ १२ ॥ ह्रीं श्रीं ॐ कैलाश पी० । ह्रीं श्रीं औं भृगु पी० ॥ १४ । ह्रींश्रीं अं केदार पीठा० ॥ १५ ॥ ह्रीं श्रीं अः चंद्रपुर पी० ॥ १६ ॥ ह्रीं श्रीं कं श्री पी० ॥ १७ ॥ ह्रीं श्रीं खं ॐकार पी० ॥ १८ ॥ ह्रीं श्रीं गं जालंधर पी० ॥ १९ ॥ ह्रीं श्रीं घं मालव पी० । ह्रीं श्रीं ङं कुलान्तपी० ह्रीं श्रीं चं देवी कोट्टक पी० ॥ २२ ॥ ह्रीं श्रीं छं गोकर्ण पी० ॥ २३ ॥ ह्रीं श्रीं जं माहवेश्वर पी० ॥ २४ ॥ ह्रीं श्री झं अट्टहास पी०। ह्रीं श्रीं ञं विरज पी० ॥ २३ ॥ ह्रीं श्रीं टं राजगृह पी० ॥ २७ ॥ ह्रीं श्रीं ठं महापथ पी० ॥ २८ ॥ ह्रीं श्रीं डं कोल्लगिरि पी० ॥ २९ ॥ ह्रीं श्रीं ढं एलापुर पी० ॥ ३० ॥ ह्रीं श्रीं णं कालेश्वर पी० ॥ ३१ ॥ ह्रीं श्रीं तं जयंती पी० ॥ ३२ ॥ ह्रीं श्रीं थं उज्जयिनी पी० ॥ ३३ ॥ ह्रीं श्रीं दं चरित्र पी० ॥ ३४ ॥ ह्रीं श्रीं धं क्षीरि का पी० ॥ ३५ ॥ ह्रीं श्रीं नं हस्तिनापुर पी०

---

प्राय संयमम् ॥ पूर्व वत्-ह्यजिह्वं यन्यस्ये त्यादि ॥ मुद्राःवतद्यथा मुच्यते—यरय-उन्माद-महाकुश-महायोनि ॥ यरयर-पुटाकारौ करौ कृत्वा एकंम्या यंकुणाकृती ॥ परिवृत्ये कमेरौव मध्यमे तदधो गतो क्रमेण देरि ते वैव कनिष्ठा नामिका दंयः ॥ संयोज्यं निविडाः सर्वा अंगुष्ठा यमदेरतः मुद्रेयं परमे शानी सर्व यरय करी मतेति ॥ मुद्रा ( क्रमं )

॥ ३६ ॥ ह्रीं श्रीं पं वडीश पी० ॥ ३७ ॥ ह्रीं श्रीं फं प्रयाग पी० ॥ ३८ ॥ ह्रीं श्रीं वं षष्टीश पी० ॥ ३९ ॥ ह्रीं श्रीं मं मायापुर पी० ॥ ४० ॥ ह्रीं श्रीं मं मलय पी० ॥ ४१ ॥ ह्रीं श्रीं यं श्री-शैल पी० ॥ ४२ ॥ ह्रीं श्रीं रं मेरु पी० ॥ ४३ ॥ ह्रीं श्रीं लं गिरि पी० । ह्रीं श्रीं वं माहेन्द्र पी० ॥ ४५ ॥ ह्रीं श्रीं शं वामन पी० ॥ ४६ ॥ ह्रीं श्रीं षं हिरण्यपुर पी० ॥ ४७ ॥ ह्रीं श्रीं सं महा लक्ष्मी पी० ॥ ४८ ॥ ह्रीं श्रीं हं उडयाण पी० ॥ ४९ ॥ ह्रीं श्रीं लं छाया पी० ॥ ५० ॥ ह्रीं श्रीं क्षं छत्रपुर पीठाय नमः ॥ ५१ ॥ इति पीठ मातृकाः आदि शब्दात्काम मातृकादयो ज्ञेया ॥ ( अग्रे स्पष्टा ) एवं न्यासान् कृत्वामुद्राः प्रदर्शः । पडङम् ॥ ध्यानमाह—बालकार्युत तेजसां त्रिनयनां रक्ताम्बरोल्लासिनीं नाना लंकृति राजमान वपुषं वालोडुराट् शेखराम् । हस्तैरिक्षु धनुःसृणि शमशरं पाशं मुद्रा बिभ्रती श्री चक्रस्थिव सुन्दरी त्रिजगतामाधार भूतास्मरेत् ॥

## पात्रस्थापन माह—

ॐ वज्रोद के हुं फडितिजल महणम् ॥ ॐ ह्रीं स्वाहेति पाद प्रक्षालनम् । ॐ ह्रीं सु विशुद्ध धर्म सर्व पाप निशाम्या शेष विकल्पानय नय स्वाहेत्या च मनम् श्रीं मणि धरि वज्रिणि शिरवरिणि सर्व वशं करिणि हुं फट् स्वाहेति शिखाबन्धनम् । श्रीं रक्ष २ हुं फट् स्वाहेति विघ्न वारणम् ॥ श्रीं पवित्र वज्र भूमे हुं स्वाहेति भूमि निमत्रणम् ॥ श्रीं आसु रेखे वज्र रेखे हुं स्वाहेतिमंडलम् ॥ श्रीं यथा गताभिषेक समाग्नि मेहुं फड़िति पुष्पशोधनम् ॥ श्रीं श्रीं ह्रीं स्वाहेति चित्त शोधन मंत्रः । कलश स्थापनम्— श्रीं रक्ष २ फट् स्वाहा भूमि सं शोध्य ॥ तत्र-श्रीं आसु रेखे वज्र रेखे हुं स्वाहा मण्डल मंत्रेण-वृत्त त्रिकोणचतुष्कोणात्मक मण्डलं कूर्यात् । तत्राधार शक्ति—यथा—विश्व शक्त्यै नमः ॥ ॐ महाशक्त्यै ( माया ) नमः ॥ कूर्मा सनाय नमः ॥ ॐ योगासनाय नमः ॥ श्रीं अनन्ता सनाय नमः । ॐ विमला सनाय नमः । मध्ये ॐ परम सुखाय नमः । ॐ भूर्भुवः स्वः आत्मासनाय

---

उन्माद मुद्रा लक्षणम्—समुचौ तु करौ कृत्वा मध्यमा मध्यमांगुजे ॥ अनामिके तु सरलेः तदधस्तर्जनीद्वयम् ॥ दंडा कारो वर्तौगुष्टौ मध्यमा नख देशगौ॥ मुद्रेशान्मादनी नामस्तेदिनी सर्व योषिता ॥ महां कुश मुद्रा लक्षण यथा— अस्यास्त्व नामिका युग्मं अधः कृत्वा कुशा कृति ॥ तर्जन्या वपिते तैव स्मेव विनियो जयेत् ॥ इयंतरा कुशा मुद्राःसर्व कामर्थ साधिनोति ॥

नम । इति आधार शक्ति कूर्म शेषान् सम्पूज्य ॥ एक त्रिंदश त्तर मन्त्रेण धार पूजयेत् ।—तमाह— ॐ रा रीं रुं र मल वर यूर अग्नि मण्डलाय धर्म प्रद दश कलात्मने ऐं कलशा धाराय नम । तदुपरि पात्राधारो परि आग्नेयो दश कला अर्च ये त्ता एवाह— हव्य कव्यादिका वह्ना ॥ य धूम्रार्चि कला श्री पादुका पूजयामि। र ऊष्मा कला श्री पा० ॥ ल ज्वलनी कला श्री पा० ॥ व ज्वालिनी कला श्री पा० ॥ म विस्फु लिंगिनी कला श्री पा० ॥ र सुश्रे कला श्री पा० ॥ रु सुरूपाये कला श्री पा० रीं कपि लाये कला श्री पा० ॥ रा हव्याये कला श्री पा० ॥ ॐ कव्याये कला श्री पा० ॥ स्वर्णादिनिर्मित् कलशम्—ॐ ह्रा ह्रीं ह्रूं हमल व्यूं ह सूर्य मण्डलाय द्वादश कलात्मने क्लीं कलशाय नम । तत्रार्क कला स्तपिन्याद्या सम्पूज्य । क भं इत्यादि विलोमे मूल मातृके जपन् जलै स्त सम्पूर्य । क भ वपिन्यै नम । ख बं तापिन्यै नम । गं फ धूम्रायै नम । ध प मरीच्यै नम । ङ न ज्वालि न्यै नम । च ध रुच्यै नम । छदं सुषुम्नयै नम । जथ भोग दायै नम । झं त विश्वायै नम ॥ ञ णं बोधिन्यै नम ॥ ट ढंधारिण्यै नम॥ ढ ड-क्षमायै नम ॥ इत्यर्क मण्डलं सम्पूज्य । मूल मन्त्र पठन् सुधा वुध्या तो य सम्पूर्य तत्रगन्ध पुष्पाक्षतान् में तपनी कला श्री पादु का पूजयामि नम । य तापिनी कला श्री पा० ॥ सू धूम्राची कला श्रीपा० ॥ ह मरिचि कला श्री पा० । व्यू ज्वालिनी कला श्री पा० । ल रुच्चे कला श्री पा० । म सुपुम्नायै कला श्री पा० ॥ ह्र भोगदायै कला श्री पा० ॥ ह्रू विश्वै कला श्री पा० ॥ ह्रीं बोधिन्यै कला श्री पा० । ह्रा धारिरायै कला श्री पा० ॥ ॐ क्षमायै कला श्री पा० ॥ मिति प्रयोगे त्रिखण्डा मुद्रा वक्ष्योका ॥ मूलविद्या च मन्त्र वित ॐ सोम मण्डलाय येति कलशा मृताय नम तत ॐ सा सीं सू समल व्यूं स सोम मण्डलाय कामप्रद षोडश कलात्मने सौः कलशा

---

मद्रा योनि मुद्रा लक्षणम्—मध्यमे कुटिले कृत्वा तर्जन्यु परि संस्थिते ॥ अनामिका मध्य गतेतथे वहि कनिष्ठिके ॥ सर्वा एकत्र संयोज्या अङ्गुष्ठ परि पीडिता ॥ एषा तु प्रथमा मुद्रा महायोन्य भिधा मते ॥ त्रिखण्डा मुद्रा । ध्याका ॥ दोर्ये म त्रेय ॥ गगे च त्यादि सुवया अ कुश मुद्रया—मुष्टी मध्य मिका कृत्वा तर्जनी मध्य पर्वणि ॥ संयोज्या कुञ्चये किंचिन्मुद्रया कुश वहि ताम् ॥ मत्स्य मुद्राल०—वामो परिष्ठा त्स्थाप्य दक्ष हस्त प्रसारयेत् अङ्गुष्ठो चुलयोः माहर मत्स्य मद्रे यमी रितेति ॥ महाज मुद्रा (कर्मे) दक्ष्य—

मृताय नमः मन्त्रोयं जलार्चने। षोडशस्वराद्या, स्वान्द्वीः कलास्तज्जले र्चयेत्ता आह अमृतेति ॥ अं अमृतायै कला श्री पादुकां पूजयामि। आं मानदायै कला श्री पा० ॥ इं पूषायै कला श्री पा० ॥ ईं तुष्टे कला श्री पा०। उं पुष्टै कला श्री पा० ॥ ऊँ रत्यै कला श्री पा०। ऋधृत्यै कला श्री पा० ॥ ॠं शशिन्यै कला श्री पा० ॥ लृं चन्द्रिकायै कला श्रीपा लॄं कान्त्यै कला श्री पा० ॥ एं ज्योत्स्नायै कला० ॥ ऐं श्रियै कला श्रीपा ओं प्रीत्यै कला श्री पा०। औं अंगदायै कला श्री पा० ॥ अं पूर्णायैकला श्री पा० ॥ अः पूर्णामृतायै कला श्री पा० इत्यर्घ्यंसम्पूज्य ॥ तत्र तत्घट स्थापने सृणि मुद्रया गंगे चेत्यादि तीर्थ मन्त्रेणां कुशामु द्रया अर्क मण्डलात्तीर्थमावाह्य त्वद्दतो देव मा वाहयेत् ॥ एका दशार्णेन मन्त्रेणां द्दवारं जलं मंत्रयेत् सा यथा—ऐं ह्रीं श्रीं ह्रीं श्रीं ह्रौं श्रीं हूं फट् हसौः हूं मिति मन्त्रेणाष्ठवार जलं मन्त्रयेत् ॥ ततो–ह्रीं वीजेन ( सुधां ) प्रक्षिप्य ( इति तोये असुकां प्रक्षिप्य )। कुम्भ योनिमुद्रां प्रदर्शयेत्। तत्र सम्पूज्याघ जले हसक्षमलेति स्वरूपं पानीयवः। भैरव मन्त्रं आह–यथा-हसक्ष मलव्र्यूं आनन्द भैरवायवौषट्। ( दशार्णेन इति स्वरूपम् ) हसयो वैंपरित्यं–सहक्ष मल व्र्यूं सुधा देव्यै वौषट् ॥ इति सप्तार्णं पूजयेत् ॥ मुद्रा-प्रदर्श येत् ॥—मत्स्य-अस्त्र-कवच-धेनु-संरोधिन्यां-सन्निरुध्य-मुशल-चक्र-महामुद्रा-योनि मुद्रा-कुम्भ-पुनः अमृति मुद्रां प्रदर्शयेत् ॥ अर्घ्यं इति—आदयः षोडशस्वराः। कादयोणान्ता ( कं० तपयन्तं ) थादयो शान्ताः ( थं० यः पर्यन्त ) ते रर्घ्यं त्रिकोणं संचिन्त्य ॥ की दृशं ॥ हृदाभ्यां मध्ये शोभितं तत्र ऐं क्लीं सौः रिति वाला संपूजयेत्। ओं ह्रीं हंसः सोहं स्वाहा ॥ इति मन्त्रेण देवीं ज्योतिमर्यीं यजेत्। मूलं त्रिपूजने कुर्यात्कुर्यात्सुद्रा समीरिताः ॥ समीरिता मुद्राः मत्स्य-अस्त्र-कवचं-धेनु-अमृतिसंरोधिनी-संन्निरुध्य-र त्व-मुशल-चक्र-इति नव मुद्राः कुर्यात् अर्घ्यादि केन-पूजा वस्तूनि आत्मानं चं सम्प्रोक्ष्य मूल मंत्रं स्मरन्। शङ्ख पद

---

मुशल मुद्रा–मुष्टि कृत्वा तु हस्ताभ्यां वामस्यो परि दक्षिणाम्। कुर्यात् मुशल मुद्रेय सर्व विघ्न निवारिणीति ॥ चक्र मुद्रा–हस्तौतु संमुखौ कृत्वा सं लग्नौ सु प्रसारितौ। कनिष्ठा गुष्ठको लग्नौ मुद्रेषाचक्र संज्ञितेति ॥ अस्त्र मुद्रा–दक्षस्य तर्जनी मध्ये सव्येकर तलेक्षिपेत् अभिघातेन शब्द स्या दस्त्र मुद्रा समीरिता ॥ कवच मुद्रा–द्धनेत्र त्रिभिरा वर्तात् द्वाभ्या ग्रस्तं शिरोमतम्। अङ्गुष्ठं न शिखायेया दिग्भिः कवच मीरितिम् ॥ इति षंडगानि न्याय मुद्राम् ॥

अमृतो मुद्रा—परिवृत्य करौ पश्चात्तर्जनी मध्यमे युते कनिष्ठानामिकाङ्गुष्ठं परस्पर युतं कुरुः धेनु मुद्रे यमा स्याता अमृतो करणं भवेत् ॥ अर्घ्यं द्रव्य कृत-

ऋघ्य पद्यं च प्रयोज्य ॥ मधुपर्कम्—पात्रे तुमधुपर्कस्य दध्याज्य मधुचर्चि-पेत् । मूल श्लोक सुधामत्रे दृव्यात्तं वदने प्रभोः ॥ सुधा मत्र—सहस्रमल-र्व्यू सुधादेव्य वौषट् । मुन्यक्षरः सप्ताणम् पूजयेत् । मधु पर्क मिदं देव कल्पयामि प्रसीदमे । पुनराचमनं दद्यात्मल श्लोकान्तर पठन् । शुद्धि माप्नोति तस्मैते पुनरा च मनीय कम् । स्नानं वस्त्रो पवीतान्ते नैवेद्यान्ते पितस्सृतम् ॥ पुनरा चमनं—उच्छिष्टोऽप्य शुचि र्वापियस्यस्मरणमा-त्रतः ॥ शुद्धि माप्नोति तस्मैते पुनरा च मनीय कम् ॥

## पीठ पूजा माह—

द्वार निर्णयः—मात्स्ये—वह्वृचौ पूर्वतः स्थाप्यौ दक्षिणेतु यजुर्विदौ । सामागौ पश्चिमे तद्वदुत्तरेणत्वथर्वणौ । इति वचनात् । (सुधाण-वासनं परवा यजेत्प्रेताम्बुजासनम्) दिव्या सन चक्रासनं सर्व मन्त्रा सनं ततः साध्य सिद्धा सनं प्रान्ते चक्र राजप्रपूजयेति ॥ इति मंत्र महोदधिम् ॥

## तार मात्रा त्रयायम् ।—

अं ऊं मं सूर्य सोमाग्नि मण्डलं गुणान् सत्व रज तमांसि स्व-वर्णा ध्यान् । सं सत्वाय नमः र रजासाय नमः त तमसाय नमः ।

---

नम्...पाद्य द्रव्यायथाह—दूर्वाङ्करेति । आचमनीय द्रव्यायथाह—लवंगेति । कंकोल मुत्स्य द्रव्येमरीचोत्तमम् तत्रर्घ पात्रे क्षिपेत् वातिलदर्भाग्र तर्पयान् । यवपुष्पा, दान् गंध तेनार्घ्येमूर्ध्निचा चरेत् ॥

धेनु मुद्रा—वामांगुलिना मध्येषु दक्षिणा गुली स्थाना सं योज्य तर्जनीदक्ष दत्वा मध्य मया वामया तथा दक्ष मध्य मया वामां तर्जनी चनियो जयेत् । दक्षया नामया वामा कनिष्ठा विनियो जयेत् । विहिताधो मुखीचैषाधेनु मुद्रा प्रकीर्ति तेति । अमृत बीजत. वमितिर्व जेन सं राधिन्या मुद्रया वा यथा—अंगुष्ठ गर्भिणी मेव मुष्टि रोधं समीरतेति ॥ अंगुष्ठ गर्भ मुष्टि द्वयं हृदयाः । महा-मुद्रायथा—परमो करण करया रंगुली ग्रथ्य करो वियोजयेदिति योनि मुद्रा—दद्याद्वृष्ट वामांगुष्टपरिस्त हस्तद्वये नव शाव काया (मध्य शून्या) मुद्रि का कुर्यात् वा कवच मुद्रयां ॥

आत्मानिमित्यादीन्। मात्रप्रयादीन—अं आत्मने नमः। ऊं अन्तरात्मने नमः। मं परमात्मने नमः। ज्ञानात्मानं-ह्रीं ज्ञानात्मने नमः। मायातत्त्वादीनि स्वतर्पा यानि । मां मायातत्त्वाय नमः । कला तत्त्वाय नमः विद्यातत्त्वाय नमः। प्रपूजयेत् । ब्रह्मप्रेताय नमः विष्णु प्रेताय नमः रुद्रेश्वर प्रेतायनमः॥ पीठ शक्ती राह—कामिन्यै नमः। कामदायिन्यै नमः। रत्यै नमः। रतिप्रयायै नमः । नन्दायै नमः। मनोन्मनायै नमः वरायै नमः। वराभय करायै नमः। इति पूर्वोक्त पीठ मातृके आदि शब्दात्कामानृकादयो (क्षैयाप्रयोगेषु) ततः आसन मंत्रेण पूजये चक्र नायकम्—पीठ मन्त्र मुद्धरविश्वरूपमन्यत् यथा ऐं परोप्रे अपरायै परा परायै ह्सौ सदाशिव महा प्रेतपद्मा-सनायनमः इति॥ एवंपीठंसमभ्यर्चदद्यात्पुष्पांञ्जलिततः॥पुष्पाञ्जलि मंत्र माह।—ह्रीं श्रीं प्रकट गुप्ततर सम्प्रदाय कुलनिगर्भ रहस्यात्ति रहस्य परा पर रहस्य संज्ञक श्री चक्र गत योगिनी पादुकाभ्यो नमः । इतिं पुष्पाञ्जलिम् ॥ इति॥

## आवरणार्थे—उपचार पूजनम्॥

पूजनप्रयोगः त्रिखण्डा मुद्रोक्ता ॥ आवाहन मंत्र माह—ध्यानपूर्वकंपुष्पं गृहित्वा—खड्ग चक्र गदेषु चाप परिघा ञ्छूलंभुशुण्डीं शिरः शंखं संन्दधतीं करैस्त्रि नयनां सर्वाङ्ग भूषा वृताम्॥नीलाश्मद्यु ति मास्यपाद दशकां सेवे महाकालिकां यामस्तौ स्वपिते हरोकमल जो हन्तु मधु कैटभम्॥ ॥ १ ॥ ॐ हिरण्य वर्णां हरिणीं सुवर्ण रजत श्रजम् । चन्द्रां हिरण्य मयीं लक्ष्मीं जातवेदोय मा वह ॥ १ ॥ देवेशि भक्ति सुलभेसर्वा वरण सं युते । यावत्त्वां पूज यिष्यामि तावत्त्वं सुस्थिराभव ॥ इदमा वाहनं प्रोक्तं ततः स्थापनमा चरेत् ॥ भैरवी मंत्र मुच्चार्य श्री मं न्त्रपुर सुन्दरि ॐभूर्भुव.स्व.

---

मधु पर्क मन्त्रः—ओं दधिक्राव्णोऽअकारिषंजिष्णोरश्वस्य वाजिनः॥ सुरभिना मुखाकरत्प्रणऽआयूं षि तारिषत्॥ पात्रे तु दधि क्षिपेत्॥ ओं घृतमिमिदे घृतमस्य योनिर्घृते! श्रितो घृतम्वस्यधाम। अनुष्वधमा वह मादयं स्व स्वाहा कृतं वृषभ वक्षि हव्यम्॥ इति घृतं क्षिपेत्॥ ओं मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥ मधुनक्तमुतोष सो मधुमत्पार्थिवंरजः। मधुद्यौ रस्तुनः पिता॥ मधुमान्नोवनस्पतिर्मधुमाँ॥२॥ऽअस्तुसूर्यः।गावो भवन्तुनः॥मधु क्षिपेत्॥

त्रिचर्पं यित्वा—शुक्र पक्षेतु—ऐं क्लीं सौः ॐ नमः कामेश्वरि इच्छा काम फल प्रदे सर्व सत्व वशं करि सर्व जगत्क्षोभण करि हुं हुं हुं द्रां द्रीं क्लीं

श्री महा त्रिपुर सुन्दर्यै नम ध्यानावाहनसमर्पयामि नम ॥ इति प्रयोगे ॥

अथ आसनम्—ॐ अक्षस्रक् परशु गदेषु कुलिपं पद्म धनु कुण्डिका दण्डं शक्ति मसिं च चर्म जल ज घण्टा सुराभाजनम् ॥ शूल पाश शुदशने च दधतीं हस्तै प्रसन्ना नना से वे सै रिम मर्दिनीमिह महा लक्ष्मीं सरोजस्थिताम् ॥ ? । ना ऽ आवाह जात वेदो लक्ष्मी मनप गामिनीम् । यस्या हिल्य विन्देय गामस्व पुरुषा नहम् ॥ अनेक रत्न स युक्त नाना मणि गणान्वितम् । कातम्बर मय दिव्य आसन प्रति गृह्यताम् ॥ ॐ भू भुर्व स्व श्री महा त्रिपुर सुन्दर्यैनम ध्यान पुष्प सहित आसन समर्पयामि नम ॥ इति पुष्प स० ॥ तत आसन मुद्रा स्थापन्यादि दर्शयेत् । चक्रे स्मिन्कुरु सान्निध्यं नमोन्त स्थापने मनु दर्शयेन्स्थापनि मुद्रा सन्निधि सन्निरोधनम्—सुमुखीं मुद्रा मन्त्रविद् दर्शयेत् ॥

षडङ्गकम् न्यसेत्—सकली करण त्विदम् अव गुण्ठा मृतीकार परमी कृत्यमहा मुद्रा प्रदर्शयेत् ॥ मुद्रा पूर्वं प्रयोगे द्रष्टव्य पात्र स्थापनादि प्रयोगम् ॥

पाद्यम्—उद्यत्भानु सहस्र कान्ति मरुण क्षोमा शिरो मालिका रक्ता लिप्त पयोधरा जप वटीं विद्या मभीतिं वराम् ॥ हस्ताब्जै दध तींत्रिनेत्र विलसद्वक्त्रार विंद श्रिय देवीं बद्ध हिमांशु रत्न मुकुटा वन्दे सुम द स्मिताम् ॥ ॐ अश्व पूर्णां रथ मध्या हस्ति नाद प्रमोदिनीम् श्रिय न्दी मुप ह्वये श्रीर्मा देवीं जुषताम् ॥ गङ्गादि सर्व तीर्थेभ्यो मयाप्रार्थ नया हृतम् तोयमे तत्सुख स्पर्शं पाद्यार्थं प्रतिगृह्य ताम् ॥ ओं भू र्भुव स्व श्री महा त्रिपुर सुन्दर्यै नम पाद्यं समर्पयामि नम । अर्घ्यम् कालाभ्राभा कटाक्षै रिर कुल भयदा मौलि बद्धेन्दु रेखा शरव चक्र कृपाणा विशिख मपि करै रुद्व हन्ता त्रिनत्राम् ॥ सिंह स्कन्धाधि रूढा त्रिभुवन मखिला तेजसा पूरयन्ती ध्यायेद् दुर्गा जया ख्या त्रिदश

म्लू स सो क्रीं ऐं ४६ कामेश्वरि नित्या श्री पादुका पूज यामि तर्प यामि नम एव प्रयोग ॥ कृष्ण पक्षेतु विपरीतादा कामेश्वर्या वसानका ॥ इति मात्रा ॥ त्रिखण्डा मुद्रा उक्ता ॥ उप ा[illegible] त्रिखण्डा मुद्रा—मुद्रां त्रिखण्डां ह नाथ पुष्पाषणादाय चाञ्जलौ ॥ ध्यात्वा पूर्वा दिता देवीं मूल विद्या समुच्च रन् ॥ चैतन्यं हृत्कमल ॥ नासिका रन्ध्र निर्गतम् ॥ मद रंभस्य मार्गण यो[illegible] कुसुमां जलौ ॥ महा पद्म वनां तस्थ कारणा नद विग्रहे ॥ सर्वं भूत रते मात रमहि परमेश्वरि ॥ ३ ॥ महः पूजार्थ चैतन्य समुक्त कुसुमा जलिम् ॥ मा धर [illegible] तव [illegible] दर्शं पठत् । ४ ॥

परिवृतां सोवितांसिद्धि कामैः ॥ ॐ सौस्मितांहिरण्यप्रकारामार्द्रांज्वलन्तींतृप्तां तर्पयन्तीम् ॥ पद्मे स्थितां पद्म वर्णा तामिहो पह्वये श्रियम् ॥ निधीनां सर्व रत्नानां त्वय नर्घ्यंगुणा ह्यसि ॥ . सिंहो परि स्थिते देवि । गृहाणार्घ्यं नमोस्तुते ॥ ४ ॥ ॐ भूर्भुवः स्वः श्री महात्रिपुर सुन्दर्यै नमः अर्घ्यं समर्पयामिनमः ॥ आचमनीयम्--घंटा शूल हलानि शंख मुशले चक्रं धनु सायक हस्ताब्जैर्दधर्ता घनान्त विलसच्छीतांशुतुल्य प्रभाम् ॥ गौरी देह समुद्भवां त्रिजगतामाधारभूतामहापूर्वा मन्त्र सरस्वती मनुभजे शुंभादि दैत्यार्दिनीम् । चन्द्रां प्रभासां यशशा ज्वलन्तीं श्रिय लोके देव जुष्टा मुदाराम्। तां पद्मनेमीं शरणं महं प्रपद्ये अलक्ष्मीर्मे नन्यतां त्वा वृणोमि ।स्वकर्पूरे ण सुगन्धेन सुगन्धि स्वादु शीतलम् । तोयमा चमनी यार्थं देवि । त्वं प्रति गृह्यताम् ॥ ॐ भूर्भुवः स्वः श्री महात्रिपुर सुन्दर्यै नमः आचमनीयं समर्पयामि नमः ॥ ५ ॥ मलाय कर्षण स्नानम्-नागाधीश्वर विष्टरो पणि फणोत्त सौरुरत्नावली भास्वद्देह लतां दिवाकर निभां नेत्र त्रयोद्भासिताम्। माला कुम्भ कपालनी रज करां चन्द्रार्द्ध चूडां परां सर्वज्ञेश्वर भैरवाङ्क निलयां पद्मावतीं चिन्तये ॥ आदित्य वर्णे तपसोधि जातो वनस्पतिस्तव त्रिलोऽथ विल्वः तस्यफलानि तपसानु दन्तुमायांन्तरायाश्चबाह्याऽलक्ष्मीः ॥ मन्दाकिन्याः समानीतैर्हेमां बोरुह वासितैः स्नानं कुरुष्व देवेशि, सलिलैश्च सुगन्धिभिः ॥ ॐ भूर्भुवः स्वः श्री महा त्रिपुर सुंदर्यै नमः स्नानं समर्पयामि नमः ॥ ६ ॥ मधुपर्कम्—पात्रे तु मधु पर्कस्य दद्याज्च मधु चक्षिपेत् । मूल श्लोक सुधा मंत्रै दद्यात्तं वदने प्रभोः ॐ मधुव्वाता रितायते मधुक्षरन्ति सिन्धवः माध्वीर्न सन्त्वोषधीः ॥ दधि घृतमधु समायुक्तं पात्र युग्म समन्वितम् मधु पर्कं गृहाणत्वं शुभदाभव शोभने ॥ ॐ भूर्भुवः स्व श्री महात्रिपुर सुन्दर्यै नमः ॥ ७ ॥ शुद्धोदक स्नानम्—ॐ आपो अस्मान्मातरः सुन्ध यन्तु घृतेय नो घृतस्वः पुनन्तु ॥ विश्वंहि रिप्रिम्प्रवहन्ति देवी रुदिदाभ्यः शुचिरा पूतएमि । दीक्षांतं पसस्तिनू रसि स्यां तां शिवा ॐ शगमा परिदधे भद्रं वर्ण पुष्यन् ॥ परमानन्द बोधाब्धि निमग्न निजमूर्तये । सांगोपांग मिदं स्नान कल्पयाम्यहमीशिते ॥ ॐ भूर्भुवः स्वः श्रीमहात्रिपुर सुन्दर्यै नमः मधुपर्क स्नानान्ते शुद्धोदक स्नानं स० ॥ पुनरा च मनीयम्—उच्छिष्टोप्य शुचि र्वापि यस्यास्मरण मात्रतः शुद्धिमाप्नोति तस्मैते पुनरा चमनीयकम् ॥ सर्व लोकस्य या शक्ति र्ब्रह्म विष्णु महेश्वराः । ददाम्या च मनं तस्यै देव्यांस्तुभ्य मनोऽरम् ॥ ॐ भूर्भुवः स्वः श्री महे त्रिपुर सुन्दर्यै नमः आचमनीय सम र्पयामि नमः ।

सुगन्धित स्नानम्ॐ काण्डात्काण्डात्परो हन्ती परुषः परुषस्परि ॥ एवानो दूर्वे प्रतनु सहस्रेण शतेन चः । ॐ स्नेहं गृहाण स्नेहेन लोकेश्वरि

महा नगे, सर्व लोकेषु शुद्धात्मन् वधामि स्नेह मुत्तम् ॥ ओं भू र्भुवः स्वः श्री महात्रिपुर सुन्दर्यै नमः सुगन्धित द्रव्यं समर्पयामि नमः ॥ ६ ॥ दुग्ध स्नानम्—ओं मयः पृथिव्यांमय औषधी षीषुपयो दिव्यन्तरिक्षे पयोधाः ॥ पयः स्वधीः प्रदिशः सन्तुमह्यम् ॥ कामधेनु समुद्भूतं सर्वेषां जीवन परम् । पावनं यज्ञ हेतुश्च पयः स्नानार्थं मर्पितम् ॥ १० ॥ ओं भू र्भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः पय स्नानं समर्पयामि नमः ॥ पय स्नानान्ते शुद्धोदकस्नानं—ओं आपो अस्मान्मातरः शुन्ध यन्तु घृतेन नो घृतस्वः पुनन्तु ॥ विश्वथं हिरिथिम्प्रवहंति देवी रुदिदाभ्यः शुचिरापूत एमि । दिक्षांतं पसरित नू रसि त्वां तां शिवा ओं शागमा परिदिषे भद्रंवर्णं पुष्यन् स्नानार्थे शुद्धोदकं समर्पयामि नमः । स्नानान्ते वच्छिष्टोप्यसिति पुनराचमनीयं समर्पयामि नमः ॥

दधिस्नानम्—ॐ दधि क्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः सुरभिनो मुखा करत्प्रण आयु ७ षितारिषत् ॥ ॐ पय सस्तु समुद्भूतं मधुराम्लं शशि प्रभम् । दध्यानीतं मया देवी । स्नानार्थं प्रतिगृह्यताम् ॥ पुन शुद्धोदक स्नानं समर्पयामि । शुद्धोदक स्नानान्ते । मन्त्रो चार्ण पूर्वकं आचमनीयथं समर्पयामि नमः । इति दधिम् ॥ घृतस्नानम्—ॐघृतं घृत पावनः पिपत व्यसां वसा पावनः पिवतान्तरिक्ष स्य हवि रसि स्वाहा । दिशः प्रदिश ऽआदिशोविदिशऽउद्दिशो दिग्भ्यः स्वाहा ॥ नव नीत समुत्पन्नं सर्व सन्तोष कार कम् । घृतं तुभ्यं प्रदा स्यामि स्नानार्थं प्रति गृह्य ताम् ॥ पुनः पूर्वोक्ति मन्त्रोचार्ण विधेशुद्ध स्नानम्, शुद्ध स्नानान्ते चमनीयम् ॥ इति घृतम् ॥

, मधुस्नानम्—मधु नक्त मुतो पसो मधु मत् पार्थिव ७ रजः मधु द्यौरस्तु नः पिताः ॥ तरु पुष्पं समुद्भूतं सु स्वादु मधुरं मधुरं मधु ॥ तेजः पुष्टि करं॥ दिव्यं स्नानार्थं प्रति गृह्य ताम् ॥ मन्त्रोचारण पूर्वकं पुनः शुद्धोदक स्नानम्—स्नानान्ते आचमनीयम् ॥ इति मधुः ॥ शर्करास्नानम्— ॐ आपा ७ रसमुद्वयस ऽ, सूर्ये सन्त ऽः समाहित ॥ आपा ७ रसस्य यो रसस्त स्वो गृह्णाम्युत्तम् मुपयाम गृहीतो सीन्द्रायत्वा जुष्टं गृह्णाम्येवते योनि रिन्द्रायत्वा जुष्टतमम् ॥ इक्षुसार समुद्भूता शर्करा पुष्टि कारिका । मला पहारिका दिव्या स्नानार्थं प्रति गृह्य ताम् ॥ आपो अस्मान्मिति शुद्धोदकं पच्चामृतमिति आचमनीय समर्प यामि नमः । ॐ भूर्भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः इदक मन्त्रेण मुक्ता युक्त द्रव्य सहित इद पञ्चामृत स्नान समर्पयामि नमः ॥ इति पं० सं० ॥ पञ्चा मृतम्

ॐ पञ्च नद्यः सरस्वती मपयन्ति स स्रोतसः । सरस्वतीतु पञ्चधासो देशे भवत्सरित् ॥ पयो दधि घृतं चैव मधुच शर्करान्वितम् । पञ्चामृतं मया नीतं स्नानार्थं प्रति गृह्यताम् ॥ पुनः आपो अस्मान् मिति शुद्धोदक स्नानं॥ उच्छिष्ट मिति आचमनीय ॥ ॐ भूर्भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः पञ्चामृत स्नानं समर्पयामि नमः॥ गन्ध स्नानम् — ॐ गन्ध द्वारां दुराधर्षां नित्य पुष्टां करीषिणीम् ईश्वरीं सर्व भूतानां तामिहो पह्वये श्रियम् ॥ मलया चल सम्भूतं चन्दना गह सम्भवम् ॥ चन्दनं देवि देवेशिः । स्नानार्थं प्रति गृह्यताम् ॥ पुनः आपो अस्मान् मिति शुद्धोदक स्नानं समर्पयामि । स्नानान्ते उच्छिष्ट मिति आचमनीयम् ॥ उद्वर्तनम्—ॐ अ ंश सुनाते अ ंश शुः पुच्यतां परुषा परुः गन्धस्ते सोमम् भवतु मदाय रसोऽच्युतम् ॥ नाना सुगन्धि द्रव्याणि चन्दन रजनी युतम् । उद्वर्तनं मया दत्त स्नानार्थं प्रति गृह्य ताम् पुनः शुद्धोदक स्नानम्—आपो अस्मान्मातरः शुन्ध यन्तु मिति शुद्धोदक स्नानं ॥ उच्छिष्ट मिति आचमनीयम् ॥ ॐ भूः भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः उद्वर्तनं समर्पयामि नमः इति । तदुपरि ॐ सहस्र शीर्षे त्यादि पुरुष शुक्तेन श्री महा त्रिपुर सुन्दर्यै नमः ( मूर्ध्नी ) शंखविशेषाध्यं समर्पयामि नमः ।

द्वय वस्त्रम्—ध्यायेयं रत्नपीठे शुक कलपठितं शृण्वतीं श्यामलांगी, न्यस्तो कांघ्रिं सरोजे शशि शकल धरां वल्लकीं वाद यंतीम् ॥ कल्हारा बद्धमालानियमितविलसच्चूड़िकांरक्त वस्त्रांमातंगी शंखपात्रां मधुर मधु मदां चित्रको द्भासिभालाम् ॥ उपैतु मां देव सखः कीर्ति रच मणिना सह । प्रादु र्भूतो सुराष्ट्रे स्मिन् कीर्ति वृद्धिं ददातु मे ॥ वस्त्रकुल युगं देवि । कंचुकेन समान्वितम् । परिधेहि कृपां कृत्वां देवी । दुर्गति नाशिनि ॥ ॐ भू र्भुवः स्वः श्रीमहात्रिपुर सुन्दर्यै नमः वस्त्रः द्वयं समर्पयामि नमः ॥ उच्छिष्टमिति आचमनीयं समर्पयामि नमः ॥ अथ-यज्ञोपवीतमरुणां करुणा तरङ्गि तार्क्ष्यां घृत पाशां कुश मुख्य चाप हस्ताम् । अणिमा दिभिरावृताम यूखै रह मित्ये वधि भावये भवानीम् ॥ क्षुत् पिपासा मलां ज्येष्ठाम लक्ष्मीं नाशयाम्यहम् । अभूति मसमृद्धिं च सर्वां निर्णुद मे गृहात् । नवभिस्तन्तुभिर्युक्तं त्रिगुणं त्रिपुरेमयिम् । उपवीतं भोत्तरीयं गृहाण परमेश्वरि ॥ ततः स्वयं आचमनीयम् । ओं भू र्भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः यज्ञोपवीत ( सूत्र ) समर्पय मि नमः । तद्धोक्पुष्पम् ॥ गन्धम्—बन्धूक—काञ्चन निभं रुचि

पक्षमालापाशा कुशौ च वरदं निज बाहु दण्डै । बिभ्राण मिन्दु शकला भरणत्रि नेत्र मम्बाविके शम निश वपुरा श्रयामि ॥ गन्धद्वारादुराधर्षं नित्य पुष्टा करीषिणीम् । ईश्वरीं सर्व भूताना तामिहो पह्वये श्रियम् ॥ परमानन्द सौभाग्य परिपूर्ण दिगन्तरे । गृहाण परम गन्ध कृपया परम श्वरि ॥ ओं भू भुर्व स्व श्री महा त्रिपुर सुन्दर्यै नम गन्ध समर्पयामि नम। सौभाग्य सूत्रम्–ओं सौभाग्य सूत्र वरदे । सुवर्णमणि सयुतम् । कठे बध्नामि देवेशि ? सौभाग्य देहि मे सदा ॥ ओं भू भुर्व स्व सूत्र श्री महात्रिपुर सुन्दर्यै नम कण्ठ सूत्र समर्पयामि नम । अक्षतम् अक्षत सोमदन्त इथवरप्रियाऽ अधूषत । अस्तोषत स्वभानवोऽविप्रा नविष्ट्या मता यो नान्विन्द्रतेहरी ॥ अक्षता निर्मला शुद्धा मुक्तामणि समन्विताऩ् गृहाणे मान्महादेवी ? देहिमे निर्मला धियम् ॥ इति स्वे पकम् ॥ ओं मू भुर्व स्व श्री महा त्रिपुर सुन्दर्यै नम अक्षतान्समर्पयामि नम ॥ हरिद्राचूर्णम् ॥ हरिद्रा रञ्जिते देवी । सुख सौभाग्य दायिनि ॥ तस्मा त्त्वा पूजयाम्यत्रदु खशान्ति प्रयच्छमेत् ॥ ओं भू भुर्व स्व श्री महा त्रिपुर सुन्दर्यै नम परिमल द्रव्य समर्पयामि नम कुङ्कुम् कुङ्क मम् कान्ति दं दिव्यं कामिनी कामसम्भवम् । कुङ्कुमे नाचिते देवि । प्रसीद परमेश्वरी। ॐ भू भुर्व स्व श्री महा त्रिपुरसुदर्यै नम कुङ्कुमम् समर्पयामि नम ॥ सिन्दूरं–सिन्दूर मरुणा भास जपा कुसुम सन्निभ । पूजितासिमया देवि ? प्रसीद परमेश्वरि ॥ ओं भू भुर्व स्व श्री महात्रिपुर सुन्दर्यै नम सिन्दूरं समर्पयामि नम । कज्जला–चक्षुर्भ्यां कज्जलं रम्य सुभगे । शान्ति कारके । कर्पूर ज्योति रुत्पन्न गृहाण परमेश्वरि ॥ ओं भू भुव स्व श्री महात्रि[पु]र सुन्दर्यै नम कज्जला समर्पयामि नम ॥

दुर्वाङ्कुरम्–उत्तप्त हेम रुचिरा रवि चन्द्र वह्नि नेत्रा धनुश्शर युता कुश पाश शूलम् ॥ रम्यैर्भुजैश्च दधता शिव शक्तिरूपा कामेश्वरा हृदिभजामि धृतेन्दु लेखाम् ॥ ॐ आर्द्रां पुष्करणीं पुष्टि सुवर्णा हेम मालिनीम् । सूर्याहिरण्मयी लक्ष्मी जात वेदो मम। वह ॐ काण्डा त्काण्डा त्परो हन्ती परुष परुषस्परि एवानो दुर्वे प्रतनु सहस्रेण शते नच ॥ दुर्वा दलं श्यामलस्त्व मही रूपे हरि प्रिय ॥ अतो दुर्वाभिर्भवतीं, पूजयामि सदा शिव ॥ ॐ भूभु र्व स्व श्री महा त्रिपुर सुन्दर्यै नम । दुर्वां कुर समर्पयामि ॥ विल्व पत्रम्–आद्रा य करिणीं यष्टि पिङ्गला पद्ममालिनीम् । चन्द्रा हिरण्मया लक्ष्मी जातवेदाम आवह ॥ ॐ नमो बिल्मिन च कवचिन नमो वर्मिणे च वरूथिने च नम–श्रुताय च श्रुत सेनाय च नमो दुन्दुभ्याय चा हनन्याय च नमो धृष्णवे । धमृषा कृष्ण आ पुष्ठा

महा देवि। प्रियः सदा ॥ विल्व पत्रं प्रयच्छामि पवित्रं ते सुरे श्वरि१ ॥ ॐ भू र्भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः विल्व पत्रं समर्पयामि नमः ॥ पल्लव अर्पणम्–तांमऽआवहं जात देवो लक्ष्मी मनप गामिनीम् । यस्यां हिरण्यं प्रभूतिं गावो दास्यो स्वान्विन्देयं पुरुषा नहम् ॥ ॐ अश्वत्थेपो निषदनं पर्णोवो व्यसति स्कृता ॥ गोभाज गोभाज इत्किलासथयत्स नवथपुरुषम् ॥ गृह द्वारे चोम- पि दुष्टासुर निवर्हिणि ॥ पूजां करोमि चार्यैगि पल्लवार्नं न्दनोद्भवैः ॥ ॐ भू र्भुवः स्वः श्रीमहा त्रिपुर सुन्दर्यै नमः पल्लवान् समर्पयामि नमः। फलमालां- ॐ महादेवी चविद्महे विष्णु पत्नी च धीमही ॥ तन्नो देवीप्र० ॥ ॐ याः फलाफलनीर्याऽ अफला यारच पुष्पिणी ॥ वृहस्पति प्रसूता स्तानो मुञ्चन्त्व ऽंहसः ॥ शरत्काले समुद्भूतां निशुम्भे मर्दिते त्वया ॥ फल मालां वरां देवि । गृहाण सुर पूजिते। ॐ भू र्भुवः स्वः श्री महा त्रिपुर सुंदर्यै नमः फलमालां स० ॥ रत्नमालां—ॐ परि वाज पतिः कवि रग्नि र्हव्या न्यक्रमीत् ॥ तद्यंद्रत्नानिदा शुपे ॥ ॐ कर्दमेन प्रजाभूता मयि सम्भ्रम कर्दम। श्री य वा सयमे गृहे मातरं पद्म मालिनीम् ॥ मुक्ताफल युतां मालां रत्न वैडूर्य सु प्रभाम् ॥ माणिक्यं स्वर्ण प्रथितां गृह्यतां वरदे १ नमः। ॐ भूर्भुवः स्वः श्री महा त्रिपुर सुन्दर्यै नमः रत्न मालां स० ॥ पुष्प मालां—आपः स्रजन्तु स्निग्धानि चिक्लीत वसमे गृहे । निच देवीं मातरं श्रियं वा सयमे कुले ॥ ॐ श्री श्चते लक्ष्मी श्च पत्न्या वहो रात्रे पार्श्वे नः ॥ पदम् शंखजपुष्पादि शत पत्रै र्विचित्र ताम् ॥ पुष्प मालां प्रयेच्छामि गृहाण त्वं सुरे श्वरि ॥ ॐ भूर्भुवः स्वः श्री महत्रिपुर सुन्दर्यै नमः पुष्प मालां स० ॥ अथ पुष्पं— वालर विद्युति मिन्दु किरीटा तुङ्ग कुचां नयन त्रयं युक्ताम्। स्मेर मुखीं वरदां कुशपाशा भीति करीं प्रभजे भुवनेशीम् ॥ मनसः काम मा कूर्ति वाचः सत्य् मशीमहि। पशूनां रूप मन्नयस्य मयि श्रीः श्रयतां यशः ॥ पुष्पै र्नाना विधैर्दिव्यैः कुमुदै रथ चम्पकैः ॥ पूजार्थं नीयते तुभ्यं पुष्पाणि प्रतिगृह्य ताम् ॥ ॐ भू र्भुवः स्वः श्री म० पुष्पं स० ॥ अलंकारम्–विद्यु दाम सम प्रभां मृग पति स्कन्ध स्थितां भीषणां कन्याभिः कर वाल खेट-विलस द्धस्ता भिरा सेवितां ॥ हस्तै श्चक्र गदासि खेट विशिखां श्चापं गुणं तर्ज्जनीं विभ्राणामन लात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ हार कंकण केयूर मेखला कुण्डलादिभिः । रत्नाढय कुण्डलो पेतं भूषणं प्रतिगृह्यताम् ॥ ॐ भू र्भुवः स्वः श्री म० अलकारं स० ॥ सुगन्ध द्रव्यम् बालार्क मण्डला भापां

जयंती मंगला काली भद्र काली कपालिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तुवो ॥ इति मन्त्रेण यव मारभ्य ॥ शुद्धोदकेन यवो परि सेचनम् ॥ अथ घट स्थापनम् ॥—तत्र-संकल्पः—अद्येह ममेह जन्मनि दुर्गा प्रीति द्वारा सर्वापच्छान्ति पूर्वक दीर्घायु विपुलधन पुत्र पौत्रस्य नव छिन्न सन्तन्ति वृद्धिस्थिर लक्ष्मी कीर्ति लाभ शत्रु पराजय सदभीष्ट सिद्धयर्थं शारद नवरात्र प्रतिपदिविः हित कलश स्थापन पूर्वकं दुर्गा कुमारी पूजन मह' करिष्ये । कलश स्थापन विधिना घट संस्थाप्य । प्रयोगेषु यथा वदंती या नाड़ी दक्षा वामा वा वद्धस्तेन स्यात् त्रिकोणादियंत्रे ॥

यंत्र' मालिख्य ॥ तत्रास्त्र क्षालितं पात्रा धारं स्थापयेत् ॥ एक विंदंम चर मंत्रेणाधारं पूजयेत् ॥ तमाह—ॐ रां रीं रूं रमल वर यूं अग्नि मण्डलाय धर्म प्रददश कलात्मने ऐं कलशा धाराय नमः । तदु परि पात्रा धारो परि आग्नेयी दश कला अर्चये चा पवाह ॥ धूम्रार्चिरिति ॥ हव्य कव्यादिका वहा । यं धुम्रार्चिः कला श्री पादुकां पूजयामि ॥ रं ऊष्मा कला श्री पा० ॥ लं ज्वालिनी कला कला श्री पा० ॥ वं ज्वालिनी कला श्री पा० ॥ मंविस्फु लिंगिनी कला श्री पा० ॥ रं सुश्री कला श्री पा० ॥ रू' सु रूपाय कल श्री पा० ॥ रीं कपिलायै कला श्री पा० ॥ यां हव्यायै कला

---

इत्युक्ता सा वदा देवी गंभीरेति श्लोकस्य प्रति २ लोकं पाठे पृथग् जपे वा विद्या प्राप्तिर्वा, वे कृत नाशश्च ॥ २१ ॥ भगवत्या कृतं सर्वं मित्यादि द्वादशो चर शवाचेरामन्त्रः सर्वं कामदः सर्वापत्ति वारणश्च ॥ २२ ॥ देवी प्रपन्नार्ति हरे इति श्लोक स्य यथा कार्यं लक्षायुत सहस्र शतान्य तम संख्यया जपे प्रति श्लोकं पाठे वा सर्वा पन्निवृत्तिः सर्व कामाप्तिश्च ॥ एषु प्रयोगेषु प्रति श्लोकं दीपामे केवलमे वनमस्कारेऽपि शीघ्रं सिद्धिः ॥ प्रति श्लोकं काम बीज सं पुटि तस्य एक चत्वारिंशद्दिनं त्रिग वृत्तौ सर्व काम सिद्धिः ॥ २३ ॥ एक विंशति दिन पर्यन्त मुक्त रीत्या प्रत्यह' द्वादश वृत्ती वशी करणम् ॥ २४ ॥ माया बीज सं पुटि तस्य फट् पल्लव सहितस्य सप्त दिन पर्यन्त प्रत्ये दश वृत्ता उच्चाटन सिद्धिः ॥ २५ ॥ तादृश्या मेवदिन चतुष्टय मेका दश वृत्ती सर्वोपद्रव नाशः ॥ २६ ॥ एको न पञ्चाशद्दिन पर्य तं प्रति श्लोकं श्रीं बीज सं पुटि तस्य पंच दशावृत्तौ लक्ष्मी प्राप्तिः ॥ २७ ॥ प्रति २ श्लोकं वाग्बीज सं पुटितस्य शता वृत्त्या विद्या प्राप्तिः

श्री पा० ॥ ॐ कव्यायै कला श्री पा० ॥ पूजयेत् ॥ स्वर्णादि-निर्मित कलशम् ॥ अस्त्रायफडिति प्रक्षाल्य तत्रा धोरन्यसेत्-तमुद्धरति ॥ ॐ हां ह्रीं हुं हमल व्रयूं इं सूर्यमण्डलाय वसु प्रद द्वादश कलात्मने क्रीं कलशाय नमः इति । सूर्य कला आह ॥ कं भं तपिन्यै नमः खं बं तापिन्यै नमः । गं फं धूम्रायै नमः ॥

घं पं मरीच्यै नमः।ङं नं ज्वालिन्यै नमः चं धं रुच्यै नमः। छं दं सु पुम्नायै नमः । ज थं भोगदायै नमः। झ तं विश्वायै नमः। ञं णं बोधिन्यै नमः। टं ढ धारिण्यै नम०। ठं डं क्षमायै नमः। इत्यर्क मण्डले सम्पूज्यः। पुनः पूर्ववत् मं तपनी कला श्री पा०। यं तापिनी कला श्री पा०। सूं धूम्रर्नी कला श्री पा० ॥ हं मरिचि कला श्री पा० ॥ व्रयूं ज्वालिनी कला श्री पा० ॥ लं रुच्यै कला श्री पा० ॥ मं सु पुम्नायै कला श्री पा० ॥ हं भोग दायै कला श्री पा० ॥ हूं विश्वै कला श्री पा० ॥ ह्रीं बोधिन्यै कला श्री पा० ॥ हां धारिण्यै कला श्री पा० ॥ ॐ क्षमायै कला श्री पा० ॥ मिति ॥ मूल मंत्रं पठन् सुधा बुध्या तोयं सम्पूर्य्य तत्र गन्ध पुष्पा क्षतान्-मं क्षपमि कला श्री पादुकां पूजयामि स्यादि प्रयोगे क्षिपेत् ॥ मूल-

विद्यां च मंत्र वित् कलशा मृताय तम । ॐ सोम मण्डलायेति पूर्वेत्रिखण्डा मुद्रां बध्वा ततः ॐ सांसीं सूं समल व्रयूं सं सोम

---

॥ २८ ॥ अथसत चडी विधिः पुर्वोक्त अग्नि स्थापनादि प्रयोगे द्रष्टव्यः ॥ श्री रस्तु ॥

अथ देव्याः कवचं प्रारम्यते।—श्री गणेशाय नमः। अद्येत्यादि० श्री महा काली महालक्ष्मी महासरस्वती देवता प्रीत्यर्थ चण्डी सप्त सती पाठाख्यंकर्म करिष्ये ॥ तदङ्गत्वे नादौ कवचार्गला कीलक पठन मादौ तयो रुत्तरे शतसंख्य नवार्ण जप पूर्वकं क्रमेण रात्रि सूक्त देवी सूक्त पठनमते रहस्य त्रयपठनं च करिष्ये। इति सकल्पः॥ प्रथमं नमो देव्यै महादेव्यै शिवायैसततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्मताम् ॥ इति मंत्रेण पञ्चो पचारै पुस्तक पूजां कुर्यात् ॥ श्री रस्तु श्रीगणेशाय नमः ॥ ओं नमश्चण्डिकायै ॥ मार्कण्डेय उवाच। ओं यद् गुह्यं परमं लोके—

सर्व रक्षा करं नृणाम ॥ यन्नकस्य चिदा ख्यातं तन्मेत्रूहि पितामह ॥ १ ॥ ब्रह्मोवाच । अस्ति गुह्यं तमं विप्र सर्व भूतो पकारकम् ॥ देव्यास्तु कवचं पुण्यं तच्छृणुष्वमहा मुने ॥ २ ॥ प्रथमं शैल पुत्री च द्वितीयं ब्रह्म चारिणी । तृतीयं चन्द्र घण्टेति कूष्माण्डेति चतुर्थकम्

मण्डलाय कामप्रद षोडश कलात्मने सोः कलशा मृताय नमः। मन्त्रोयं जलार्चने ॥ ध्यमृतेति॥ श्रं श्रमृतायै कला श्री पा० ॥ श्रां मानदायै कला श्री पा० ॥ इं पूषायै कला श्री पा०। ईं तुष्टै कला श्री पा० ॥ उं पुष्टै कला श्री पा० ॥ ऊं रत्यै कला श्री पा० ॥ ऋं धृत्यै कला श्री पा० ॥ ऋं शशिन्यै कला श्री पा० ॥ लृं चन्द्रिकायै कला श्री पा० ॥ लृं कान्त्यै कला श्री पा० ॥ एं ज्योत्स्न्यायै कला श्री पा० ॥ ऐंश्रियैकला श्री पा० ॥ ओं प्रीत्यैकला श्री पा० ॥ औं अंगदायै कला श्री पा० ॥ अं पूर्णायै कला श्री पा० ॥ अः पूर्णा मृतायै कला श्री पा० ॥ इत्यर्घ्यं सम्पूज्य कुम्भ योनिमुद्रां प्रदर्शयेत् ॥ तत्र घटो परिप्रतिमां संस्थाप्य अथवा तद् भावे दृष्ट्वा संस्थाप्य श्री दुर्गामावाहयेत्॥ अथध्यानम्—जटा जूट समायुक्तां मूर्द्धेन्दु कृत शेखराम् लोचन त्रय सम्पन्नां पद्मेन्दु सदृशाननाम् ॥ अतसी पुष्प वर्णा भां सु प्रतिष्टां सु लोचनाम् ॥ नव यौवन सम्पन्नां महिषासुर मर्दिनीम् ॥ त्रिशूलं दक्षिणे दद्यात् खड्गं चक्रं च वामतः॥ तीक्ष्णं बाणं तथा शक्तिं वामतो सन्नि वेशयेत्॥ खेटकं पूर्ण चापं च पाशमङ्कुश मूर्द्धजम् ॥ घण्टां च पाशु चापि वामतः सन्नि वेशयेत॥ अधस्ता न्महिषं तद्व द्विशिरस्कं प्रदर्श येत् ॥ शिर च्छेदो द्भवंयद्व दानवं खड्ग पाणिनाम्॥ हृदि शूलेन निर्भिन्नं तिर्यग्मन्ध विभू षितम् ॥ रक्त रक्ती कृताङ्ग च रक्त विस्फारिवेक्षणम् वेष्टितं नाग पाशेन भ्रूकुटो भीषण ननम् वमन् रुधिरवक्त्र-

---

॥ ३ ॥ पञ्चमं स्कंद मातेति षष्टं कात्यायनीतिच ॥ सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४ ॥ नवमं सिद्धि दात्री च नव दुर्गाः प्रकीर्तिताः॥ उक्तान्येतानि नामानि ब्रह्मणैवमहात्मना ॥ ५॥ अग्निनादह्य मानस्तु शत्रुमध्ये गतोरणे विषमे दुर्गमे चैवमयार्त्ताः शरणंगताः ॥ ६ ॥ न तेषां जायतेकिंचि दशुभंरणसंकटे ॥ नापदं तस्य पश्यामि शोक दुःख भयं नहि ॥ ७ ॥ यैस्तुभक्त्या स्मृता नून तेषां वृद्धिः प्रजायते ॥ येत्वां स्मरन्ति देवेशि रक्षसे तान्नं संशयः। प्रेतसंस्थातु चामुण्डा वाराही महिषा सना, ऐन्द्री गज समा रूढा वैष्णवी गरुडा सना ॥ ६॥ माहेश्वरी वृषारूढा कौमारी शिखि वाहना लक्ष्मीः पद्मा सना देवी पद्म हस्ता हरि प्रिया ॥ १०॥ श्वेत रूपधरा देवी ईश्वरी वृष वाहना॥ ब्राह्मी हंस समा रूढा सर्वा भरण भूषिता ॥ ११ ॥ इत्येतामातरः सर्वाः सर्वयोग समन्विताः ॥ नाना भरणशोभाढ्या नाना रत्नोप शोभिताः। दृश्यन्ते रथमा रूढा

च देव्या सिंहं प्रदर्शयेत् ॥ देव्यास्तु दक्षिणं पादं समं सिंहो परि स्थितम् ॥ किञ्चिदूर्ध्वं तथा वाम मङ्गुष्ठं महिषो परि ॥ स्तूय मानं च तद्रूपममरैः सन्नि वेशयेत् ॥ अथा वाहनम् ॥ एहि दुर्गे महा भागे ? रक्षार्थं मम सर्वदा ॥ आवा हयाम्यहं देवि ? सर्व-कामार्थं सिद्धये ॥ अस्यां मूर्तौसमा गच्छ इह तिष्ठ इह सन्निहिता भव इह स्थिरा भव सुप्रसन्ना भव इत्या वाह्य पतन्त इति प्रति प्राप्य । ॐ दुर्गे दुर्गरक्षणि ? स्वाहा । जयन्ती मङ्गला काली इति मन्त्रेण च दुर्गे देव्यै पाद्यार्घ्यां च मनीय पञ्चामृत स्नान शुद्धो दक स्नान वस्त्र यज्ञोपवीत भूषण चन्दन सिन्दूराञ्जना दर्शादि सौभाग्य द्रव्या क्षत पुष्प माल्य बिल्व पत्र धूप दीप-नैवेद्य ताम्बूल दक्षिणादि षोडशो पचारैः पञ्चो पचारैः यथा-

---

देव्याः क्रोध समाकुलाः ॥ १२ ॥ शंखं चक्रं गदां शक्ति हलं च मुसला-युधम् ॥ खेटकं तोमरं चैव परशुं पाशमेवच ॥ १३ ॥ कुन्ता युधंत्रिशू-लं च शार्ङ्गमा युद्ध मुत्तमम् ॥ खड्ग चर्मत्रिशूलं च पट्टिशं मुद्गरं तथा ॥ १४ ॥ दैत्यानां देहनाशाय भक्ताना मभयाय च ॥ धार यन्त्या युधा नीत्थंदेवाना च हिता यवै ॥ १५ ॥ नमस्तेऽस्तु महारौद्रे महाघोर पराक्रमे ॥ महा बले महोत्साहे महाभयविनाशिनि ॥ १६ ॥ त्राहिमां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ प्राच्यां रक्षतु मा मैन्द्री आग्नेय्यामग्नि-देवता ॥ १७ ॥ दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्ग धारिणी ॥ प्रतीच्यां वारुणी रक्षे द्वायव्यां मृग वाहिनी ॥ १८ ॥ उदीच्यां पातु कौमारी ईशान्यां शूलधारिणी ऊर्ध्वं ब्रह्माणी मे रक्षे दधस्ता द्वैष्णवी तथा ॥ १९ ॥

एवं दशदिशो रक्षे चामुण्डा शव वाहना ॥ जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥ २० ॥ अजिता वाम पार्श्वे तु दक्षिणे चा पराजिता ॥ शिखामुद्योतिनी रक्षे दुमा मूर्ध्नि व्यवस्थिता ॥ २१ ॥ माला धरी ललाटे च भ्रुवौ रक्षे यशस्विनी ॥ त्रिनेत्रा चभ्रुवोर्मध्ये यम घन्टा च नासिके ॥ २२ ॥ शंखिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वार वासिनी ॥ कपोलौ कालिका रक्षेत्कर्ण मूलेतु शाङ्करी ॥ २३ ॥ नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ अधरे चा मृत कला जिह्वा यां च सरस्वती ॥ २४ ॥ दन्तान्रक्षतु कौमारी कण्ठ देशेतु चण्डिका ॥ घण्टिकाचित्र घंटा च महामाया च तालुके ॥ २५ ॥ कामाक्षी चिबुकं रक्षे द्वाचं मे सर्व मंगला ॥ ग्रीवायां भद्रकाली च पृष्ट वंशे धनुर्धरी ॥ २६ ॥ नील ग्रीवा वहिः कण्ठे नालिका नल कूवरी ॥ स्कन्धयोः खड्गिनी रक्षेद्बाहू मे

सं भवैर्वा दुर्गां दुर्गां सम्पूज्य प्रणम्य प्रार्थयेत् ॥ आगच्छ देवदेवेशि ! दैत्य दर्प निषू दनि ! ॥ पूजां गृहाण सुमुखि ? नमस्ते शङ्कर प्रिये ? ॥ सर्व तीर्थ मयं वारि सर्व देव समन्वितम् ॥ इमु घटं समागच्छ तिष्ट देव गणैः सह ॥ दुर्गे देवि ? समागच्छ सान्निध्यं कुरुवे ध्रुवम् ॥ बलिं पूजां गृहाण त्वं मष्टाभिः शक्तिभिः सह् ॥ महिषघ्नि महा माये चामुण्डे मुण्ड मालिनि ? ॥ द्रव्य मारोग्य विजयं देहि देवि ? नमः सदा ॥ सर्व मङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके ॥ शरण्ये त्र्यम्बके गौरी नारायणि नमोस्तुते ॥ रूप देहि यशो देहि भाग्यं भगवति देहिमे ॥ पुत्रंदेहि धनं देहि सर्वा न्कामा न्प्रदेहिमे ॥ एवं प्रार्थना नन्तरं सुगन्धि द्रव्यं देयम् ॥ अथ कन्या पूजा ॥--गणेशं वटुकं दुर्गां प्रणम्य, संकल्पः अद्येह मम श्रीदेवीप्रसादाद् विविध मनोऽभीष्ट कामना वाप्ति राज्य करणोत्तर कालिक देवी लोक गमन कामनया कुमारीं वटुकं च पूजन पूर्वकं भोज इष्यामि ॥ मन्त्रास्तर मर्यीलक्ष्मीं मातृणां रूपधार-

---

वज्र धारिणी ॥ २७ ॥ हस्तयो र्दण्डिनी रक्षेदम्बिका चांगुलीषु च ॥ नखा ञ्छूलेश्वरी रक्षेत्कुक्षौरक्षे त्कुलेश्वरी ॥ २८ । स्तनौ रक्षेन्महादेवी मनः शोक विनाशिनी ॥

हृदये ललिता देवी उदरे शूल धारिणी ॥ २९ ॥ नाभौ च कामिनी रक्षेद् गुह्यं गुह्ये श्वरी तथा ॥ पूतना कामिका मेढ्ं गुदे महिष वाहिनी ॥ ३० ॥ कट्यां भगवती रक्षे ज्जानुनीविन्ध्य वासिनी ॥ जंघे महाबला रक्षे त्सर्व कामप्रदायिनी ॥ ३१ ॥ गुल्फयो र्नारसिंही च पाद पृष्टे तु तैजसी ॥ पादांगुलीषु श्री रक्षे त्पादाधः स्थल वासिनी ॥ ३२ ॥ दंष्टां करालिनी रक्षेत केशां श्चैवोर्ध्व केशिनी ॥ रोम कूपेषु कौमारी त्वचं वागीश्वरी तथा ॥ ३३ ॥ रक्त मज्जा वसा मांसा न्यस्थि मेदांसि पार्वती ॥ अन्त्राणि काल रात्रीच पित्तं च मुकुटेश्वरी ॥ ३४ ॥ पद्मावती पद्म कोशे कफे चूडा मणिस्तथा ॥ ज्वाला मुखी नख ज्वाला मभेद्या सर्व संधिषु ॥ ३५ ॥ शुक्रं ब्रह्माणी मे रक्षे च्छायां छत्रेश्वरी तथा ॥ अहं कारं मनो बुद्धिं

रक्षेन्मे धर्मधारिणी ॥ ३६ ॥ प्राणा पानौ तथा व्यान मुदा नंच समानकम् ॥ वज्र हस्ता च मेरक्षेत्प्राणं कल्याण शोभना ॥ ३७ ॥ रसेरूपे च गन्धे च शब्देस्पर्शे च योगिनी ॥ सत्त्वं रजस्तम श्चैव रक्षे नारायणी सदा ॥ ३८ ॥ आयूरक्षतु वाराही धर्मं रक्षतु वैष्णवी ॥ यशः कीर्तिं च लक्ष्मीं-

णीम् । नव दुर्गात्मिकां साक्षात्कन्यामा वा ह्वाम्यहम् ॥ इत्या वाह्य तत्र पूजा मंत्रश्च ॥ जगत्पूज्ये जगद्धात्रि सर्व शक्ति स्वरूपिणी पूजां गृहाण कौमारि ! जगन्मात नमोस्तुते ॥ इति मन्त्रेण पाद प्रक्षालनादिभिः पूजयेयेत् भोजयेच्च नाना वस्त्र पक्वान्ना लङ्कारैः स्व शक्त्या देवी पूजा नन्तरं नवमी पर्यन्त प्रत्यहं वा कुर्यात् ॥ एकैकां पूजयेत्कन्यां मेक वृद्धया तथैव च ॥ द्विगुणा वापि प्रत्येकं नवकं च विशेषतः ॥ द्विवर्ष कन्या मारभ्य दश वर्षा वधि क्रमात् ॥ पूजयेत्सर्व कार्येषु यथा विध्युक्त मार्गतः ॥ अत ऊर्ध्वान्तु या कन्या सर्व कार्येषु वर्जिता ॥ आयुर्ष्य बल वृद्ध्यर्थं कुमारीं पूजयेन्नरः आयुः काम त्रिमूर्तिंतु त्रिवर्ग स्यफल प्रदाम् ॥ अल्प मृत्यु व्याधि पीड़ा दुःख दारिद्र नाशिनीम् ॥ आरोग्य सुख कामी च जय कामी तथैव च ॥ यशः कामी नरो नित्यं रोहिणीं प्रति पूजयेत् ॥ विद्यार्थी चा भयार्थी च राज्यार्थी च विशेषतः । शत्रूणां च विना शार्थी कालिकां पूजयेन्नरः ॥ ऐश्वर्य सुख कामो च पुत्रा कामी चयो नरः ॥ सङ्ग्रामे जय कामी च चण्डिकां प्रतिपूजयेत् ॥ दुःख दारिद्र नाशाय नृप समोहना यच ॥ महा पाप विना शार्थं शाम्भवी च प्रपूजयेत ॥ सर्व

---

च धनं विद्या च चक्रिणी ॥ ३९ ॥ गोत्र मिन्द्राणी मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ पुत्रान्रक्षेन्महालक्ष्मी भार्यां रक्षतुभैरवी ॥ ४० ॥ पन्थानं सुपथा रक्षेन्मार्गं क्षेम करी तथा ॥ राज द्वारे महालक्ष्मी र्विजया सर्वतः स्थिता ॥ ४१ ॥ रक्षा हीनं तु यत्स्थानं वार्जितं कवचेनतु ॥ तत्सर्वं रक्षमे देवी जयन्ती पापनाशिनी ॥ ४२ ॥ पद मेकं नगच्छेतु यदीच्छेच्छुभ मात्मनः॥ कवचे नावृतो नित्यं यत्र यत्रैव गच्छति ॥ ४३ ॥ तत्र तत्रार्थं लाभश्च विजयः सर्व कामिकः ॥ यं यं चिन्तयते कामं तंतं प्राप्नोति निश्चितम् ॥ ४२ ॥ परमैश्वर्य मतुलं प्राप्यते भूतले पुमान् ॥ निर्भयो जायते मर्त्यः संग्रामेष्व पराजित ॥ ४५ ॥ त्रैलोक्ये तु भवेत् पूज्यः कवचे नावृतः पुमान् ॥ इदंतु देव्याः कवचं देवाना मपि दुर्लभम् ॥ ४६ ॥ यः पठेत् प्रयतो नित्यं त्रिसंध्यं श्रद्धयान्वितः ॥ दैवी कला भवे त्तस्य त्रैलोक्ये चापराजितः ॥ ४७ ॥ जीवेद्वर्ष शतं साम मप मृत्युविव- र्जितः नश्यन्ति व्याधयः सर्वे लूता विस्फोटका दयः ॥ ४८ ॥ स्थावरं जङ्गमं चैव कृत्रिम चापिविद्विषम् ॥ अभिचाराणि सर्वाणि मन्त्रयंत्राणि भूतले ॥ भूचराः खेचराश्चैव कुलजा श्चोपदेशिकाः ॥ ४९ ॥ सहजा कुलजा माला डाकिनी शाकिनी तथा ॥ अन्त रिक्ष चरा घोरा डाकिन्यश्च महाप्रभाः ॥ ५० ॥ ग्रह भूत पिशा - चाश्च यक्ष गन्धर्व राक्षसाः ॥ ब्रह्म राक्षस वेतालाः ॥

लोकस्यशत्रूणांतपसाधनकर्मणि ॥ दुर्गांतु दुःखनाशायपूजयेद्यत्नतोबुधः ॥ सौभाग्य धनधान्या दिवाञ्छितार्थ फलाप्तये ॥ शुभद्रां पूजयेन्मर्त्यो दासी दासादिवृद्धये ॥अथत्रिमूर्त्तिपूजा॥त्रिपुरांत्रिपुराधारांत्रि वर्गं ज्ञानरूपिणीम् ॥ कामदां करुणो दारां कालीं च पूजयाम्यहम् ॥ कल्याणी पूजा मंत्रः ॥— कालादिभिः कला तीतां कारुण्य हृदयां शिवां ॥ कल्याण जननीं नित्यं कल्याणीं पूजयाम्यहम् ॥ रोहिणी पूजा मन्त्रः ॥—अणिमा दिगुणा धारा मकारा द्यक्षरात्मिकाम् ॥ अनन्त शक्ति कां लक्ष्मीं रोहिणीं पूजयाम्यहम् । कालिका पूजा मंत्रः ।—कामं चारिशुभा कान्तां कालचक्र- स्वरूपिणीम् । कामदां करुणो दारां कालीं च पूजयाम्यहम् ॥ चण्डिका पूजा मंत्रः ।—चण्डवीरां चण्ड मायां चण्डः मुण्डप्रभञ्जनीम् ॥ पूजयामि सदा देवीं चण्डिकां चण्ड विक्रमम् ॥ शाम्भवी पूजा मन्त्रः । सदानन्द करीं शान्तां सर्व देव नमस्कृतम् ॥ सर्व भूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ॥ दुर्गा पूजा मन्त्रः ॥—दुर्गमे दुस्तरे कार्ये भव- दुःख विनाशिनीम् ॥ पूजयामि सदाभक्त्या दुर्गा दुर्गाति नाशिनीम्

---

कुष्माण्डा भैरवा दयः ॥ ४१ ॥ नश्यन्ति दर्शना त्तस्य कवचे हृदि- संस्थिते ॥ मानो न्नतिमवेन्नाज्ञ्य तेजो वृद्धि करं परम् ॥ ४२ ॥ यशसा वर्धतेसोऽपि कीर्त्ति मण्डलभूतले ॥ तस्माञ्जपेत्सदा भक्त्या कवचं कामदं मुने ॥ ४३ ॥ जपेत्सप्त शतीं चण्डीं कृत्वातु कवचं पुरा ॥ यावद् भू मण्डल धत्ते सशैल वनका ननम् ॥ ४४ ॥ तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्र पौत्रकी ॥ देहान्ते परमं स्थानं यत्सुरै रपि दुर्लभम् ॥ ४५ ॥ आप्नोति पुरुषो नित्यं महामाया प्रसादतः ॥ लभते परम रूपं शिवेन सह मोदते ॥ ४६ ॥ इति वाराह पुराणे हरि हर ब्रह्म विर चितं देव्याः कवचं समाप्तम् ॥

ॐ नमश्चण्डिकायै जयन्ती मङ्गला काली भद्रकाली कपा- लिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तुते ॥ १ ॥ जयत्वं देवि चा मुण्डे जय भूतार्ति हारिणी ॥ जय सर्व गते देवि काल रात्रि नमोऽस्तुते ॥ २ ॥ मधुकैटभ भवि द्राविधातृ वरदे नमः ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥ महिषा सुर निर्णाशि भक्तानां सुखदे नमः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥ रक्त बीज वधे देविचण्डमुण्ड विनाशिनी ॥ रूपं देहि जय देहि यशो देहि द्विषो जहि ॥ ५ ॥ शुंभस्यै वनि शुम्भस्य धूम्रा क्षस्य चमर्दिनी ॥ रूपं देहिजयंदेहि यशो देहि द्विषो जहि ॥ ६ ॥ अचिन्त्य रूप चरिते सर्व शत्रु विनाशिनी ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥ नतेभ्यः सर्वदा भक्त्या

॥ शुभद्रा पूजन मन्त्रः ॥—सुन्दरीं स्वर्ण वर्णाभां सुख सौभाग्य दायिनीम् । शुभद्र जननीं देवीं सुभद्रां पूजयाम्यहम् ॥ भक्तितः कुमारीणां यत्नत पूजा कार्या ॥ कञ्चुकै श्चैव वस्त्रैश्च गन्ध पुष्पा क्षतादिभिः ॥ नाना विधैर्भक्ष्य भोज्यै भोजयेत् पायासादिभिः ॥ इति कुमारी पूजा ॥ अथ सप्त सती पाठ विधिः ॥ सकल पूजा नन्तरं सप्तसत्यादि पाठ जपादिकं कुर्यात् ॥ ब्राह्मण द्वारा कुर्यात् ॥ श्रुयाद्वा ॥ अथ. सप्त सती पाठ वेद पाठानेक पुराणान्तर गत स्तोत्र पाठ गायत्री जप नवार्णव मन्त्र जाप स्वेष्ट देवता मन्त्र जपादीन् यथा शक्ति कुर्यात् ॥ अथसंकल्पः ॥ अद्येह् ममभूत भविष्य वर्तमान जन्म जन्मा न्तराणां दुष्कृत नृवृत्ति दुष्कृतोत्थ समस्त पाप क्षय शत्रु दस्यु राज शस्त्रा न शता यौघहेतुक भया भाव महा मारी समुद्भवा शेषो प सर्गापगम त्रिविधो त्पातो पशम सर्वां पच्छान्ति पूर्वक रक्षो भूत पिशाच ग्रह पर कृत्या बालग्रहादि सकल बाधा शमयित्रो श्री दुर्गा सान्निध्य द्वारा सर्व गुणो त्पत्ति दीर्घायु विपुल धन धान्य पुत्र पौत्राद्य नव च्छिन्न सन्तति वृद्धर्थ सकल कुलानन्द स्थिर लक्ष्मी कीर्ति लाभ सुख प्राप्ति सदभिष्ट सिद्धि मूलक महा काली महा लक्ष्मी महा सरस्वती प्रीतये मार्कण्डेय पुराणान्तर्गत सावर्णिः-

---

चण्डिके दुरितापहे ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ ६ ॥
स्तुवद्भ्यो भक्ति पूर्वं त्वा चण्डिके व्याधि नाशिनि ॥ रूपं देहि जयं देहि यशो देहि द्विपोजहि ॥ १० ॥ चण्डिके सततं ये त्वा मर्च यन्तीह भक्तितः ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ ११ ॥ देहि सौभाग्य मारोग्यं देहि मे परमं सुखम् ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ १२ ॥ विधेहि द्विपतां नाशं विधेहि बल मुच्चकैः ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ १३ ॥ विधेहि देवि कल्याणं विधेहिपरमां श्रियम् ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ १४ ॥ सुरासुर शिरोरत्ननिघृष्ट चरणे ऽम्बिके ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ १५ ॥ विद्यावन्तं यशस्वन्तं लक्ष्मी वन्तं जनं कुरु ॥ रूपं देहि जयं देहि यशो देहि द्विपो जहि ॥ १६ ॥ प्रचण्ड दैत्य दर्पघ्ने चण्डिके प्रणता यमे ॥ रूपं देहि जय देहि यशो देहि द्विपो जहि ॥ १७ ॥ चतुर्भुजे चतुर्वक्त्र संस्तुते परमेश्वरि ॥ रूपं देहि जयं देहि यशो देहि द्विपो

सूर्य तनय इत्या राभ्य सावर्णि र्भविता मनुः तथा च रहस्यादिः पर्यन्तंपाठं कर्तु मध्या रम्य नवमी पर्यन्तं ब्रह्मणानां पूजनं वरणं च करिष्ये ॥ पाठान्ते यथा शक्ति वलिदान छाग कुष्माण्ड फलै-र्वा वक्ष्य माण विधिना कार्यम् ॥ अथ द्वितियादि दिन कृत्यम् ॥ द्वितीयायां श्री परमेश्वर्यै पट्ट केशरज्जु कङ्कति कां दद्यात् ॥ तृतीयां दर्पणं सिन्दूरं कज्जलम् ॥ चतुर्थ्यां मधु शर्करा दधि कांश्य पात्रान्नं कांश्य थालि कास्य मधु पर्कम् ॥ कज्जलम् ॥ पञ्चम्यामुद्वर्त्तनं सौवर्णं रौप्यंश भूषणमथवा वस्तुष्पं दध्यात् ॥ प्रति संध्यं प्रति पद्यादि विधिषु पूजनं यथा शक्त्या ॥ द्वितीयायां मध्याह्नाउ ऊर्ध्वं संध्या काला दर्वाक् बाल चन्द्र दर्शनं कुयात् । शंखार्घे श्वेत चन्दन दध्यक्षत तोयं निधान जानुना वनिं स्पृष्ट्वा दक्षिण हस्तेनचन्द्रार्घ्यदानम् ॥ तत्र मंत्रः ॥ अत्रि नेत्र समुद्भूत क्षीरो दार्णव सम्भव ॥ गृहाणार्घ्यं शशां केश रोहिण्या सहित प्रभो ॥ प्रणाम मंत्रः ॥ नमः सुधां शवे तुभ्य लक्ष्मी

---

जहि ॥ १८ ॥ कृष्णेन संस्तुते देवि शश्वद्भक्त्या सदाम्बिके ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥ हिमाचल सुता नाथ संस्तुते परमेश्वरि ॥ रूपं देहि जयं देहि यशोदेहि द्विषो जहि ॥ २० ॥ इन्द्राणीपति सद्भाव पूजिते परमेश्वरि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१ ॥ देवि प्रचण्ड दोर्दण्ड दैत्य दर्पविनाशिनी ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २२ ॥ देवि भक्त जनो द्दाम दत्ता नन्दो दये ऽम्बिके ॥ रूपं देहि जयं देहि यशोदेहि द्विषो जहि ॥ २३ ॥ पत्नीं मनो रमां देहि मनो वृत्ता नुसारिणीम् । तारिणीं दुर्ग संसार सागरस्य कुलोद्भवाम् ॥ २४ ॥ इदं स्तोत्रं पठित्वातु महास्तोत्रं पठेन्नरः ॥ सनुसप्त शता संख्याव रमाप्नोति सम्पदाम् ॥ २५ ॥ इति मार्कण्डे पुराणे अर्गला स्तोत्रं समाप्तम् ॥ ३ ॥

ओं नमःश्चण्डिकायै--मार्कण्डेयउवाच--विशुद्ध ज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ॥ श्रेयः प्राप्ति निमित्तायनमः सोमार्धधारिणे । १ ॥ सर्वमेतद्विजानीया न्मन्त्राणामपिकीलकम् ॥ सोऽपिक्षेम मवाप्नोति सततंजाप्य तत्परः । २ ॥ सिद्धयन्त्यु च्चाटनादीनि वस्तूनि सकला न्यपि ॥ एतेन स्तुवतां देवीं स्तोत्र मात्रेणसिद्धयति ॥ ३ ॥ न मन्त्रं नौषधं तत्र न किंचिदपि विद्यते ॥ विना जाप्येन सिद्धयेत सर्वं मुच्चाटना दिकम् । ४ ॥ समग्राण्यपि सिद्धयन्ति लोक शङ्का मिमां हरः ॥ कृत्वा निमन्त्रया मास सर्व मेव मिदं शुभम् ॥ ५ ॥ स्तोत्रं वै चण्डिकायाः

प्रातर्नमोनमः ॥ निष्कलङ्किन् कला धारिन् गङ्गाधर शिरो मणे ॥ शंभोर्जटा जूट वासिन् बाल चन्द्र नमो स्तुते ॥ इति दद्यात् ॥ अथ षष्ठ्यां बिल्वनिमन्त्रणविधिः ॥ शुक्ल षष्ठ्यां जेष्ठा युतायां सूर्यास्तः वेलायां बिल्व तरु सन्निधौगत्वा उपवासादि कृत नित्य क्रियःपूर्व मुखं उत्तर मुखं वा उपविश्याऽऽचम्य सन्ध्या काल समये दीपं प्रज्वाल्य संकल्पं कुर्यात् ॥ अद्येह० श्री दुर्गा प्रीति कामः श्री वृक्ष पूजन पूर्वकं बिल्व निमन्त्रणमहंकरिष्ये ॥ ॐ भगवति दुर्गे इहा गच्छ-इहतिष्ठे त्या वाह्य । पाद्यादि नैवेद्यान्तो पचारैः सम्पूजयेत् ॥ तत्र-मंत्रः ।—रावणस्य वधार्थाय रामस्या नुग्रहायच । अकाले ब्रह्मणा-न्बोधो त्वया देव्या श्रितः पुरा ॥ अहं मप्याश्रितः षष्ठ्यां साया-न्हे बोधया म्यतः ॥ पूजयामीह दुर्गे त्वां सर्व शत्रु विनाशिनीम् ॥ देव देवांश संभूतः ? श्री वृक्षः चण्डिका प्रियः ॥ आमन्त्रयामि पूजार्थं शाखा मेकंप्रयच्छमे ॥ इत्यामंत्र्य । यथोक्त विधिना बिल्व

---

यात्तु तच्च गुप्तं चकार सः ॥ समाप्नोतिः सु पुण्येन तां यथा वद्धि यन्त्रणाम् ॥ ६ ॥ सोऽपिक्षेममवाप्नोति सर्वमेव नराधमः । कृष्ण यां वा चतुर्दश्यां मष्टम्यां वासमाहितः ॥ ७ ॥ ददातिप्रति गृह्णाति नान्य थैषां प्रसिद्ध्यति ॥ इत्थं रूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥ योनिष्कीलांविधायैनां नित्यं जपति संस्फुटम् ॥ ससिद्धःसगणः सोऽपि गन्धर्वोजायतेनरः ॥ ९ ॥ नचैवा प्यटत स्तस्य भयं क्वापि हि जायते ॥ नाप मृत्यु वंशयाति मृतो मोक्ष मवाप्नु यात् ॥ १० ॥ ज्ञात्वा प्रारभ्य कुर्वीत न कुर्वाणो विनश्यति ॥ ततोज्ञात्वेव संपन्न मिदं प्रारभ्यते बुधैः ॥ ११ ॥ सौभाग्यादि च यत्किंचिद् दृश्यते ललना जने ॥ तत्सर्वं तत्प्रसादेन तेन जाप्य मिदंशुभम् ॥ १२ ॥ शनैस्तु जप्यमानेऽस्मिन्स्तोत्रे सम्पत्तिरुच्चकैः ॥ भव त्येव समग्रापि ततः प्रारभ्य मेवतत् ॥ १३ ॥ ऐश्वर्यं यत्प्रसादेन सौभाग्या रोग्य संपदः ॥ शत्रु हानिः परो मोक्षः स्तूयते सान किं जनैः ॥ १४ ॥ इतिभगवत्याः कीलक स्तोत्रं समाप्तम् ॥ ३ ॥ शुभंभूयात् ॥

श्री गणपति र्जयति ॥ ॐ अस्य श्री नवार्णमन्त्रस्य ॥ ब्रह्मा विष्णुरुद्रा ऋषयः ॥ गायत्र्युष्णिग नुष्टुभ श्छन्दांसि ॥ श्रीमहा काली महा लक्ष्मी महा सरस्वत्यो देवताः ॥ ऐं बीजम् ॥ ह्रीं शक्तिः । क्लीं कीलकम् । श्री महाकाली महा लक्ष्मी महा सरस्वती प्रीत्यर्थं जपे विनियोगः ॥ ब्रह्मविष्णु रुद्र ऋषिभ्यो नमः शिरसि ॥ गायत्र्युष्णिग नुष्टुप्छन्दोभ्यो नमोमुखे ॥

वृक्षाधि वासं कृत्वा नृत्य गीत वाद्योत्सवै रात्रौ जागरणं कृत्वा ततः पुनः । ॐ विल्व इहागच्छ इहा तिष्ठे स्या वाह्य विल्वाय नमः । इति मन्त्रेण पाद्यादि सिन्दूर गन्ध पुष्पाक्षत धूप दीप ताम्बूल नैवेद्यान्त दधात्, विल्व वृक्षस्पृष्ठा मन्त्र पठेत् । श्री-शैल शिखरे जातः ? श्री फलः ? श्री निकेतन । नेतव्योसिसमागच्छ पूज्यो दुर्गास्वरूपतः ॥ इति पठेत् ॥ अथ सप्तमी दिन कृत्यम् ॥ सप्तम्यां प्रातरा रम्य पत्रिका पूजनान्तर पर्यन्तं पुस्तकादौ सरस्वतीं पूजयेत् ॥ मन्त्र मत्रे वक्ष्यते रुद्र यामलेः—मूल ऋक्षे सुराधीश पूजनीया सरस्वती ॥ इति ॥ सप्तम्यां मूल युक्तायां वा केवलायां पत्रिका प्रवेशः । तद्दिने प्रातः समये नित्य कर्म कृत्वा पुन विल्व समीपं गत्वा प्रणम्य प्रार्थयेत् । विल्व वृक्ष महाभाग सदात्वं शङ्कर प्रिय ॥ गृहीत्वा तव शाखां च पूज्या दुर्गेति चस्मृतिः ॥ उत्तिष्ठ पत्रिके देवि सर्व कल्याण हेतवे ॥ पूजां गृहाण सफला मस्माकं वरदा भव ॥ मेरु मन्दर कैलाश हिम-वच्छिखरे गिरौ ॥ जाता श्री फल वृक्षोत्व माम्बिका या सदा प्रिये इति प्रार्थ्य ॥ विल्व वृक्षस्य दक्षिणस्यां दिशि श्री फल युग सहितां शाखा गृहीत्वा गन्धादिभिः सम्पूज्य ॥ ॐ छिन्दि फट् अस्त्राय नमः । ॐ हुं फट् स्वाहा इति मन्त्रेण सच्छिन्द्य तच्छा खात्रोटनं कृत्वा वृक्ष

---

महा काली महा लक्ष्मी महा सरस्वती देवताभ्यो नमः हृदि ॥ ऐं बीजाय नमो गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ क्लीं कील काय नमोनाभौ ॥ इति मूलेन करौ संशोध्य ॥ ॐ ऐं अंगुष्ठा भ्यांनमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः । ॐ क्लीं मध्यमाभ्यां नमः ॥ ॐ चामुण्डायै अना-मिकाभ्यां नमः । ॐ विच्चे कनिष्ठिकाभ्यां नमः ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतल कर पृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ ततोऽक्षर न्यास. ॥ ॐ ऐं नमः शिखायाम् ॥ ॐ ह्रीं नमो दक्षिण नेत्रे ॥ ॐ क्लीं नमो वाम नेत्रे ॥ ॐ चां नमो दक्षिण कर्णे ॥ ॐ मुं नमो वाम-कर्णे ॥ ॐ डां नमो दक्षिण नासायाम् ॥ ॐ यैं नमोवाम नासायाम् ॥ ॐ विंनमोमुखे ॐ च्चें नमो गुह्ये ॥ एवं विन्यस्याष्ट वारं मूलेन व्या-पकं कुर्यात् ॥ ॐ ऐं प्राच्यै नमः ॥ ॐ ह्रीं दक्षिणायै नमः ॥ ॐ ह्रीं नैऋत्यै नमः ॥ ॐ क्लीं प्रतीच्यै नमः ॥ ॐ क्लीं वायव्यै नमः ॐ चामुण्डायै उदीच्यै नमः । ॐ चामुण्डायै ईशान्यै नमः । ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ऊर्ध्वायै नमः । ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै नमः । अथ ध्यानम् ॥ खड्ग चक्र गदेषु चाप परिघाञ्छूलं भुशुण्डीं शिरः शङ्खं संदधतीं करै स्त्रि नयनां सर्वाङ्ग भूषा वृताम् ॥ नीलाश्म द्युति

देवतीर्थ । कदली स्तम्भ दाडिम धान्य वृक्ष हरिद्र वृक्ष मानक कचूर बिल्व पत्रा शोक जयन्ती द्रोण पुष्पान्य पुष्प फलं चयत्लम्यं सम्पूर्ण मा हृत्य प्रार्थयेत् ॥ शाखाच्छेदेन यद् दुःखं यत्कृतं हिमया प्रभो ॥ क्षम्यतां मम वृक्षेश बिल्व वृक्ष नमोस्तुते ॥ बिल्व वृक्ष महाभाग सर्वदा शङ्कर प्रिय ॥ गृहीत्वा तव शाखां च देवी पूजां करोम्यहम् ॥ इति प्रार्थ्य ॥ ॐ ह्रीं हुँ क्लीं चामुण्डे चल चल शीघ्रं त्र्यम्बिके प्रविश ॥ चाण्डिस्त्वं दुर्गा रूपासि सुर तेजा महाबले । प्रविश्य तिष्ठ यज्ञोस्मिन् यावत् पूजां करोम्यहम् ॥ इति प्रविश्यस्थापयेत् ॥ ॐ स्थां स्थीं इति स्थिरोभव । आरोपितासि दुर्गेत्वं मृण्मयं श्री फलत्वचा ॥ स्थिरी भूता च त्वं देवि गृहाण कामदा भव ॥ इति स्थिरी कृत्य पत्रिका मुत्थाप्य दोलायामारोप्य दोलां स्कन्धे निधाय मौनी सन् गृह समीपे आनीय नाना वादित्रादि मङ्गल पुरस्सर पत्रिकायां यथामिलितो पचारैः सम्पूज्य ततो देवी गृहाभ्यन्तरे सायं काले पत्रिकां प्रवेशयेत् ॥ अथ सप्तम्यां सन्ध्योत्तर कृत्यम् ॥ ततो भूतादीनां कुष्माण्ड बलिंदद्यात् ॥ ॐ भूत इहागच्छेहतिष्ठे त्या वाह्यसंस्थाप्य भूतादिभ्यो नमः ॥ इति

---

मास्य पाद दशकं सेवे महा कालिकां यामस्तौत्स्वपिते हरौ कमल जोहन्तुं मधुं कैटभम् ॥ १ ॥ अक्षस्रक्परशुं गदेषु कुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्ति मसिंच चर्म जलजं घण्टा- सुरा भाजनम् ॥ शूल पाश सुदर्शने च दधतीं हस्तैः प्रसन्नां नतां सेवेसै रिभ मर्दिनी मिह महा लक्ष्मीं सरोजस्थिताम् ॥ २ ॥ घण्टा शूल हलानि शङ्ख मुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनान्त विलसच्छीतांशु तुल्य प्रभाम् ॥ गौरी देह समुद्भवां त्रिनयना माधार भूतामहा पूर्वा मंत्र सरस्वती मनुभजेच्छुम्भादि दैत्यार्दिनीम् ॥ ३ ॥ अष्टो चर शत सप्तशतीमंत्रराज ...ऐं ह्रीं क्लीं चामुण्डायैविच्चे ॥ बीज त्रयायविद्महे तत्प्रधानायधीमहेतन्नशक्ति प्रचो दयात् ॥ १०८ ॥ जपेत् ॥ इति नवार्ण विधिः ॥

अथ रात्रि सूक्तम् ॥ विश्वेश्वरीं जगद्धात्रीं स्थिति संहार कारिणीम् । निद्रां भगवतीं विष्णोरतुलां तेजसःप्रभुः ॥ १ ॥ ब्रह्मोवाच ॥ त्वं स्वाहात्वं स्वधा त्वं हि वषट् कार स्वरात्मिका ॥ सुधात्व मक्षरे नित्ये त्रिधा मात्रात्मिकास्थिता ॥ २ ॥ अर्ध मात्रा स्थिता नित्या यानुच्चार्या विशेषतः ॥ त्वमेव संध्या सावित्री त्व देवि जननी परा ॥ ३ ॥ त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ॥ त्वयै तत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥४॥

पाद्यादि नैवेद्यान्तैः सम्पूज्य प्रार्थयेत् ॥ भूता प्रेता पिशाचश्च येच सन्त्यत्र भूतले ॥ तेगृह्णन्तु मयादत्तं बलिमे तत्प्रसादितम् ॥ पूजिता बलि पुष्पाद्यैस्तथा बलिभिस्तथा देशा दस्माद्विनिः सृत्य पूजां गृह्णन्तु यद्भवाम् ॥ एष माप बलिः भूतादिभ्यो नमः सर्षपंच विकीर्य वस्तु परिदीपं प्रज्वाल्य गृहाद्वहिः स्थापयेत् ॥ ततः सप्तम्यां पुस्तका दौ प्रभाते वा पत्रिका पूजनानंतरं वा सरस्वतीं स्थापयेत् यथा। वेद शास्त्र पुराणनि स्मृति व्याकरणानिच ॥ ज्योतिषं मन्त्र विद्यां च सर्वं विद्या मनेक धा। विद्वतां पुस्तके मातर्निश्चयं कुरुमेगृहे ॥ संजीवन कुलेजातं पुस्तकाय नमो नमः। इति मन्त्रादिना पूजयेत् ॥ अद्येहे त्यादि सर्वापच्छान्ति सर्व विध सौख्य प्राप्ति पूर्वक शरत्कालीय नव दुर्गा शाकम्बरी स्थापन मह करिष्ये ॥ मृण्मयीं दुर्गा प्रतिमां सकलां बिल्व शाखां, कदल्यादि नव पत्रिकां च संस्थाप्य पञ्चामृतेन संस्थाप्य एकत्र इति प्रति- ष्ठाप्य पूजयेत् ॥ पत्रिका नामानि । कदली दाडिमं धान्यं हरिद्रा मानकं कचुम् ॥ बिल्वा शोकौ जयन्ती च विज्ञेया नवप- त्रिका ॥ प्रत्येकं नव पत्रिका पूजनं यथा शक्ति कृत्वा स्नानीयं दद्यात् ॥ तद्यथा ॥ आत्रेयी नर्मदा गङ्गा यमुना च सरस्वती ॥ शरयू गण्डकी पुण्या श्वेत गङ्गा च कौशिकी ॥ उर्वी च पाताले स्वर्गे मन्दाकिनी तथा ॥ सर्वाः सुमन सोभूत्वा शृङ्गारैः स्नपयन्तुवै ॥

---

विसृष्टौ सृष्टि रूपा त्वं स्थिति रूपा च पालने ॥ तथा संहृति रूपान्ते जगतोऽस्य जगन्मये ॥ ८ ॥ महा विद्या महा माया महा मेधा महास्मृतिः। महामोहा चभवती महा देवी महासुरी ॥ ६ ॥ प्रकृतिस्त्वं चसर्वस्य गुण त्रय भाविभाविनी ॥ काल रात्रिमहारात्रिर्मोहरात्रिश्च दारुणः ॥ ७ ॥ त्वं श्री स्त्वमीश्वरी त्वं ह्रीं स्त्वं बुद्धिर्बोध लक्षणा ॥ लज्जा पुष्टि स्तथातुष्टि स्त्वं शान्तिः क्षान्तिरेवच ॥ ८ ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा शङ्खिनी चापिनी-बाण भुशुण्डी परिघा युधा ॥ ६ ॥ सौम्या सौम्य तरा शेष सौम्येभ्यस्त्वति सुन्दरी ॥ परा पराणां परमात्वमेव परमेश्वरी ॥ १० ॥ यच्चकिंचित्क्वचिद्वस्तुसद सद्वाखिलात्मके ॥ तस्य सर्वस्य या शक्तिः सात्वं किं स्तूयसे तदा ॥ ११ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ।. सोऽपिनिद्रावशं नीतः कस्त्वांस्तोतुमिहेश्वरः ॥ विष्णुः शरीर ग्रहण मह मीशान एव च ॥ कारि तास्ते यतोऽ तस्त्वां कः स्तोतुं शक्ति मान्भवेत् ॥ १३ ॥ सा त्वमित्थं प्रभावैः स्वैरुदारै र्दवि संस्तुता ॥ मोह यैतौ दुराधर्षौ वसुरौ मधु कैटभौ ॥ १४ ॥ प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥ बोध

कदल्यै नमः । कदल्या ब्रह्माणी ह्यागच्छे हतिष्टे त्या वाह्य ब्रह्माण्यै नमः इति पाद्यादि नैवेद्यान्त दद्यात् ॥ दाडिम्या रक्त चण्डिकाम् । सर्वेषा मधिपो देव ईशानो नाम नामतः ॥ शूलपाणि र्महादेवो श्रृङ्गारै स्नपयन्तुते ॥ पूर्व वद् इहागच्छे त्यादिना सम्पूज्येत् ॥ धान्ये लक्ष्मीम् । पुण्यस्त्वं पुण्य शाखाना मङ्गलानां च मङ्गलम् । विष्णुना विधृतो नित्य मतः शान्ति प्रयच्छमे ॥ मन्दाकिन्या स्तुते वारि सर्व पाप हर शुभम् । स्वर्गस्रोतस्तु वैष्णव्यं श्रृङ्गारैस्नपयन्तुते ॥ पूर्व वत्सम्पूजयेत् ॥ मानके चामुण्डम् । गन्धाढ्यं चन्दनं दिव्यं तच्छीतल सुरप्रियम् ॥ सर्व पाप हरं चैव श्रृंगारै स्नपयन्तुते ॥ पूर्ववत्सम्पूजयेत् ॥ कच्चे कालिकाम्—सागरा सरितः सर्वा सरः स्रोतोदमस्तथा ॥ सर्वौषधीभिः पापघ्ना शतशः स्नपयन्तुते ॥ सर्वाः सुमनसो भूत्वा श्रृगारैस्न पयन्तुते ॥ पूर्व वत्सम्पूजयेत् ॥ बिल्वेशिवाम् ॥ हिमवद्धेम कूटाद्या श्चाधिविश्चन्तु पर्वताः निर्झरोदक पूर्णेन पष्टेन कलशे नतु । सर्वा सुमन सोभूत्वा श्रृंगारै स्नपयन्तुते ॥ पूर्ववत्सम्पूजयेत् ॥ अशोके शोक हारिणीम्

---

श्चक्रियता मस्य हन्तु मेतौ महा सुरौ ॥ १५ ॥ इति ॥ श्री गणेशाय नमः ॥ अथ सप्त शती न्यासः ॥ अथ प्रथम मध्यमो त्तम चरि त्राणां ब्रह्म विष्णु रुद्रा ऋषयः । श्री महा काली महा लक्ष्मी महा सरस्वत्यो देवताः ॥ गायत्र्युष्णिग नुष्टु भश्छन्दांसि ॥ नन्दा शाकम्भरी भीमाः शक्तयः ॥ रक्त दन्तिका दुर्गा भ्रामर्यो बीजानि ॥ अग्निर्वायुः सूर्यस्तत्त्वानि ॥ ऋग्यजुः साम वेदाध्यानानि ॥ सकल कामना सिद्धयें श्री महा काली महालक्ष्मी महा-सरस्वती देवत प्रीत्यर्थं जपे विनियोगः । तत्रादौ न्यासा ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥ शङ्खिनी चापिनी वाण भुशुण्डी परिघायुधा ॥ अंगुष्ठाभ्या नमः ॥ शूलेन पाहिनो देविपाहि खड्गेन चाम्बिके ॥ घण्टा स्वनेन नः पाहि चापज्यानिः स्वनेनच ॥ तर्जनी भ्या नमः ॥ प्राच्या रक्ष प्रतीच्या च चण्डिके रक्ष दक्षिणे ॥ भ्रामणे नात्म शूलस्य उत्तरस्या तथेश्वरि ॥ मध्यमाभ्या नमः ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्तिते ॥ यानि चात्यर्थ घोराणि तै रक्षा स्मां स्तथा भुशम् ॥ अनामिकाभ्यां नमः ॥ खड्ग शूलगदा दीनि यानि चास्त्राणि ते ऽम्बिके ॥ कर पल्लव सङ्गीनि तैरस्मा न्रक्ष सर्वतः ॥ कनिष्ठि काभ्यां नमः ॥ सर्व स्वरूपे सर्वे शे सर्व शक्ति समन्विते ॥ भयेभ्य स्त्राहि नो देवि दुर्गे देवि नमो

॥ स्नपयेन्तु सुरा सर्पि दधि क्षीर जलै स्तथा ॥ सर्वा सुमनसो भूत्वा शृंगारैः स्नपयन्तु ते ॥ पूर्ववत्सम्पूजयेत् ॥ जयन्त्यां कार्त्तिकाम् ॥– दुर्गा चण्डी स्वरी चण्डी वाराही कार्तिकी तथा ॥ हरसिद्धि तथा काली रुद्राणी वैष्णवी तथा ॥ भद्रकाली विशालाक्षी भैरवी सर्व रूपणी ॥ सर्वा सुमनसो भूत्वा शृङ्गारैः स्नापयन्तु ते ॥ पूर्ववत्सम्पूज्य ॥ तत्रैव तत्तका दींश्चस्नापयेत् पूजयश्च ॥ तत्काया स्वयं चान्ये पाताल तल वासिनः ॥ सर्वा सुमनसो भूत्वा शृङ्गारैः स्नापयन्तु ते ॥ अनेन प्रकारेण प्रत्येकं पत्रिकान् स्नापयित्वा पूजयेत् ॥ ततो विल्व फल शाखायां श्री परमेश्वरी मा वाहयेत् । अथा वाहनम् ॥ आवाहयाम्यहं देवीं श्री फले मृण्मये तथा ॥ आयुरारोग्य मैश्वर्यं देहि देवि नमः सदा । कैलाश शिखरे देवी हिमाद्रे हिमपर्वतात । आगन्छ विल्व शाखायां चण्डिके कुरु सन्निधम् ॥ स्थापितासि महादुर्गे । पूजयेत्वा प्रसीदमे । दुर्गे देवि । इहा गच्छ सान्निध्य मम कल्पय ॥ यज्ञ भागान्गृहाणत्वं योगिनी कोटिभिः सह ॥ इत्यावाह्य सर्वोप यतं त्रिकीर्य ॥ ओंदुर्गे-दुर्गे रक्ष स्वाहा दुर्गायै नमः ॥ जयन्ती मङ्गला काली चेति पाद्यार्घ्यां चमनीय मधुपर्क पञ्चामृत शुद्धस्नान वस्त्रा

---

ऽस्तुते ॥ कर तल कर पृष्टाभ्यां नमः ॥ एवं हृदयादिषु ॥ खड्गनी शूलिनी घोरा० हृदयायं नमः ॥ शूलेन पाहिनो देवी० शिरसे स्वाहा ॥ प्राच्यां रक्ष प्रतीच्यांच० शिखायै वृ षट् ॥ सौम्यानि यानि रुपाणि० कवचाय हुम् ॥ खड्ग शूल गदा दीनि० नेत्र त्रयाय वौ षट् ॥ सर्व स्वरूपे सर्वेशे० अस्त्राय फट् ॥

अथ ध्यानम्

विद्युद्दाम सम प्रभां मृग पति स्कन्धस्थितां भीषणां कन्याभिः करवाल खेट विल सद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्र गदासि खेट विशिखां श्चापं गुणं तर्जनीं बिभ्राणा मनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ १ ॥ इति ध्यानम् ॥ प्रथम चरित्रस्य ब्रह्मा ऋषिः महाकाली देवता गायत्रीच्छन्दः, नन्दा शक्तिः, रक्त दन्तिका बीजम् । अग्निस्तत्त्वम्, ऋग्वेदः स्वरूपम्, श्री महाकाली प्रीत्यर्थं प्रथम चरित्र जपे योगः विनि ॥ अथ ध्यानमूलङ्ग चक्र गदेषु चाप परिघाञ्छूलं भुशुण्डीं शिरः शंखं सन्दधतीं करै स्त्रिनयनां सर्वाङ्ग भूषा वृताम् ॥ नीलाश्म द्युति मास्य पाद दशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुकैटभम् ॥ ॥ मार्कण्डेय उवाच ॥ १ ॥ सावर्णिः सूर्य तनयो योमनुः कथ्यतेऽष्टम. ॥ निशामय तदु पत्तिं विस्तराद्गदतो मम ॥ २ ॥ महामाया

भूषण गन्धाक्षत पुष्प सिन्दूर कज्जलादि द्रव्य धूप दीप नैवेद्य ताम्बूलादि समस्त पत्रिका स्वरूपायै भगवत्यै दुर्गा देव्यै नमः।

इत्यादीनां दत्वा नमस्कारः ॥ उम चण्डे रुद्र चण्डे चण्डोग्रे चण्ड नाशिनी ॥ चण्डिके चण्ड वत्याम्य चण्डि ! तुभ्यं नमोनमः ॥ महिषघ्नि महामाये चामुण्डे मुण्ड मालिनि ॥ क्षेम मारोग्य मैश्वर्य देहि देवि ! नमोऽस्तुते ॥ इतिप्रणम्य प्रार्थयेत् ॥ विल्व पत्र मादाय ॥ सुधोद्भव च श्री वृक्षं शङ्करस्य सदा प्रियम्। पवित्रंते प्रयच्छामि विल्व पर्णं सुरेश्वरि द्रोण पुष्पमादाय। ब्रह्म विष्णु शिवा दीनां द्रोण पुष्प सदा प्रियम् ॥ तत्ते दुर्गे। प्रयच्छामि सर्व कामार्थ सिद्धये ॥ कुङ्कुमेन समालिप्ते चन्दनेन विले पिते ॥ विल्व पत्र कृताऽऽपीडे दुर्गे ह' शरणं गतः ॥ रूपं देहि यशो देहि, भगंभगवति तथा ॥ पुत्रान्देहि धनन्देहि सर्वान्कामान्प्रदेहिमे ॥ अथ प्रत्येक नव पत्रिका पूजा ॥ अद्येत्यादि नव पत्रिकायां नव देवीनां पूजन मह' करिष्ये इति संकल्य आवाहनादि ताम्बूलान्तैः सम्पूज्य प्रत्येकं प्रार्थयेत् ॥ कल्पयां ब्राह्मणी पूजा ॥ दुर्गे देवि ! समागच्छ सान्निध्यमिह कल्पय ॥ रम्भा रूपेणमेनित्यं शान्ति कुरु सदा शुभे ॥ ब्रह्माण्यै नमः ॥ दाडिम्यां रक्त चण्डिकां पूजयेत् ॥ दाडिमि त्वं पुरा युद्धे रक्त बीज-

---

नुभावेन यथा मन्वन्तराधिपः। संवभूर्य महाभागः सावर्णिस्तनयो रवेः ॥ २ ॥ स्वारो चिषेऽन्तरे पूर्व चैत्र वंश समुद्भवः ॥ सुरथो नाम नाम राजाभून्समस्ते क्षिति मण्डले ॥ ४ ॥ तस्य पालयतः सम्यक्प्रजाः पुत्रा नित्रौ रसान् ॥ वभूवुः शत्रवो भूपाः कोला विध्वंसिभिर्जितः ॥ ६ ॥ ततः स्वपुर माया यो निज देशा धिपो भवत् ॥ आक्रान्तः समहाभागस्तैस्तदा प्रवलारिभिः ॥ ७ ॥ अमात्यैर्वलिभिर्दुष्टै दुर्वलस्यदुरात्मभिः ॥ कोशो वलं चाप हृतं तत्रापि स्वपुरे ततः ॥ ८ ॥ ततो मृगया व्याजेन हृत स्वाम्यः समूपतिः ॥ एकाकी हयमा रुह्य जगाम गहन वनम् ॥ ६ ॥ स वत्रा श्रम मद्राक्षोद्द्विजवर्यस्य मेधसः। प्रशान्तश्वा पदा कीर्णं मुनि शिष्यो पशो भितम् ॥ १० ॥ तस्थौ कंचित्स कालच मुनिना तेन सत्कृत. ॥ इत श्चेतश्च विचरंस्तस्मिन्मुनि वरा श्रमे ॥ ११ ॥ सोऽचिन्त यत्तदा तत्र ममत्वा कृष्ट चेतनः तत्पूर्वैः पालितं पूर्वमयाहीनं पुरंहि तत् । १२ । मद्भृत्यै स्तैरसद्वृत्तैर्धर्मतः पाल्यते नवा ॥ न जाने स प्रधानोमैशूर हस्ती सदामद ॥ १३ ॥ मम वैरिवशंयातः कान्भोगा नुपलप्स्यते ॥ ये ममानुगता नित्यं प्रसाद धनभोजनैः ॥ १४ ॥ अनुवृत्तिं भ्रुवंतेऽद्य कुर्वन्त्यन्यमही भृताम् ॥ असम्यग्व्यय शीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥ १५ ॥ संचितः सोऽति दुःखेन क्षयं कोशोगमिष्यति ॥ एत-

म्य सम्मुख्ये ॥ उमा कार्यंकृतं यस्मा दुर्गे देवि नमो नमः ॥ २ ॥ धान्ये लक्ष्मीं पूजयेत् ॥ जगतः प्राण रक्षार्थं ब्रह्मणा निर्मितं पुरा ॥ उमा प्रीति करंधान्यं तस्माद्रक्षतु सर्वदा ॥ ३ । हरिद्रायां दुर्गां पूजयेत् ॥ हरिद्रेय वरदे देवि उमा रूपासि सुप्रभे ? ॥ मम विघ्न विनाशाय पूजां चैव गृहाण भो ॥ ४ ॥ मानके चामुण्डां पूजयेत् ॥ अस्मिन्देवि समाविष्ट मान वृक्षे राचीप्रिये मम चानुग्रहार्थाय पूजाश्नीकरणायच ॥ ५ ॥ कच्चूर के कालिकापूजयेत् ॥ महिषासुर युद्धेषु कालि भूतासि सुव्रते ! ॥ मम चानु ग्रहार्थाय आगतासि हर प्रिये ॥ ६ ॥ विल्वे शिवां पूजयेत् ॥ महादेव प्रिय करो वासुदेव प्रियः सदा ॥ उमा प्रीति करोय.स्याद्बिल्व वृक्ष ॥ नमोस्तुते ॥ ७ ॥ अशोके शोक हारिणीम्—हरप्रिय करो वृक्ष ! सदात्वं शोक नाशनः ॥ दुर्गा प्रीति करोयस्मात् तस्मातम् रक्षमां सदामिति पूजयेत् ॥ जयन्त्यां कार्त्तिकीं पूजयेच् ॥ निशुम्भ शुम्भ मथने सेन्द्रैदेव मर्णैः सह ॥ जयन्ति ! पूजयामित्वा यस्माकं वरदाभव ॥ ८ ॥ इति नव पत्रिकां सम्पूज्य प्रार्थयेच ॥ खड्ग छुरिकाधनुध्वज पता का शक्ति चर्मासि दुन्दुभि शव- कट्टारक छत्र चामरे शस्त्रास्त्राणि श्रीदुर्गां समीपे संस्थापयेत् इति- सप्तम्या पत्रिका प्रवेशः पूजनविधिश्च ॥ अथ महाष्टम्यां काल

---

श्चान्य च सतत चिन्तया मास पार्थिवः ॥ १६ ॥ तत्र विप्र श्रमाभ्याशे वैश्यमेकं ददर्श सः ॥ सपृष्टस्तेन कस्त्वांम्भो हेतुश्चा गमनेऽत्रकः ॥ १७ ॥ सशोक इव कस्मात्त्वं दुर्मना इवलक्ष्यसे ॥ इत्या कर्ण्यवचत्तस्य भूपतेः प्रणयो दितम् ॥ १८ ॥ प्रत्युवाचसतं वैश्यः प्रश्रया वनतो नृपम् ॥ १९ ॥ वैश्य उवाच ॥ २० ॥ समाधिर्नाम वैश्योऽह मुत्पन्नोधनिनां कुले ॥२१॥ पुत्र दारै निरस्तश्चधनलोभादिसाधुभिः विहीनश्चधनैर्दारै.पुत्रै रादाय मेधनम् ॥ २२ ॥ वनमभ्यागतो दुःखी निरस्त श्चाप्तबन्धुभिः ॥ सोऽहंन वेद्मि पुत्राणां कुशला कुशलात्मिकाम् ॥ २३ ॥ प्रवृत्तिं स्वजनां नां चदाराणां चात्रसंस्थितः । किंनु तेषां गृहे क्षेम मक्षेम किंनुसां प्रति ॥ २४ ॥ कथं ते किंनु सद् वृत्तादुर्वृत्ताः किंनु मे सुताः ॥ २५ ॥ राजो वाच ॥ २६ ॥ यैर्निरस्तोभवाँल्लुब्धैः पुत्रदारा दिर्भिर्धनैः ॥ २७ ॥ तेषु किं भवतः स्नेह मनुबध्नातिमानसम् ॥२८॥ वैश्य उवाच ॥ २९ ॥ एव मेतद्यथा प्राह भवानस्मद्गतंवच ॥ ३० ॥ किं करोमि नबध्नाति मम निष्ठु रतांमनः ॥ ये. संत्यज्य पितृ स्नेहं धन लुब्धैर्निराकृतः ॥ ३१ ॥ पति स्वजन हार्दं च हार्दितेष्वेवमे मनः किमे तन्ना भिजानामि जानन्नपि महामते ॥ ३२ ॥

यत्प्रेम प्रवणं चित्तं विगुणेष्वपि बन्धुषु ॥ तेषां कृते मेनिःश्वासो-

रात्री भद्रिका पूजा निर्णयः ॥ नाष्टमी सप्तमी युक्ता सप्तमी नाष्टमी युता ॥ नवम्या सह कार्यास्या दष्टमी सर्वदा बुधैः । अष्टमी सप्तमी युग्मे महोत्साहे महोत्सवः ॥ इति वाक्यात् । नवमी युक्तायाः प्राशस्त्याभि धानात् सति संभवे सप्तमी विद्धा सर्वथा वर्जनीया ॥ यदि स सूर्यो दये न स्या न्नवमी चापरे ऽहनि ॥ तदाष्टमीं प्रकुर्वीत सप्तम्यासहितां नृपः इति ॥ अहं भद्रा चभद्रा च आवयो रन्तरं नहि ॥ सर्व सिद्धि प्रदास्यामि भद्राया मर्चिता प्यहमिति वचनं भद्र काल य चन परेण महाष्टम्यां निशीथ काले पूजा कर्त्तव्या । दक्ष यज्ञ विनाशिन्या अर्द्ध रात्रे प्रादुर्भावात् ॥ तत्राष्टम्यां महा काली दक्ष यज्ञ विनाशिनी ॥ प्रादुर्भूता महाघोरा ह्यर्द्धरात्रे चन्द्र मण्डले ॥ इति ब्रह्म वचनात् ॥ सप्तमी विद्धां न कुर्वीत मुख्य शुद्धाष्टम्यां काल रात्रि कुर्यात् अष्टम्यां सायं सन्ध्योत्तरं देवी पूजा कार्या ॥ अथेह दुर्भिक्षादिदुःखादि निवृत्ति दीर्घा युष्य परमानन्द परम पद गमन दशाश्व मेध फल ध्वज माला कुल विमान वरा रोहण शाश्वत

---

दौर्मनस्य च जायते ॥ ३३ ॥ करोमि किं यत्र मनस्ते ष्वप्रीतिषु निष्ठुरम् ॥ ३४ ॥ मार्कण्डेय उवाच ॥ ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥ ३६ ॥ समाधिर्नाम वैश्यो ऽसौ स च पार्थिवसत्तमः ॥ कृत्वातु तौ यथा न्यायं यथां र्हंतेन सम्विदम् ॥ ३७ ॥ उपविष्टौ यथाः काश्चि त्कथाक्तु वैश्य पार्थिवौ ॥ ३८ ॥ राजो वाच ॥ ३६ ॥ भगवंस्त्वा मह प्रष्टु मिच्छाम्येकं वदस्व तत् ॥ ४ ॥ दुःखाय यन्मे मनसः स्वचित्ता यत्ततांविना ॥ ममत्त्व गतराज्यस्य राज्याङ्गे ष्वखिले ष्वपि ॥ ४१ ॥ जानतो ऽपि यथाज्ञस्य किमे तन्मुनि सत्तम ॥ अयं चंनिकृतः पुत्रै र्दारै र्भृत्यै स्तथो ज्झितः ॥ ४२ ॥ स्वजनेन च स त्यक्त स्तेषु हार्दी तथा प्यति ॥ एव मेष तथा हं च द्वावप्य त्यन्त दुः खितौ ॥ ४३ ॥ दृष्ट दोषे ऽपि विषये ममत्वा कृष्ट मानसौ ॥ तत्किमे तन्महा भाग यन्मोहो ज्ञानिनो रपि । ४४ ॥ ममास्य च भव त्येषा विवेकान्ध स्यमूढता ॥ ४८ ॥ ऋषिरु वाच ॥ ४६ ॥ ज्ञान मस्ति समस्तस्य जन्तो र्विषय गोचरे ॥ ४७ ॥ विषयाश्च महा भाग यानि चैवं पृथक्पृथक् ॥ दिवान्धाः प्राणिनः केचि द्रात्रा वन्धा स्तथा परे ॥ केचिद्दिवा तथा रात्रौ प्राणिन स्तुल्य दृष्टयः ॥ ज्ञानिनो मनुजाः सत्यं किं नुते नहि केवलम् ॥ यतोहि ज्ञानिनः सर्वे पशु पक्षि मृगादयः ॥ ज्ञानं च तन्मनुष्याणां यत्तेषां मृग पक्षिणाम् ॥ ५० ॥ मनुष्याणां च

फाला ऽवच्छिन्न हर्ष विजय कामः श्री दुर्गा देव्याः पूजनं ध्यानं चाहं करिष्ये ॥ इति संकल्प्य ॥ ततः गणेश दीप पूजनादं स्थापनं कृत्वा ॥ जटा जूट समायुक्ते त्यादि पूर्वोक्त ध्यानं कुर्यात् ॥ अथावाहनम ॥ एहि दुर्गे महाभागे ? रक्षार्थं मम सर्वदा ॥ आवा हया म्यहं देवि ? सर्व कामार्थं सिद्धये ॥ अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु ॥ रक्षां कुरु सदा भद्रे विश्वेश्वरि ? नमो स्तुते ॥ ॐ एतन्तेवि भगवति दुर्गे ? इहागच्छ इह तिष्ठेह सन्निहिता भव इह स्थिरा भव सुप्रसन्ना भव इत्यां वाह्य ॥ ॐ जयन्ती मङ्गला कालीति दुर्गे दुर्गे रक्षणि ! स्वाहा ॐ दुर्गायै नमः ॥ इति मन्त्रेण आसन पाद्यार्घ्यं पञ्चामृत स्नानां चमन शुद्धोदक स्नान गन्ध वस्त्र भूषण सिन्दूर चन्दना क्षत पुष्प कज्जल धूपदीप नैवेद्य ताम्बूल दक्षिणान्तं कृत्वा आवरणं पूजये ॥ देव्या दक्षिण भागे एका दश गौरीः पूजयेत् ॥ ॐ ह्रीं जयन्त्यै नमः इति । प्रणवादि नमोन्तं सर्वत्र ज्ञेयम् ॥ ॐ ह्रीं मङ्गलायै नमः । ॐह्रीं काल्यै नमः । ॐ ह्रीं ह्रीं भद्र काल्यै नमः ॥ ॐ ह्रीं कपालिन्यै नमः । ओं ह्रीं दुर्गायै नमः ! ओं ह्रीं क्षमायै नमः । ओं ह्रीं शिवायै नमः । ओं ह्रीं धात्र्यै नमः !। ओं ह्रीं

---

यत्तेषां तुल्य मन्य स्तयो भयोः ॥ ज्ञाने ऽपि सति पश्यैता न्पतङ्गां छाव चंचुपे ॥ ५१ ॥ कणमोक्ष दवान्मो हा त्पीडय माना नपि क्षुधा ॥ मानुषा मनुज व्याघ्र साभिलापाः सुतान्प्रति ॥ ५२ ॥ लोभात्प्रत्यु पकाराय नन्वे तान्किं न पश्यसि ॥ तथापि ममता वर्त्ते मोह गर्तेनिपातिताः ॥ ५३ ॥ महा माया प्रभावेण संसार स्थिति कारिणा ॥ तन्नात्र विस्मयः कार्यो योगनिन्द्रा जगत्पतेः ॥ ५४ ॥ महामाया हरे श्चैपा तया सं मोह्यते जगत् ॥ ज्ञानिना मपि चेतांसि देवी भगवती हिसा ॥ ५५ ॥ बलादा कृष्य मोहाय महामाया प्रय-च्छति ॥ तया विसृज्यतेविश्वं जगदे तच्चरा चरम् ॥ ५६ ॥ सैषा प्रसन्ना वरदा नृणा भवति मुक्तये ॥ सा विद्या परमा मुक्ते हेतुभूता सनातनी ॥ ५७ ॥ संसार बन्धु हेतुश्च सैव सर्वेश्वरेश्वरी ॥ ५८ ॥ राजो वाच ॥ ५९ ॥ भगवान्काहिसा देवी महामायेतियांभवान् ॥ ६० ॥ ब्रवीति कथमुत्पन्नासा कर्मास्याश्चकिं द्विज ॥ यत्स्वभावा च सा देवीयत्स्व रूपायदुद्भवा ॥ ६१ ॥ तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदांवर ॥ ६२ ॥ ऋषिरुवाच ॥ ६३ ॥ नित्यैवसा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥ ६४ ॥ तथापि तत्समुत्पत्ति र्बहुधा श्रूयतांमम ॥ देवानां कार्यसिद्ध्यर्थमाविर्भवति सायदा ॥ ६५ ॥ उत्पन्नेति तदालोके सानित्याप्यभिधीयते ॥ योग निद्रा

स्वाहानमः। श्रों ह्रीं स्वधा नमः॥ अर्घ्यादि नैवेद्यान्तः पूजयेत्। देव्याग्रष्टदे
भागे द्वादश देवी पूजनम् कुर्यात्॥ ह्रीं मादि नमोन्ताः प्रयोगो यथा—
ह्रीं उग्र चण्डायै नमः। ह्रीं प्रचण्डायै नमः। ह्रीं चण्डोग्रायै नमः। ह्रीं
चण्डनायिकायै नमः॥ ह्रीं चण्डायै नमः। ह्रीं चण्डवत्यै नमः।
ह्रीं चण्डरूपायै नमः। ह्रीं चण्डिकायै नमः। प्रत्येकं सम्पूज्य, देव्या
वाम भागे नव देवीःपूजयेत्॥ ह्रीं उग्र दंष्ट्रायै नमः। ह्रीं शुभ दंष्ट्रायै
नमः॥ ह्रीं करालिन्यै नमः॥ ह्रीं भीम नेत्रायै नमः॥ ह्रीं विशालाक्ष्यै
नमः॥ ह्रीं मङ्गलायै नमः॥ ह्रीं जयायैनमः॥ ह्रीं विजयायै नमः इति
सम्पूज्य॥ देव्यग्रभागे षोडश देवी। पूजयेत्॥ ह्रीं मङ्गलायै नमः।
ह्रीं नन्दिन्यै नम.। ह्रीं रुद्रायै नमः। ह्रीं लक्ष्म्यै नम.॥ ह्रीं कीर्त्यै नमः।
ह्रीं यशस्विन्यै नमः। ह्रीं पुष्ट्यै नमः। ह्रीं शिवायै
नमः ह्रीं साध्व्यै नमः ह्रीं यशोवत्यै नमः। ह्रीं शोभायै नमः

---

यदा विष्णुजगत्ये कार्णवीकृते॥ ६६॥ आस्तीर्यो शेषमभजत्कल्पान्ते
भगवान्प्रभुः॥ तदाद्वाव सुरौ घोरौ विख्यातो मधुकैटभौ॥ ६७॥ विष्णु
कर्ण मलोद्भूतौ हन्तुं ब्राह्मणमुद्यतौ॥ सनाभि कमले विष्णोःस्थितो
ब्रह्मा प्रजापतिः॥ ६८॥ दृष्ट्वातावसुरौ चोग्रौ प्रसुप्तंच जनार्दनम्॥'
तुष्टाव योग निद्रां तामेकाग्र हृदयः स्थितः॥ ६९॥ विबोधनार्थाय हरे
हरिर्नेत्र कृतालयाम्॥ ७०॥ विश्वेश्वरीं जगद्धात्रीं स्थिति संहार कारिणीम्॥
निद्रांभगवतीं विष्णोरतुलां तेजसः प्रभुः॥ ७१। ब्रह्मो वाच॥ ७२॥ त्वं
स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका॥ सुधा त्वमक्षरे नित्ये
त्रिधा मात्रात्मिका स्थिता॥ अर्ध मात्रा स्थिता नित्या यानुच्चार्या विशेषतः।
त्वमेव संध्या सावित्री त्वं देविजननी परा॥ ७४॥ त्वयै तद्धार्यते विश्वं
त्वयै तत्सृज्यते जगत्॥ ७५॥ त्वयैतत् पाल्यते देवित्व मत्स्यन्ते च
सर्वदा॥ विसृष्टौ सृष्टिरूपात्वं स्थिति रूपाच पालने॥ ७६॥ तथा
संहृति रूपान्ते जगतोस्य जगन्मये॥ महा विद्या महा माया महामेधा
महास्मृतिः॥ ७७॥ महा मोहा च भवती महा देवी महासुरी॥ प्रकृ-
तिस्त्वं च सर्वस्य गुण त्रय विभाविनी॥ ७८॥ कालरात्रिमहारात्रि मोह-
रात्रिश्चदारुणा॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीं स्त्वं बुद्धिर्बोध लक्षणा॥ ७९॥
लज्जा पुष्टि तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेवच। खड्गिनी शूलिनी
घोरा गदिनी चक्रिणी तथा॥ ८०॥ शङ्खिनी चापिनी बाणभुशुण्डी
परिघायुधा॥ सौम्या सौम्य तराऽशेष सौम्येभ्यस्त्वति सुन्दरी॥ ८१॥ परा
परा णां परमात्वमेव परमेश्वरी। यच्चकिंचित्क्वचिद्वस्तुसदसद्वाखिलात्मिके
तस्य सर्वस्यया शक्तिः सात्वं किं स्तूयसे तदा॥ यया त्वयाजगत्स्रष्टा जगत्पा-

जयायै नमः। ह्रीं धृत्यै नमः। ह्रीं आनन्दायै नमः ह्रींमेधायै नम ह्रीं नन्दायै नमः। इति पूर्ववत्सम्पूजयेत् देव्याम भागे चतुः षष्टिदेवीं ह्रीं श्रीजायै नमः पूजयामि॥ ह्रीं मङ्गलायै नमः पूजयामि॥ ह्रीं भद्रायै नमपूजयामि॥ ह्रीं धृत्यैनमः पू०। ह्रीं शान्त्यै नमः पू०। ह्रीं शिवायैनमः पू०। ह्रीं क्षमायै नमः पू०। ह्रीं सिद्ध्यै नमः पू०। ह्रीं तुष्ट्यै नमः पू०। ह्रीं पुष्ट्यै नमः पू०। ह्रीं उमायै नमः पू०। ह्रीं श्रियै नमः पू०। ह्रीं ऋद्ध्यै नमः पू०। ह्रीं रत्यै नमः पू०। ह्रीं दीप्तायै नमः ।। पू०॥ ह्रीं कान्त्यै नमः पू०। ह्रीं लक्ष्म्यै नमः पू० ॥ ह्रीं ईश्वर्य्यै नमः पू०। ह्रीं वृद्ध्यै नमः पू० ह्रीं शक्त्यै नमः पू०। ह्रीं जया वत्यै नमः पू०। ह्रीं ब्राह्म्यै नमः पू०। ह्रीं जयन्त्यै नमः पू०। ह्रीं अपराजितायै नमः पू०। ह्रीं

---

त्पत्तियो जगन् ॥ ८३ ॥ सोऽपि निद्रा वशं नीतः कस्त्वां स्तोतु मिहे- श्वरः ॥ विष्णुः शरीर ग्रहण मह मीशान एवच ॥ ८४ ॥ कारि तास्ते यतोऽतस्त्वां कः स्तोतु शक्तिमान्भवेत्॥ सात्व मित्थं प्रभावैः स्वै रुदारै र्देवि संस्तुता ॥ ८५ ॥ मोहयैतौ दुराधर्षा वसुरौ मधुकैटभौ ॥ प्रबोधं च जगत्स्वामी नीयता मच्युतो लघु ॥ ८६ ॥ बोधश्च क्रियता मस्य हन्तु मेतौ महासुरौ ॥ ८७ ॥ ऋषिरुवाच ॥ ८८ ॥ एवं स्तुता तदा देवी तामसी तत्र वेधसा ॥ ८९ ॥ विष्णोः प्रबोध नार्थायनिहन्तुं मधुकैटभौ ॥ नेत्रास्य नासिका बाहु हृदयेभ्यस्तथोरसः ॥ ९० ॥ निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्त जन्मनः ॥ उत्तस्थौच जगन्नाथ स्तया मुक्तोजनार्दनः ॥ ॥ ९१ ॥ एकार्णवेऽहि शयना त्ततः सद्दृशे च तौ ॥ मधुकैटभौ दुरात्मानौ वति वीर्य पराक्रमौ ॥ ९२ ॥ क्रोधरक्ते क्षणावत्तुं ब्रह्माणं जनितो द्यमौ ॥ समुत्थाय ततस्ताभ्यां युयुधे भगवान्हरिः ॥ ९३ ॥ पञ्च वर्ष सहस्राणि बाहु प्रहरणो विभुः ॥ तावप्यति बलोन्मत्तौ महामाया विमोहितौ ॥ ९४ ॥ उक्त वन्तौ वरोस्मत्तो व्रियता मितिकेशवम् ॥ ९५ ॥ भगवानुवाच ॥ ९६ ॥ भवेता मद्यमे तुष्टौ मम वध्या वुभां यपि ॥ ९७ ॥ किमन्येन वरे णात्र एतावद्धि वृत्तं मया ॥ ९८ ॥ ऋषिरुवाच ॥ ९९ ॥ वाञ्छिताभ्यां मिति तदा सर्व्व पापो मयं जगत् ॥ विलोक्य ताभ्यां गदितो भगवान्कमले क्षणः, आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥ १ ॥ ऋषिरुवाच ॥ २ ॥ तथेत्युक्त्वा भगवता शंख चक्र गदाभृता ॥ कृत्वा चक्रेण वैछिन्ने जघने शिरसी तयोः ॥ ३ ॥ एव मेषा समुत् पन्ना ब्रह्मणा संस्तुता स्वयम् ॥ प्रभाव मस्या देव्यास्तु भूयः शृणु वदामिते ॥ ४ ॥ इति मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवी माहात्म्ये मधुकैटभ वधो नाम प्रथमोध्यायः ॥ १॥ उवाच ॥ १४ ॥ अर्ध० ॥ २४ ॥ श्लो० ६६ ॥ एवम् ॥ १०४ ॥

अजितायै नमः पू० । ह्रीं मानन्यै नम पू० । ह्रीं दित्यै नमः पू० । ह्रीं मायायै नमः पू० । ह्रीं महा मयायै नमः पू० ह्रीं मोहिन्यै नमः पू० । ह्रीं रति लालसायै नमः पू० । ह्रीं तारायै नमः पू० ह्रीं विमलायै नमः पू० । तथा ह्रीं गौर्यै नमः पूजयामि । ह्रीं शरण्यायै नमः पू० । ह्रीं कौशिक्यै नमः पूजयामि । ह्रीं सत्यै नमः पू० । ह्रीं दुर्गायै नमः पू० ॥ ह्रीं क्रियायै नमः । पू० । ह्रीं अरुन्धत्यै नमः पू० । ह्रीं घण्टायै नमः पू० । ह्रीं कर्णायै नमः पू० ॥ ह्रीं कपालिन्यै नमः पू० । ॥ ह्रीं रौद्रै नमः पू० । ह्रीं काल्यै नमः पू० । ह्रीं मातृर्यै नमः पू० । ह्रीं त्रिनेत्राय नमः पू० । ह्रीं स्वरूपिण्यै नमः पू० । ह्रीं बहु रूपायै नमः पू० ॥ ह्रीं रिपु हन्त्र्यै नमः पू० । ह्रीं अम्बिकायै नमः पू० ॥ ह्रीं चर्चिकायै नमः पू० । ह्रीं सुर पूजितायै नमः पू० । ह्रीं वैवस्वत्यै नमः पू० । ह्रीं कौमार्यै नमः पू० ह्रीं माहेश्वर्यै नमः पू० । ह्रीं वैष्णव्यै नमः पू० । ह्रीं महालक्ष्म्यै नमः पू० । ह्रीं शिवदूत्यै नमः पू० । ह्रीं कार्तिक्यै नमः पू० । ह्रीं कुशिकायै नमः पू० । ह्रीं चामुण्डायै नमः पू० । इति संपूज्या

---

मध्यम चरितस्य ॥ विष्णु ऋषिः ॥ महा लक्ष्मी देवता ॥ उष्णिक छन्दः ॥ शाकंभरी शक्तिः ॥ दुर्गाबीजम् ॥ वायुस्तत्त्वम् ॥ यजुर्वेदः स्वरूपम् ॥ महालक्ष्मी प्रीत्यर्थं मध्यम चरित जपे विनियोगः ॥ अथध्यानम् । ॐ अक्षलक्परशुं गदेषु कुलिशं पद्मं धनुष्कुण्डिकां दण्डं शक्ति मसिं च चर्म जलजं घण्टां सुरा भाजनम् ॥ शूलं पाश सुदर्शने च दधतीं हस्तैः प्रसन्ना ननां सेवे सैरिभमर्दिनी मिह महालक्ष्मी सरोज स्थिताम् ॥ १ ॥ ऋषिरुवाच देवा सुर मभूद्युद्धं पूर्णं मब्द शतं पुरा ॥ महिषे सुराणाम धिपे देवानां च पुरं दरे ॥ २ ॥ तत्रा सुरै र्महा वीर्यै देव सैन्यं पराजितम् ॥ जित्वा चसकला न्देवानिन्द्रो ऽभून महिषा सुरः ॥ ३ ॥ ततः परा जिता देवाः पद्म योनिं प्रजापतिम् ॥ पुरस्कृत्य गतास्तत्र यत्रेश गरुडध्वजौ ॥ ४ ॥ यथा वृत्तं तयो स्तद्वन्महिषा सुर चेष्टितम् ॥ ५ ॥ त्रिदशाः कथया मासुर्देवाभि भवविस्तरम् ॥ ५ ॥ सूर्ये न्द्राग्न्य निलेन्दूनां यमस्य वरुणा स्यच ॥ अन्येषा चाधि कारान्स स्वयमेवाभितिष्ठति ॥ ६ ॥ स्वर्गा न्निराकृताः सर्वे तेन देव गणा भुवि ॥ विचरन्ति यथा मर्त्या महिषेण दुरात्मना ॥ ७ ॥ एतद्वः कथितं सर्व ममरारि विचेष्टितम् ॥ शरणं वः प्रपन्नाः स्मो वध स्तस्य विचिन्त्यताम् ॥ ८ ॥ इत्थं निशम्य देवानां वचांसिमधु सूदनः ॥ चकार कोपं शंभुश्च भ्रकुटी कुटिला ननौ,

अष्ट मातृकाणां अष्टदिक्षु पूजनं कुर्यात् ॥ ब्रह्मण्यै नमः । माहेश्वर्यै नमः । कौमार्यैनमः । वैष्णव्यै नमः । वाराह्यै नमः । इन्द्राण्यै नमः । चामुण्डायै नमः । महालक्ष्म्यै नमः । मध्ये चण्डिकायै नम- । देव्या अग्रभागे भैरवाय नमः । इति पूजयेत् ॥ तत्र मन्त्रः ॥ भैरवं परमं देवं सर्व काम प्रसाधनम् । पूजयाम्यद्वैतो देव्याः सर्वाग्रिक फल प्रदम् ॥ ततः श्री परमेश्वर्यै जल दुग्ध कुश दधि वरद तण्डुल यव सर्षपादि दश सहस्र वर्षा वच्छिन्न दुर्गा लोक मही पतित्व काम पयो प्राप्तो ऽर्घो भगवत्यै दुर्गा देव्यै मया दत्तः ॥ दुर्गे ? दुर्गे ? रक्षिणि स्वाहा दुर्गा देव्यै नमः । इत्यर्घं दत्वा चन्दनं दद्यात् ॥ अग्नि ष्टोम यज्ञ फल फल प्राप्ति कामनया चन्दनेन भगवत्यै दुर्गा देव्यै अनुलेपनं दत्तं दुर्गा देव्यै नमः ॥ विल्वपत्र माला मादाय ॥ चन्दनेन समालिप्ते कुङ्कुमेन विलेपिते । विल्व पत्र कृतां मालां गृहाणसुर वन्दिते ? ॥ दुर्गा देव्यै नमः । अथ सिंह पूजा ॥ ॐ ह्रौं हः हः महा शार्दूल वितानाय पिङ्गल लोचनाय नमः ॥

---

॥ ६ ॥ ततो ऽति कोप पूर्णस्य चक्रिणो वदना ततः ॥ निश्च क्राम मह त्तेजो ब्रह्मणः शंकर स्यच ॥ १० ॥ अन्येषां चैव देवानां शक्रादीनां शरीरतः ॥ निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥ ११ ॥ अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम् ॥ ददृ शुस्ते सुरा स्तत्र ज्वाला व्याप्त दिगन्तरम् ॥ १२ ॥ अतुलं तत्र तत्तेजः सर्व देव शरीरजम् ॥ एकस्थं तद भून्नारी व्याप्त लोक त्रयंत्विषा ॥ १३ ॥ यदभू च्छाम्भवं तेज स्तेना जायत तन्मुखम् ॥ याम्ये न चाभवन्केशा बाहवो विष्णु तेजसा ॥ १४ ॥ सौम्येन स्तनयो र्युग्मं मध्यं चैन्द्रेण चाभवत् ॥ वारुणे न च जंघोरू नितम्ब स्तेजसा भुवः ॥ १५ ॥ ब्रह्मण स्तेजसा पादौ तद ङ्गुल्यो ऽर्कतेजसा ॥ वसूनां च करां गुल्यः कौवेरेण च नासिका ॥ १६ ॥ तस्यास्तु दन्ताः संभूताः प्राजापत्येन तेजसा ॥ नयनत्रितयं जज्ञे तथा पावक तेजसा ॥ १७ ॥ भ्रुवौ च संध्ययो स्तेजः श्रवणा वनिलस्य च ॥ अन्येषां चैव देवानां संभव स्तेजसां शिवा ॥ १८ ॥ ततः समस्त देवानां तेजो राशिस मुद्भवाम् ॥ तां विलोक्यमुदं प्रापु रमरा महिषार्दिताः ॥ १९ ॥ शूलं शूलाद्विनिष्कृष्य ददौतस्यै पिनाक धृक् ॥ चक्रं च दत्त वान्कृष्णः समुत्पाद्य स्वचक्रतः ॥ २० ॥ शंखं च वरुणः शक्तिंददौ तस्यै हुता-

नमः बाहू पूजयामि ॥ ॐ तेजो रूपाय नमः स्तनौ पूजयामि ॥ ॐ महेश्वराय नमः नाभिं पूजयामि ॥ ॐ विश्वरूपाय नमः कटीं पूजयामि ॥ ॐ जगत्प्रभवे नमः गुदं पूजयामि ॥ ॐ स्वप्रकाशाय नमः उरू पूजयामि ॥ ॐ स्वय ज्यातिषे नमः जानुनी पूजयामि ॥ ॐ चतुर्व्यूहाय नमः गुल्फौ पूजयामि ॥ ॐ जनार्दनाय नमः पादौ पूजयामि ॥ ॐ पर ब्रह्मणे नमः सर्वाङ्गं पूजयामि ॥ ॐ धात्रे नमः पादौ पूजयामि ॥ विधात्रे नमः जङ्घे पूजयामि ॥ त्वष्ट्रे नमः उरू पूजयामि ॥ ॐ प्रजापतये नमः मेढ्रं पूजयामि ॥ ॐ परमेष्ठिने नमः कटीं पूजयामि ॥ ॐ अग्नि रूपाय नमः नाभिं पूजयामि ॥ ॐ पद्मनाभाय नमः हृदयं पूजयामि ॥ वेधसे नमः बाहूपूजयामि ॥ ॐ दामोदराय नमः कण्ठं पूजयामि ॥ ॐ हिरण्य गर्भाय नमः मुखंपूजयामि ॥ ब्रह्मणे नमः शिरं पूजयामि ॥ विष्णवे नमः सर्वाङ्गम् पूजयामि ॥ विशेषो पद्मादि समर्पयेत् । अथ दीप

---

मपराजिता ॥ दूत त्वंगच्छ ,भगवान्पार्श्वं शुम्भ निशुम्भयोः ॥ २४ ॥ ब्रूहि शुम्भं निशुम्भं च दीनवा वति गर्वितौ । ये चान्ये दानवा स्तत्र युद्धाय समुपस्थिताः ॥ २८ ॥ त्रैल्योक्य मिन्द्रो लभतां देवाः सन्तु हविर्भुजः ॥ यूय प्रयात पातालं यदि जीवितु मिच्छथ ॥ २६ ॥ बलावले पाद्थ चेद्भवन्तो युद्ध काङ् क्षिणः ॥ तदागच्छत तृप्यन्तु मच्छिवाः पिशितने वाः ॥ २७ ॥ यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम ॥ शिव दूतीति लोके ऽस्मिं स्ततः साख्याति मागता ॥ २८ ॥ ते ऽपि श्रुत्वा वचो देव्याः शर्वाख्यात महासुराः ॥ अमर्षापूरिता जग्मुर्यतः कात्यायनी स्थिता ॥ २९ ॥ ततः प्रथममेवाग्रे शर शक्त्यृष्टि वृष्टिभिः ॥ ववर्षु रुद्धतामर्षा स्तान्देवी ममरारयः ॥ ३० ॥ सा च तान्प्रहितान् वाणा च्छूल शक्ति पर रवधान् ॥ चिच्छेद लीलयाध्माव धनुर्मुक्तै र्महेषुभि. ॥ ३१ ॥ तस्याग्रतस्तथा काली शूल पात विदारि तान् । खट्वाङ्ग पोथितां श्चारोन् कुर्वती व्यचर त्तदा ॥ ३२ ॥ कमण्डलु जला क्षेप हत वीर्यान्हतौ जसः ॥ ब्रह्माणी चाकरो च्छत्र न्येन येनस्म धावति ॥ ३३ ॥ माहेश्वरी त्रिशूलेन तथा चक्रेण वैष्णवी ॥ दैत्याञ्जघान कौमारी तथा शक्त्यादि कोपना ॥ ३४ ॥ ऐन्द्री कुलिश पातेन शतशो दैत्य दानवाः ॥ पेतु र्विदारिताः पृथ्व्यां रुधिरौघप्रवर्षिणः ॥ ३५ ॥ तुण्ड प्रहार विध्वस्ता दंष्ट्राग्र क्षत वक्षसः ॥ वाराह मूर्त्यान्यपतं श्चक्रेण च विदारिताः ॥ ३६ ॥ नखै र्विदारितां श्चान्या-

दान सङ्कल्पः ॥ अद्येहेत्यादि पूर्व सङ्कल्प सिद्धि रस्तु अमुक गोत्रायाः अमुक नाम्नी देव्या ममसमस्त जन्म बाल्य यौवन वार्धक्या वस्थो पार्जित कायिक वाचिक मानसिक सां सर्गिक सकल पापक्षय पूर्वकैहि कानेक विध निर वधिक भोगा नुभावा नन्तरं श्री परमेश्वर प्रीतये तिल तैला कान् घृताक्तान् स पाद लक्ष संख्य कान् प्रज्वालितान् दीपान् अमुक देवता राधन पक्षे ब्रह्मणे विष्णवे, ईश्वराय, देव्यैगङ्गायै, तुलस्यै, सूर्याय, गणपतये समर्पया मीति शमर्पयेत् ॥ अथ कांस्य पात्र रौप्य पात्रस्थ हेम वर्त्तिका दान मंत्रः ॥ रौप्य पात्र स्थित दीपं हेम वर्त्ति समन्वितम् ॥ कांस्य पात्रेण सहितं ददामि व्रत पूर्त्तये ॥ ततो भूयसी दक्षिणा दानम् ॥ इदं व्रतं मयादेव कृतं प्रित्यै तव प्रभो ! न्यूनं सम्पूर्ण तांयातु प्रसादा त्तव केशव ! ॥ गृहीत्वाऽपि व्रतंदेव यथा पूर्णं करोम्यहम् ॥

---

न्भक्षयन्ती महा सुरान् । नार सिंही चचारार्जौ नाद पूर्ण दिगम्बरा ॥ ३७ ॥ चण्डा ट्टहा सैरसुराः शिव दूतभि दूषिताः ॥ पेतुः पृथिव्यां पतितांस्ताँश्चखादाथ साचदा ॥ ३८ ॥ इति मातृ गणं क्रुद्धं मर्दयन्त महा सुरान् ॥ दृष्टवाभ्यु पायैर्विविधैर्नेशुर्देवारि सैनिकाः ॥ ३९ ॥ पलायन परान दृष्ट्वा दैत्यान्मातृ गणार्दितान् ॥ योद्धु मभ्या ययौ क्रुद्धो रक्त बीजो महासुरः ॥ ४० ॥ रक्तबिन्दुर्यदा भूमोपतत्यस्य सरीरतः ॥ समुत्पततिमेदिन्यां तत्प्रमाणस्तदासुरः ॥ ४१ ॥ युयुधे सगदा पाणि रिन्द्र शक्त्या महासुरः ॥ ततश्चैन्द्रीस्व वज्रेण रक्त बीजमताडयत् ४२ कुलिशेनाहतस्यास्य बहु सुस्राव शोणीतम् ॥ समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमाः ॥ ४३ ॥ यावन्तः पतितास्तस्य शरीराद्रक्त बिन्दवः ॥ तावन्तः पुरुषा जातास्तद्वीर्य बल विक्रमाः ॥ ४४ ॥ ते चापि युयुधुस्तत्र पुरुषा रक्त सम्भवाः ॥ समं मातृभिरत्यन्त शस्त्रपातादि भीषणम् ॥ ४५ ॥ पुनश्च वज्र पातेनक्षतमस्य शिरोयदा । ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः ॥ ४६ ॥ वैष्णवी समरे चैनं चक्रेणाभिजघान ह । गदया ताडया मासऐन्द्री तमसुरेश्वरम् ॥ ४७ ॥ वैष्णवी चक्र भिन्नस्य रुधिर स्राव सम्भवैः । सहस्र शो जगद्व्याप्तं तत्प्रमाणै र्महासुरैः ॥ ४८ ॥ शक्त्या जघान कौमारी वाराही च तथासिना ॥ माहेश्वरी त्रिशूलेन रक्त बीजमहासुरम् ॥ ४९ ॥ न चापि गदया दैत्यः सर्वा पत्रा हनत्ययक ॥ मातृः कोपा समाविष्टोरक्त बीजो महासुरः ॥ ५० ॥ तस्या हतस्य बहुधा शक्ति शूलादिभि र्भुवि ॥ पपात यो वैरक्तौघस्तेनासञ्छतशोऽसुराः ॥ ५१ ॥ तैश्चासुरासृक्सम्भूतैरसुरैः सकलं जगत् ॥ व्याप्त

तन्मेभवतुसम्पूर्णं त्वत्प्रसादाज्जनार्दनः ॥यस्यस्मृत्येतिकायेनवाचेत्यादि नाप-रमेश्वरंसमर्प्यंततोविसर्जनंकुर्यात् ॥इतिलक्षवर्तिकादीपदानविधिःसमाप्तः॥ पूर्वोक्तविधिर्भीमस्याश्चित्रानाम्न्यादेव्यासङ्कल्पोक्तदेवानां चार्पणं ध्रुवम् ॥

अथ महाष्टमी व्रतप्रतिष्ठा ॥ सर्वतो भद्र मण्डलैक देशे कलशं सम्पूज्य ॥ तदुपरि सुवर्ण प्रतिमां तत्पूजाविधिना सम्पूज्य रात्रौ जागरणं प्रातर्देव्या उत्तर पूजां विधाय ॥ ॐअथ महाष्टमी अम्बे अम्बिकेति १०८ होमं समाप्य प्रार्थयेत् ॥ महिषघ्नि ! महा माये चामुण्डे मुण्डै मालिनि ! ॥ द्रव्यमारोग्य विजयं देहि देवि ! नमोस्तुते । भूतप्रेत पिशाचेभ्यो रक्षोभ्यश्च महेश्वरी ! देवेभ्यो मानुषेभ्यश्च भयेभ्योर क्षमा सदा ॥ सर्व मङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके ॥ उमे ब्रह्माणि कौमारी विश्वरूपे ! प्र प्रसीद मे ॥ इतिसंप्रार्थ्य ॥ नव ब्राह्मणेभ्यो यथा शक्ति रक्त व स्त्रदक्षिणादि दानं कुर्यात् ॥

---

मासीत्ततो देवाभयमाजगमुरुत्तमम् । ५२॥तान्विषण्णान्सुरान् दृष्ट्वाचण्डिका प्राहसत्वरा ॥उवाच कालींचामुण्डेविस्तरंवदनं कुरु ॥५३॥ मच्छस्त्र-पात सम्भू तान् रक्तविन्दून्महासुरान ॥ रक्तविन्दोः प्रतीच्छत्वंवक्त्रेण नेत-वेगिना ॥५४॥भक्षयन्ती चररणे दुदुत्पन्नान्महा सुरान् ॥ एवमेष क्षयं दैत्य-क्षीणरक्तो गमिष्यति । ५५॥ भक्ष्यमाणा स्त्वया चोग्रा न चोत्पत्स्यन्ति चापरे ॥ इत्युक्त्वा तां ततो देवी शूले नाभि जघानतम् ॥५६॥मुखेन काली जगृहेरक्तबीजस्यशोणितम् ॥ततोऽसावाजघानाथगदयातत्रचण्डिकाम्॥५७॥ न चास्या वेदनां चक्रे गदा पातोऽल्पि कामपि ॥ तस्या हतस्य देहात्तु बहु सुस्राव शोणितम् ॥ ५८ ॥ यतस्ततस्तद्वक्त्रेण चामुण्डा सम्प्रतीच्छति । मुखे समुद्गतायेऽस्या रक्त पातान्महासुराः ॥ ५६ ॥ तांश्च-खादाथ चामुण्डा पपौ तस्य च शोणितम् ॥ देवी शूलेन वज्रेण वाणै रसिभि ऋष्टिभिः ॥ ६० ॥ जघान रक्त बीजं तं चामुण्डा पीत शोणितम् ॥ स पपात महीपृष्ठे शस्त्रसङ्घ समाहतः ॥ ६१ ॥ नीरक्तश्च महीपाल रक्त बीजो महासुरः ॥ ततस्ते हर्ष मतुलमवापु स्त्रि दशा नृप ॥ ६२॥ तेषांमातृगणो जातो ननर्तासृङ् मदोद्धतः ॥६३॥इति मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवी माहात्म्ये रक्तबीज वधो नामाष्टमोऽध्यायः । उवाच ॥ १ ॥ अर्धं ॥ १ ॥श्लोक ६१ ॥ म० ६३ ॥ एवमादितः ॥५०२॥

अथ ध्यानम्—बन्धूक काञ्चन निभांरुचिराक्षमालांपाशाङ्कुशौ च वरदां निज बाहु दण्डैः । बिभ्राण मिन्दुशकल भरणां त्रिनेत्रामम्बाम्बिके शमनिशं वपुषा श्रयामि ॥ १ ॥ राजोवाच ॥ १ ॥ विचित्र मिदमाख्यातं भगवन्भवतामम ॥ देव्याश्चरित माहात्म्यं रक्तबीज वधाश्रितम् ॥ २ ॥

## अथ कुमारी पूजनम्

सुतिप्व भूमौ स्थापिता सनेपु प्राङ्मुखोः कुमारीः संस्थाप्य संकल्पं कुर्यात् ॥ अद्येत्यादि मम कृतस्या मुकाष्टमी व्रतस्यो द्यापन कर्मणः प्रतिष्ठा साङ्गता सिद्धये देवी प्रीत्यर्थं एतावत्संख्याक कुमारीणां यथा सादत सामग्रिणां पूजन पूर्वक भोजनं चाहं करिष्ये ॥ तासां पाद प्रक्षालनम् ॥ जगत्पूज्ये ! जगद्वन्द्ये सर्वशत्रुविनाशिनि ! ॥ पूजां गृहाण कौमारि ! जगन्मात नमोस्तुते ॥ इति मन्त्रेण पाद्यादि नैवेद्यान्तं समर्च्य विभवानुसारेण सौभाग्य द्रव्य वस्त्र भूषणा दीनि दद्यात् ॥ खण्ड मोदक घृत दुग्ध दधि मधुनि यथा सुखं शनैः शनैः भोजयेत् ॥ तासां दत्ता च मनीया नां करेण चत पुष्पादिकं दत्वाप्रतिगृह्यविसर्जयेत

---

भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते ॥ चकार शुंभो यत्कर्म निशुंभ श्चाति कोपनः ॥ ३ ॥ ऋषिरुवाच ॥ ४ ॥ चकार कोपमतुलं रक्त बीजे निपातिते ॥ शुंभा शुरो निशुंभश्च हतेश्वन्येषु चाहवे ॥ ५ ॥ हन्य मानं महा सैन्यं विलोक्या मर्षमुद्वहन् ॥ अभ्यधा वन्नि शुंभोथ मुख्यया सुरसेनया ॥ ६ ॥ तस्यामत स्तथापृष्टे पार्श्वयोश्च महासुराः संदष्टौष्ट पुटाः क्रुद्धाहंतुं देवी मुपा ययुः ॥ ७ ॥ आज गाममहावीर्यः शुंभोपि स्वबलै र्वृतः ॥ निहतुं चण्डिकां कोपात्कृत्वा युद्धंतु मातृभिः ॥ ८ ॥ ततो युद्ध मतो वासी द्देव्याः शुंभ निशुंभयोः ॥ शर वर्षमतो वोग्रं मेघयो रिव वर्षतो ॥ ९ ॥ चिच्छेदा स्ताञ्छरां स्ताभ्यां चण्डिका स्वशरोत्करैः ॥ ताडया मास चांगेपु शस्त्रौघे रसुरेश्वरौ ॥ १० ॥ निशुंभो निशितं खड्गं चर्म चादाय सुप्रभम् ॥ अताडयन्मूर्ध्नि सिंहं देव्या वाहन मुत्तमम् ॥ ११ ॥ ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम् ॥ निशुंभस्या शुचि च्छेद चर्म चा प्यष्ट चन्द्रकम् ॥ १२ ॥ छिन्ने चर्मणि खड्गेच शक्ति चिक्षेपमोसुरः ॥ तामप्यस्यद्विधा चक्रे चक्रेणाभि मुखा गताम् ॥ कोपाध्मातो निशुम्भोथ शूलं जग्राह दानवः आयांतं मुष्टिपातेन देवी तथाप्य चूर्णयत् ॥ १४ ॥ आविद्ध्याथ गदां सोपि चिक्षेप चण्डिकां प्रति ॥ सापि देव्या त्रिशूलेन भिन्नाभस्म त्वमागता ॥ १५ ॥ ततः परशु हस्तं त मायान्तं दैत्य पुङ्गवम् ॥ आहत्य देवी बाणौघै रपात यत भूतले ॥ १६ ॥ तस्मिन्नि पतिते भूमौ निशुम्भे भीम विक्रमे। भ्रातर्यतीव संक्रुद्धः प्रययौ हन्तुमंबिकाम् ॥ १७ ॥ सरथस्थ स्तथा त्युच्चैर्गृहीत परमायुधैः ॥

# अथ श्री विष्णु पूजन प्रयोग

आचाम्य प्राणा नायाम्य भूतादि शुद्धिं संविधायशु शान्ति भं वतु। मङ्गलोच्चारणम्—ॐ स्वस्तिनऽऽइन्द्रोव्वृद्धश्रवा ऽः । स्वास्तिनः पूषा व्विश्व वेदा :ऽ स्वास्तिन स्ताक्ष्योंऽअरिष्टनेमिऽ· स्वस्तिनो बृहस्पति र्दधातु ॥ १ ॥ भद्रङ्कर्णेभिऽ श्रृणुयाम देवा भद्रम्पश्येमा क्षभिर्य्य जत्रा ऽः स्थिरै रङ्गै स्तुष्टुवा ं सस्तनूभिर्व्यशे महि देव हितं यदायुः ॥ २ ॥ तम्पत्न्कोभि रुगच्छेम देवाःऽपुत्रै र्भ्रातृभि-रुत वा हिरण्यै :ऽ । नाकङ्गृभ्णानाःऽ सुकृतस्य लोके तृतीये पृष्ठेऽअधि

---

भुजे रष्टाभि रतुलै र्व्याप्यां शेषं वभौ नभः ॥ १८ ॥ वमायान्तं समालोक्य देवी शङ्ख मवा दयत् ॥ ज्या शब्दं चापि धनुषश्चकाःवोवदुःसहम् १६ ॥ पूरयामास ककुभोनिज घण्टास्वने नच ॥ समस्त दैत्य सैन्यानां तेजो वध विधायिना ॥ २० ॥ ततः सिंहो महा नादैस्त्याजितेभ महामदैः ॥ पूरयामास गगनं गां तथैव दिशोदश ॥ २१ ॥ ततः काली समुत्पत्य गगनं क्ष्मामताडयत् ॥ कराभ्यां तन्निनादेन प्राक्स्वनास्तेतिरोहिताः ॥ २२ ॥ अट्टाट्टहा सम शिवशिव दूती च कारह ॥ तैः शब्दैरसुरात्रेंपुः शुम्भः कोपं परंययौ ॥ २३ ॥ दुरात्मतिष्ठतिष्ठेतिव्याजहाराम्बिका यदा ॥ तदा-जयेत्यमिहितं देवैरा काशसंस्थितैः ॥ २४ ॥ शुभेनागत्यया शक्ति मुक्ताज्वालातिभीषणा ॥ आयांती वह्निकूटा भासानिरस्ता महोल्कया ॥ सिंहनादेन शुभस्य व्याप्तं लोक त्रयान्तरम् ॥ निर्घातनिः स्वनो घोरो जितवा नवनी पते ॥ २६ ॥ शुभमुक्ताच्छरान्देवी शुभस्तत्प्रहिताच्छरान् ॥ चिच्छेदस्वशरै रुग्रैः शत शोध सहस्रशः ॥ २७ ॥ ततः सा चण्डिका क्रुद्धा शूले नाभिजघानतम् ॥ सतदा निहतो भूमौ मूर्छितो निप-पातह ॥ २८ ॥ ततो निशुं भः संप्राप्य चेतनामाचकार्मुकः ॥ आजघान शरैर्देवीं कालीं के शरिणं तथा ॥ २६ ॥ पुनश्च कृत्वत्वा वाहूना मयुतं दनुजेश्वरः ॥ चक्रायुधेन दितिजश्छादया मास चंडिकाम् ॥ ३० ॥ ततो भगवती क्रुद्धा दुर्गा दुर्गाति नाशिनी ॥ चिच्छेद तानि चक्राणि स्वशरैः सायकांश्चतान् ॥ ततो निशुंभोवेगेन गदा मादाय चंडिकाम् ॥ अभ्यधा वतवै हंतुं दैत्य सेना समा वृतः ॥ ३१ ॥ तस्या पतत पवाशु गदां चिच्छेद चण्डिका ॥ खड्गेन शित धारेण सच शूलं समाददे ॥ ३३ ॥ शूलं हस्तंसमायांतं निशुंभ ममरार्दनम् हृदि विव्याधशूलेन वेविद्धेनचण्डि का ॥ ३४ ॥ भिन्नस्य तस्य शूलेन हृदयान्निः सृतोपरः ॥ महाबलो महावीर्यस्तिष्ठेति पुरुषोवदन ॥ ३५ ॥ तस्य निष्क्रामतो देवीप्रहस्यस्वन

रोचनेदिवऽ ॥ ३ ॥ नमस्काराः—श्री मन्महा गणाधि पतये नमः। इष्ट देवता भ्यो नमः। कुल देवताभ्यो नमः। स्थानदेवताभ्यो नमः। वास्तु देवताभ्यो नमः। वाणी हिरण्य गर्भाभ्यां नमः। श्री उमामहेश्वराभ्यां-नमः। श्री लक्ष्मी नारायणाभ्यां नमः। शची पुरन्दराभ्यां नमः। मातृ पितृ चरणकमलेभ्यो नमः। सर्वेभ्यो देवेभ्यो नमः। सर्वेभ्यो ब्राह्मणेभ्यो नमः। निर्विघ्न—मस्तु॥ सुमुख श्चैक दन्तश्च कपिलो गज कर्णकः। लम्बोदरश्चविकटो विघ्न नाशो गणाधिपः॥ धूम्र केतुर्गणाध्यक्षो भाल चन्द्रो गजानन०॥ इत्यादिभि र्मन्त्रैर्गणेशं सम्पूज्य तत्र—सङ्कल्पः—ॐ विष्णु ३—

---

चततः॥ शिरश्चिच्छेदखड्गेन ततो सा र पतद्भुवि॥ ३६॥ तत सिंह श्चखादोग्रदंष्ट्राक्षुण्णशिरोधरान्॥ असुरांस्तांस्तथा काली शिवदूती तथा परान्॥ ३७॥ कौमारी शक्ति निर्भिन्नाः केचिन्नेशुर्महासुराः॥ ब्रह्माणी मंत्र पूतेनतोये नान्येनिराकृताः॥३८॥ माहेश्वरीत्रिशूलेन भिन्नाः पेतुस्तथा परे॥ वाराही तुंड घातेन केचिच्चूर्णी कृता भुवि॥ ३६॥ खंडखंड च चक्रेण वैष्णव्या दानवाः कृताः॥ वज्रेण चैन्द्री हस्ताग्र विमुक्तेन तथा परे॥ ४०॥ केचिद्विने शुर सुराः केचिन्नष्टा महाहवात्॥ भक्षितारचापरे काली शिव दूतीमृगाधिपैः॥ ४१॥ इति मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवी माहात्म्ये निशुम्भ वधो नाम नवमोऽध्यायः॥ ६॥ उवाच॥ २॥ श्लोक॥ ३८॥ पत्रं॥ २१॥ एवमादितः॥ ५४३॥

अथध्यानम्—उत्तप्त हेम रुचिरां रवि चन्द्र वह्नि नेत्रां धनुश्शरयुताकुश पाश शूलम्॥ रम्यैर्भुजैश्च दधतीं शिव शक्ति रूपां कामेश्वरीं हृदि भजामि धृतेन्दु लेखाम्॥ १०॥ ऋषिरुवाच॥ १॥ निशुंभ निहतं दृष्ट्वा भ्रातरं प्राण संमितम्॥ हन्यमानं बलं चैव शुंभः क्रुद्धोऽब्रवी द्वचः॥ २॥ बला वले पाद्दुष्टे त्वं मादुर्गे गर्वमा वह॥ अन्यासां बल मा श्रित्य युद्ध से याति मानिनी॥ ३॥

देव्युवाच॥ ४॥ एकैवाहं जगत्यत्र द्वितीया काममापरा॥ पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः॥ ऋषिरुवाच॥ ५॥ ततः समस्ता स्तादेव्यो ब्रह्माणि प्रमुखालयम्॥ ६॥ तस्या देव्यास्तनौ जग्मुरेकै वासीत्तदांबिका॥ ७॥ देव्युवाच॥ ८॥ अहं विभूत्या बहुभि रिह रूपै र्यदास्थिता॥ तत्सं हृतं मयै कैवतिष्ठा म्याजौ स्थिरो भव॥ ६॥ ऋषिरुवाच॥ १०॥ ततः प्रववृते युद्धं देव्याः शुंभस्य चोभयोः॥ पश्यतां सर्व देवानाम सुराणां च दारुणम्॥ ११॥ शर वर्षैः

श्री मद्भगवतो महा पुरुषस्य विष्णु राज्ञया प्रवर्त्त मानस्य अद्य ब्रह्मणः द्वितीये परार्धे श्री श्वेत वाराह कल्पे वैवस्वत मन्वन्तरे अष्टा विंशति तमे युगे कलि प्रथम चरणे जम्बू द्वीपे भारतखण्डे बद्रिकाश्रमे भारत वर्षे आर्य्या वर्ता न्तर्गतहिमपर्वतैक देशे केदार खण्डान्तर्गत पुण्य क्षेत्रे अलक नन्दामन्दाकिन्यो मध्ये बौद्धा वतारे अस्मिन्वर्तमाने अमुक नाम संम्वत्सरे अमुका ऽयने अमुकर्तौ अमुक मासे अमुक पक्षे अमुक वासरे अमुक तिथौ अमुक नक्षत्रे अमुक राशि स्थिते चन्द्रे अमुक राशि स्थिते श्री सूर्य्ये अमुक राशि स्थिते देवगुरौ शेषेषु ग्रहेषु यथा यथं राशि स्थानस्थितेषु सत्सु एवं गुणविशेषण विशिष्टायां शुभ पुण्यतिथौ मम ऽत्मनः

---

शिवैः शस्त्रैस्तथास्त्रैश्चैव दारुणैः तयोर्युद्ध मभूद्भूयः सर्व लोक भयं करम् ॥ १२ ॥ दिव्यान्यस्त्राणीस वशो मुमुचे यान्यथाम्बिका ॥ त भंजवानि दैत्येन्द्रस्तत्प्रवीघात कर्तृभि ॥ १३ ॥ मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी ॥ व भंजलीलयै वोग्र हुंकारोच्चारणा दिभिः ॥ १४ ॥ ततश्शर शतैर्देवी माच्छादयत सो सुरः ॥ सापि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः ॥ १५ ॥ छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमथा ददे ॥ चिच्छेद । देवी चक्रेण ताम प्यस्य करेस्थिताम् ॥ १६ । ततः खड्ग मुपादाय शत चन्द्रं च भानुमत् ॥अभ्यधावत्तदा देवीं दैत्यानामधिपेश्वरः१७ ॥तस्यापततएवाशुखड्गंचिच्छेद चण्डिका ॥ धनुर्मुक्तैः शितैर्बाणैश्चर्मचार्ककरामलम् ॥ १८ ॥ हताश्व सतदा दैत्य श्छिन्नधन्वाविसारथिः ॥ जग्राह मुद्गरं घोरमंबिका निधनोद्यतः ॥ १९ ॥ चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः ॥ तथापिसोभ्यधा वत्तां मुष्टि मुद्यम्य वेगवान् ॥ २० ॥ समुष्टिं पातयामास हृदयेदैत्य पुङ्गवः ॥ देव्यास्तं चापि सा देवी तलेनो रस्य ताडयत् ॥ २१ ॥ तल प्रहाराभिहतो निप पातमही तले ॥ स दैत्य राजः सहसा पुन रेव तथोत्थितः ॥ २२ ॥ उत्पत्य च प्रगृह्योच्चैर्देवीं गगन मास्थितः ॥ तत्रापि सानिराधारा युयुधे तेन चंडिका ॥ २३ ॥ नियुद्धंखे तदा दैत्यश्च चण्डिका च परस्परम् ॥ चक्रतुः प्रथम सिद्ध मुनिविस्मय कारकम् ॥ ततोनियुद्धं सुचिरं कृत्वा तेनांबिका सह ॥ २४ ॥ उत्पाट्य भ्रामयामास चिक्षेप धरणी तले ॥ २५ ॥ सक्षिप्तो धरणीं प्राप्य मुष्टि मुद्यम्य वेगितः ॥ अभ्यधावत दुष्टात्मा चण्डिका निधने च्छया ॥ २६ ॥ तमा यांतं ततो देवी सर्व दैत्य जनं श्वरम् । जगत्यां पातया मास भित्वा शूलेन वक्षसि ॥ २७ ॥ सगतां सुः पपा

श्रुति स्मृतिपुराणोक्त फलप्राप्त्यर्थं(मम ऐश्वर्याभि वृद्धयर्थम् ।अप्राप्तलक्ष्मी-प्राप्त्यर्थम् ।सकलमनईप्सितकामनासंसिद्धयर्थम् । लोकेवासभायांराजद्वारेवा सर्वत्रयशोविययलाभादिप्राप्त्यर्थम्इहजन्मान्तरेवासकलदुरितोमशमनार्थं तथा ममसभार्यस्य सुपुत्रस्य सुबाधवस्यअखिलकुटुम्ब सहितस्य स पशोः समस्त भय व्याधि जरापीड़ामृत्यु परि हार द्वारा आयुरारोग्यैश्वर्याभि वृद्धयर्थम् । तथा मम जन्मराशेर खिल कुटुम्बस्य वाजन्मराशेः सकाशाद्ये केचिद्विरुद्ध चतुर्थाष्टमद्वादशस्थान स्थित क्रूर ग्रहास्तै सूचितं सूचियिष्य माणं च यत्सर्वारिष्टंतद्विनाशद्वारा एकादश स्थान स्थिर वच्छुभ फल

---

गोर्या देवी शलाम विदित ॥ चाल यन्स कलां पृथ्वीं साप्ति द्वीपांसपर्वताम्॥२८॥ ततःप्रशान्तमखिलंहतेतास्मिन्दुरात्मनि ॥जगत्स्वास्थ्य-तीवापनिर्मलं चाभवन्नभः उत्पातमेघास्सोल्कायेप्रागासंस्ते शर्म ययुः ॥ सरितो मार्ग वा हिन्यस्तथा सस्तत्र पातिते ॥ ३० ॥ ततो देवा गणाः सर्वे हर्ष निर्भरमानसाः ॥ बभू वुर्निहते तस्मिन्गाधर्वा ललितं जगुः ॥ ३१ ॥ अवादयंस्तथै वान्ये नघृतु श्चाप्सरोगणाः ॥ ववुः पुण्यास्तथा स्वस्त्वासुप्रभोभूद्दिवा करः ॥ जज्वलुरग्नयश्शांताःशांता दिग्जनिः ॥३२॥इतिमार्कंडेयपुराणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्येशुंभ वधो नामाद-शमोऽध्यायः॥१०॥उवाच॥४॥अर्धं॥१॥श्लो०॥२७॥ एवमादितः ॥ ५७६ ॥

अथध्यानम्—बालर विद्युति मिन्दु किरीटां तुङ्ग कुचां नयन त्रय युक्ताम् ॥ स्मेरमुखी वरदां कुश पाशा भीति करीं प्रभजे भुवनेशीम् ऋषिरुवाच ॥ १ ॥ देव्या हते तत्र महासुरेन्द्रेसेंद्राः सुरा वह्नि पुरोग मास्ताम् कात्यानीं तुष्टुव रिष्ट लाभाद्विकासिवक्त्राब्जविकासि ताशाः ॥ २ ॥ देवि प्रपन्नार्तिहरे प्रसीद, प्रसीद मातर जगतो गिलस्य । प्रसीद विश्वेश्वरि पाहि विश्वं । त्वमीश्वरी देविचरा चरस्य ॥ ३ ॥ आधार भूता जगतस्त्वमेका । मही स्वरूपेणयतः स्थितासि अपां स्वरूप स्थितया त्वयैत दाप्यायते कृत्स्नमलघ्यवीर्ये ॥ ४ ॥ त्वं वैष्णवी शक्ति रनंत वीर्या विश्वस्य बीजं परमासि माया ।, सं मोहितं देवि समस्त मेत त्वं वैप्रसन्ना भुवि मुक्तिहेतुः ॥ ५ ॥ विद्याः समस्ता स्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु ॥ त्वयैकया पूरितमं बयैतत् । कातेस्तुतिः स्तव्य परापरोक्तिः ॥ ६ ॥ सर्व भूतायदा देवी स्वर्ग मुक्ति प्रदायिनी ॥ त्वं स्तुतास्तुतये कावा भवंति परमोक्तयः ॥ ७ ॥ सवर्गा बुद्धि रूपेण जनस्य हृदि संस्थिते ॥ स्वर्गा पवर्गदे देवि नारायणि नमोस्तुते ॥ ८ ॥ कला काष्टादि रूपेण परिणाम प्रदायिनि ॥ विश्वस्यो परतौशक्ते नारायणि नमोस्तुते ॥ ९ ॥ सर्व मंगलमा मंगल्ये शिवे सर्वार्थ साधिके ॥ शरण्ये

प्राप्त्यर्थम्। पुत्र पौत्रादि सन्तते रविच्छिन्न वृद्धयर्थम्। आदित्यादि नवग्रहानु कूलतया सिद्धयर्थम्। तथा इन्द्रादि दशदिक्पाल प्रसन्नता सिद्धयर्थम्। आधिदैविकाऽधिभौतिकाऽध्यात्मिकत्रिविध तापो पशमनार्थम्। धर्मार्थ काम मोक्ष फलावाप्त्यर्थंच ॐ भूर्भुवःस्वः श्री लक्ष्मी नारायण अनन्तो प्रीत्यर्थं यथा ज्ञानेन यथामिलितोपचार द्रव्यैः पुरुष सूक्तेन—ध्याना वाहनादि षोडशोपचार सहितस्य अनन्तो पचारैः पूजन महं करिष्ये। तत्रादौषडङ्ग न्यास पूर्वकं पुरुष सूक्त षोडशाङ्ग न्यास पूर्वकं वा। कलशादि पूजन करिष्ये॥ ॐ भूर्भुवः कलशस्य कलशाय नमः आवाहयामि सर्वो पचारार्थे गन्धाक्षत पुष्पाणि समर्पयामि।

---

त्र्यंबके गौरि नारायणी नमोस्तुते॥१०॥ सृष्टि स्थिति विना शानां शक्ति भूतेसना तनि॥ गुणाश्रयेगुणमये नारायणि नमोस्तुते॥११॥ शरणागत दीनार्त परित्राण परायणे॥ सर्व स्यार्ति हरेदेवि नारायणि नमोस्तुते १२॥ हंसयुक्त विमान स्थे ब्रह्माणी रूपधारिणि॥ कौशांभः क्षीरके देवि नारायणि नमोस्तुते॥ १३॥ त्रिशूल चन्द्राहि धरे महावृषभ वाहिनि माहेश्वरी स्वरूपेण नारायणि नमोस्तुते॥ १४॥ मयूर कुक्कुट वृते महाशक्ति धरे नवे॥ कौमारी रूप संस्थाने नारायणि नमोस्तुते॥ १५॥ शंख चक्र गदा शार्ङ्ग गृहीत परमा युधे प्रसीद वैष्णवी रूपे नारायणि नमोस्तुते॥ १६॥ गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृत वसुंधरे॥ वाराह रूपिणि शिवे नारायणि नमास्तुते॥ १७॥ नृसिंहरूपेणोग्रेण हन्तुं दैत्यान्कृ-तोद्यमे त्रैलोक्य त्राणसहिते नारायणि नमोस्तुते॥ १८॥ किरीटिनि महा वज्रे सहस्र नयनोज्ज्वले॥ वृत्र प्राणहरे चैंद्रिनारायणि नमोस्तुते॥२०॥ दंष्ट्रा कराल वदने शिरोमाला विभूषणे॥ चामुंडे मुंड मथने नारायणि नमोस्तुते॥२१॥ लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे॥ महारात्रि महाविद्ये नारायणि नमोस्तुते॥ २२॥ मेधे सरस्वति वरे भूतिबाभ्रवितामसि॥ नियते त्वं प्रसीदेशेनारायणि नमोस्तुते। २३॥ सर्व स्वरूपे सर्वेशे सर्व शक्ति समन्विते॥ भयेभ्यस्त्राहिनोदेवि दुर्गे देवि नमोस्तुते॥ २४॥ एतत्ते वदनंसौम्यं लोचनं त्रय भूषितम्॥ पातुनः सर्वभीतिभ्युः कात्यायनि नमोस्तुते॥ ज्वाला कराल मत्युग्र मशेषासुर सूदनम्॥ त्रिशूल पातुनोभीतिभेद्र कालि नमोस्तुते॥ २६॥ हिनस्ति दैत्य तेजांसि स्वनेना पूर्य्या जगत्॥ सापंटा पातुनो देवि पापेभ्योनः सुतानिव॥ २७॥ असुरा सृग्वसा पंक चर्चितस्ते करोज्ज्वलः॥ शुभाय खड्गोभवतु चंडिके त्वां नताऽवयम्॥ २८॥ रोगा न शेषा नपि हंसि तुष्टा रुष्टा तु कामान्सकला नभीष्टान्॥ त्वामाश्रितानां न विप-

नमस्करोमि। अनन्तरं कलशोदकेन पूजा द्रव्याणि तथाऽत्मानं च—अपवित्रः आपोहिष्टा। इत्यादि मन्त्रेण पासम्प्रोक्ष्य यथा—अपवित्रः॥ पवित्रो वासर्वा वस्थां गतोऽपिवा। यःस्मरेत्पुण्डरी काक्षं स वाह्याभ्यन्तरः शुचिः॥ ॐ आपोहिष्ठा मयो। भुवस्तानऽउर्ज्जेदधातन। महेरणाय चक्षुसे॥ ५॥ यो व ÷ शिव तमो रसस्तस्य भाजयतेहन ÷ उशतीरि वमातरः ÷ ॥ ६॥ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ। आपो जनयथा चनः॥ ७॥ पश्चात्कलशमुद्रां प्रदर्श्य॥ शङ्खपूजनम्—शङ्खादौ चन्द्र दैवत्यं कुक्षौ वरुण देवता। पृष्टे प्रजापतिश्चैव अग्रेगङ्गा सरस्वती। त्रैलोक्ये यानितीर्थानि वासुदेवस्य चाज्ञया। शङ्खे विष्टन्ति विप्रेन्द्रतस्माच्छङ्खं प्रपूजयेत्। त्वम्पुरासागरोत्पन्नोविष्णुनाविधृतःकरे। निर्मितःसर्वदेवैश्च पाञ्चजन्यायनमोस्तुतेपाञ्चजन्यायविद्महेपावमानायधीमहि।

---

न्नराणां त्वामा श्रिताह्याश्रयतां प्रयांति॥ २६॥ एतत्कृतंयत्कदनं त्वयाऽद्य धर्म द्विषां देवि महासुराणाम्॥ रूपैरनेकैर्वहुधात्ममूर्ति। कृत्वाऽम्बिके तत्प्रकरोतिकाऽन्या॥ ३०॥ विद्यासु शास्त्रे षुविवेक दीपे। ष्वाद्येषु वाक्येषुचका त्वदन्या॥ ममत्वगर्तेति महांधकारे। विभ्रामयत्ये तदतीव विश्वम्॥ ३०॥ रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्यु वलानि यत्र॥ दावा नलोयत्र तथाब्धि मध्ये तत्रस्थिता त्वं परि पासि विश्वम्॥ ३२॥ विश्वेश्वरित्वं परि पासि विश्वं विश्वात्मिका धारयसीति विश्वम्॥ विश्वेश वन्द्या भवती भवंति॥ विश्वा श्रयायेत्वयिभक्ति नाम्नः॥ ३३॥ देवि प्रसीद परिपालय नोऽरिभीते नित्यं यथा सुरवधा दधुनैव सद्यः। पापानि सर्व जगतां प्रशमं नयाशु। उत्पातपाक जनितांश्च महोपसर्गान्॥ ३४॥ प्रणतानां प्रसीदत्वं देवि विश्वार्ति हारिणी॥ त्रैलोक्य वासिना मीड्ये लोकानां वरदा भव॥ ३६॥ देव्युवाच॥ ॥ ३७॥ वर दाहं सुर गणा वरं यंमनसेच्छथ॥ तं वृणुध्वं प्रयच्छामि जगतामुपकारकम्॥ ३७॥ देवाऊचुः॥ ३८॥ सर्वा वाधा प्रशमनं त्रैलोक्यस्या खिलेश्वरि॥ एव मेवत्वया कार्य मस्मद्वैरि विनाशनम्॥ ३६॥ देव्युवाच॥ ४०॥ वैवस्वते वरे प्राप्ते अष्टा विंशतिमेयुगे॥ शुंभो निशुंभ श्चैवान्या वुत्पत्स्येते महासुरौ॥ ४१॥ नद गोप गृहे जाता यशोदा गर्भ संभवा॥ ततस्तौ नाश यिष्यामि विंध्या चल निवासिनी॥ ४२॥ पुनरप्यति रौद्रेण रूपेण पृथिवी तले॥ अव तीर्य हनिष्यामि वैप्र चित्तांस्तु दान वान्॥ ४३॥ भक्षयंत्याश्चतामान्वैप्र चित्तान्महासुरान्। रक्ता दन्ता भविष्यन्ति दाडिमी कुसुमोपमाः॥ ४४॥ ततो मां देवताः स्वर्गे मर्त्य लोके च मानवाः॥ स्तुवंतो व्याहरिष्यंति

तन्न शङ्ख प्रचोदयात् ।।) ॐ अग्नि ऋषि पवमान ऽ पाञ्चजन्य ऽ पुरोहित ऽ तमीमहे महागयम् ॥ ८॥ ॐ भूर्भुव स्व शङ्खस्थ देवतायै नम आवा हयामि सर्वो पचारार्थे गन्ध पुष्पाणि समर्पयामि नमस्करोमि। शङ्खमुद्राप्रदर्शय॥ ( घण्टा पूजनम् ) आगमार्थं तु देवाना गमनार्थं तु रक्षसाम् । घण्टा नादं प्रकुर्वीत पश्चाद् घण्टा प्रपूजयेत्) ॐ सुपर्णोसि ॥ गरुत्त्मास्त्रि वृत्ते शिरो गायत्र्यञ्चतुर्बृहद्रथन्तरे पक्षौ। स्तोमऽआत्मा छन्दा ध स्यङ्गानि यजू ध पिनाम । सामते तनुर्वाम देव्यय्यज्ञायज्ञियम्पुच्छन्धिष्ण्या ऽ श फा ऽ ॥ सुवर्णोसि गरुत्त्मान्दि वङ्ग च्छस्व-पत ॥ ६ ॥—ॐ भूर्भुव स्व घण्टास्थाय गरुडाय नम आवाहयामि। सर्वो पचारार्थे गन्ध पुष्पाणि समपयामि नमस्करोमि । घण्टामुद्रा प्रदर्शय ॥ अथ दीपकम्—ततो दीप पूजन भक्त्यादीप प्रयच्छामि देवाय परमात्मने । त्राहि मानिरयाद् घोरा दीप ज्योति नमोऽस्तुते ॥ ॐ अग्नि ज्योति ज्योति रग्निऽ स्वाहा सूर्यो ज्योति ज्योति ऽ सूर्य्यऽ स्वाहा अग्नि र्वर्चो ज्योति र्वर्च ऽ स्वाहा सूर्यो वर्चो ज्योतिर्वर्च्च ऽ स्वाहा ॥ ज्योतिऽ सूर्य्यऽ सूर्यो ज्योतिऽ स्वाहा ॥ १० । ॐ भूर्भुव स्व

---

सप्तत रक्त दन्तिकाम् । ४८ ॥ भूयश्च शतवार्षिक्या मनावृष्ट्या मनम्भसि ॥ मुनिभि संस्मृता भूमौ सम्भविस्याम्य योनिजा तत शतेन नेत्राणा निरीक्षिष्यामि यन्मुनीन् ॥ कीर्तयिष्यन्ति मनुजा शताक्षी मितिमावत ॥ ४० ॥ ततोऽहम खिल लोकमात्म देह समुद्भवै ॥ भरिष्यामि सुग शाकैरा वृष्टे प्राण धारकै ॥ ४८ ॥ शाकं भरीति विख्यातिं तदायास्या म्यहं भुवि ॥ तत्रैव वधिष्यामि दुर्गमाख्यंमहासुरम् ॥४०॥ दुर्गादेवीति विख्याततन्मेनाम भविष्यति । पुनश्चाहं यदाभीम रूपं कृत्वा हिमाचले ५० रक्षासिभक्ष यिष्यामि मुनीनां त्राण कारणात् ॥ तदामाँ मुनय सर्वे स्तो ष्यन्त्या नम्रमूर्तय ॥ ५१ ॥ भीमा देवीति विख्यात तन्मे नामभविष्यति ॥ यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ॥ ५२ ॥ तदाहं भ्रामरं रूपं कृत्वा सख्यपट् पदम् ॥ त्रैलोक्यस्य हितार्थाय वधिष्यामि महा सुरम् ॥ ५३ ॥ भ्रामरीति चमा लोकास्तदास्तोष्यन्तुसर्वत ॥ इत्थं यदा यदा बाधा द न वोत्था भविष्यति ॥ ५४ ॥ तदा तदा वतीर्याहं करिष्य म्यरि स ज्ञयम् ॥ ५५ ॥

इति मार्कण्डेय पुराणे सावर्णिक म न्वन्तरे देवी माहात्म्ये देव्या नारायणी स्तुर्तिनाम एकादशोऽध्याय ॥ ११ ॥ उवाच ॥ ४ ॥ अर्धे । १ । श्लोक । ४० । पाम् । ५५ । एवमादित ॥ ६३० ।

दीपस्थ देवतायै नमः आवा हयामि सर्वो पचारार्थे गन्धाक्षत पुष्पाणि समर्पयामि नमस्क रोमि ॥ ध्यानम्—शान्ताकारं भुजग शयनं पद्मनाभं सुरेशं विश्वाधारं गगन सदृशं मेघवर्णं शुभाङ्गम्। लक्ष्मी कान्त कमल नयनं योगिभिर्ध्यान गम्यं वन्दे विष्णु भवभय हरं सर्व लोकैकनाथम्। अथ—ॐ विष्णोरराटमसि विष्णोः श्नाप्त्रे स्थो विष्णोस्यूरसिविष्णो र्ध्रुवोसि ॥ वैष्णव मसिविष्णवेत्वा ॥ ११ ॥ अथ विष्णोरावा हनम्।—आवाहयेत्तं गरुड़ो परिस्थितं रमार्ध देहंसुरराज वन्दितम्। कन्सान्तकं चक्र गदाब्ज हस्तं भजामि देवं वसुदेव सूनुम्। ॐ विष्णुर्विचक्रमेत्रेधा निदधे पदम्। समूढ मस्य पा ॐ सुरे स्वाहा। आवाहनम्—आगच्छ भगवन् देव स्थाने चात्र स्थिरो भव। याव त्पूजां करिष्यामि तावत्त्वं सन्निधौ भव ॥ ॐ सहस्रशीर्षापुरुष ऽः सहस्राक्षऽः सहस्रपात् ॥

---

अथ ध्यानम्—विद्युद्दाम समप्रभां मृगपति स्कन्धस्थितां भीषणां कन्याभिः कर बालखेट विलसद्धस्ताभिरासेविताम्॥ हस्तै चक्र गदासि खेट विशिखां श्चापगुणं तर्जनीं बिभ्राणामनलात्मिका शशिधरां दुर्गां त्रिनेत्रांभजे १२ ॥ देव्युवाच ॥ १ ॥ एभिःस्तवैश्चमां नित्यं स्तोष्यतेयः समाहितः॥ तस्याहं सकलां बाधां नाश यिष्याम्य संशयम् ॥२॥ मधु कैटभ नाशं चमहिषासुरघातनम्॥ कीर्तयिष्यंतियेतद्वधं शुंभ निशुंभयोः ॥ ३ ॥ अष्टम्यां च चतुर्दश्यां नवम्यां चैकं चेतसः ॥ श्रोष्यति चैवये भक्त्या मम माहात्म्यमुत्तमम् ॥ ४ ॥ नतेषां दुष्कृतं किंचिद्दुष्कृतोत्थान चापदः। भविष्यति नदारिद्र्यं नचै वेष्टवियो जनम् ॥ ५ ॥ शत्रुतोन भयं तस्य दस्युतोवानराजतः॥ न शस्त्रा नलतो योघात्कश्चित्सं भविष्यति। ६ ॥ तस्मान्ममैतन्माहात्म्यं पठि तव्यं समाहितैः। श्रोतव्यं च सदाभक्त्या परं स्वस्त्ययनंहितत् ॥ ७ ॥ उपसर्गा न शेषांस्तु महामारी समुद्भवान्॥ तथा त्रिविध मुत्पातं माहात्म्यं समयेन्मम। ८। नैत्रै दतरत्यते सम्यक् नित्यमाय तनमम।सदान तद्विमोक्ष्यामिसान्निध्यं तत्र मेस्थितम्॥ ९ ॥ बलिप्रदाने पूजाया मग्निकार्ये महोत्सवे। सर्वंममैत चरितमुच्चार्यं श्राव्यमेव च ॥ १० ॥ जानता जानता वापि बलिपूजां तथा कृताम्॥ प्रतीच्छिष्याम्यहं प्रीत्यावह्नि होमं तथा कृतम् ॥११॥ शरत्काले महापूजाक्रियतेयाच वार्षिकीतस्या ममे तन्माहात्म्यं श्रुत्वा भक्ति समन्वितः ॥ १२ ॥ सर्व बाधाविनिर्मुक्तो धनधान्य सुतान्वितः मनुष्योमत्प्रसादेन भविष्यति नसंशयः ॥ १३ ॥ श्रुत्वा ममैतन् माहात्म तथाचोत्पत्तयः शुभाः ॥ परा क्रमं च युद्धेषु जायते

म भूमिंछ सर्व्वं तत्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ॐ ॥ भूर्भुव स्वः श्री विष्णुनारायण ( अनन्त ) देवताभ्योनमः आवाहन पूर्वकं ध्यानं समर्पयामि ॥ आसनम् ॥ रम्यं सुशोभनं दिव्यं सर्व सौख्य करं शुभम् । आसनं च मयादत्तं गृहाण परमेश्वर ॥ ॐ पुरुषऽएवेद छं सर्व्वंयद्भूतंयच्च भाव्यम् । उतामृतत्वस्येशानो यदन्ने नातिरो हति ॥ ॐ भूर्भुवः स्वः श्री विष्णु लक्ष्मीनारायण ( अनन्त ) देवता भ्यो नमः आसनं समर्पयामि । पाद्यम्— उष्णोदक निर्मलं च सर्व सौगन्ध्य संयुतम् । पाद प्रक्षालनार्थाय दत्तं ते प्रति गृह्यताम् ॥— ॐ एता वानस्यं । महि मातो ज्यायाँ श्च पूरुष ऽः । पादो स्यविश्वा भूतानि त्रिपादस्या मृतन्दिवि । ॐ भूर्भुवः स्वः श्री लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः पाद्यं समर्पयामि ॥ अर्ध्यम्—अर्घ्यं गृहाण देवेश गन्ध पुष्पाक्षतैः सह । करुणा कर मेदेव गृहाणार्घ्यं- नामो ऽस्तुते ॥ ॐ त्रिपा दूर्ध्व ऽउदै त्पुरुष ऽः पादो स्येहा भवत्- पुन ÷ ततो विष्वङ्व्य क्र- मत्सा शना नशने ऽअभि । ॐ भूर्भुवः स्वः श्री लक्ष्मी नारायण ( अनन्त ) देवता-

---

निर्भय- पुमान् ॥ १४ ॥ रिपवः सङ्क्षय याति कल्याणं चोपपद्यते ॥ नं वृते च कुलं पुंसां माहात्म्यं मम श्रृण्वताम् ॥ १५ ॥ शांतिकर्मणि सर्वत्र तथा दुः स्वप्न दर्शने ॥ ग्रह पीड़ा शुचो प्रासु माहात्म्य शृणुयान्मम ॥ १६ ॥ उपसर्गाः शमं यांति ग्रह पीडाश्च दारुणाः ॥ दुः स्वप्न च नृभिर्दृष्टं सुस्वप्नमुप जायते ॥ १७ ॥ बाल ग्रहाभि भूतानां बालानां शान्ति कारकम् ॥ संघातभेदे च नृणां मैत्री करणमुत्तमम् ॥ १८ ॥ दुर्वृत्ता नाम शेषाणां बलहानि करं परम् ॥ रक्षो भूत पिशाचानां पठना देव नाशनम् ॥ १९ ॥ सर्वं ममैतन् माहात्म्य् मम सन्निधि कारकम् ॥ पशुपुष्पार्घ्यं धूपै श्चगन्ध दीपै स्तथो त्तमैः ॥ २० ॥ विप्राणां भोजनै र्होमैः प्रोक्षणीयैरहर्निशम् ॥ अन्य श्चविविधै र्भोगैः प्रदानै र्वत्सरेणया ॥ २१ ॥ प्रीतिर्मे क्रियते सास्मि न्सकृदु च्चरिते श्रुते ॥ श्रुत हरति पापानि तथा रोग्यं प्रयच्छति ॥ २२ ॥ रक्षां करोति भूतेभ्यो जन्मनां कीर्तनंमम ॥ युद्धेषु चरितं यन्मे दुष्ट दैत्य निबर्हणम् ॥ २३ ॥ तस्मिन् छ्रुते वैरि कृतं भयं पुंसां न जायते ॥ युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ॥ २४ ॥ ब्रह्मणाच कृतास्तास्तु प्रयच्छन्ति शुभामतिम् ॥ अरण्ये प्रान्तरे वापि दावाग्नि परिवारितः ॥ २५ ॥

भ्यो नमः अर्घ्यं समर्पयामि ॥ आचमनम्—सर्व तीर्थ समायुक्तं
सुगन्धि निर्मलं जलम् । आचम्यतां मया दत्तं गृहीत्वा परमे-
श्वर ॥—ॐ ततो विराड जायत विराजो ऽअधि पुरुष ऽः । स
जातोऽ अत्यरिच्यत पश्चाद्भूमि मथो पुर ऽः ॐ भूर्भुवः श्री लक्ष्मी
नारायण ( अनन्त ) देवताभ्यो नमः आचमनीयं समर्पयामि । स्नानम्—
गङ्गा—सरस्वती रेवा पयोष्णी नर्मदा जले । स्नापितो ऽसि मया
देव तथा शान्ति कुरुष्वमे ॥ ॐ तस्माद्यज्ञा त्सर्वहुतः ऽः सम्भृत-
म्पृषदा ज्यम् । पशूँ स्ताँ श्चक्रे वायव्या नारण्याग्म्या म्या श्चये ॥
ॐ भूर्भुवः स्वः श्री लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नम. स्नानं स-
मर्पयामि ॥ [ अथ क्षेपकम्—पञ्चामृतस्नानम्—पयो दधि घृत चैव मधु च
शर्करायुतम् । पञ्चामृतं मयानीतंस्नानार्थं प्रति गृह्यताम् ॥—ॐ पञ्चनद्य :ऽ
सरस्वती मपि यन्ति सस्त्रोतसः ऽ । सरस्वतीतु पञ्चधा सोदेशे भवत्सरित् ॥

---

दस्युभिः वांवृतः शून्ये गृहीतो वारि शत्रुभिः ॥ सिंह व्याघ्रा
नुया तो वा वनेवा वन हस्तिभिः ॥ २६ ॥ राज्ञा क्रुद्धे नचा ज्ञप्तो
वध्यो बंधगतोपिवा । आघूर्णितोवा वातेन स्थितः पोत महार्णवे । २७॥
पतत्सु चापि शस्त्रेषु संग्रामे भृश दारुणे ॥ सर्व बाधा सुघोरासु
वेदनाभ्यर्दितो पिवा ॥ २८ ॥ स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् ॥
मम प्रभावात्सिंहाद्या दस्यवो वैरिण स्तथाः दूरा देव पलायन्ते
स्मरत श्चरितं मम ॥ ३० ॥ ऋषिरुवाच ॥ ३१ ॥ इत्युक्त्वा
साभगवती चंडिका चंडविक्रमा ॥ ३२ ॥ पश्यता मेव देवानां
तत्रैवां तरधीयतः ॥ तेपि देवा निरा तकाः स्वाधि कारा न्यथा
पुरा ॥ ३३ ॥ यज्ञ भाग भुज. सर्वे चक्रुर्विनि हतारय. ॥ दैत्याश्च
देव्या निहते शुंभे देव रिपौयुधि ॥ ३४ ॥ जगद्विध्वंस के तस्मि
न्महाग्रे तुर्न विक्रमे । निशुंभेच महा वीर्ये शेपाः पाताल मा
ययुः ॥ ३५ ॥ एवं भगवती देवी सा नित्यापि पुनः पुनः ॥ संभूय
कुरुते भूप जगत. परिपालनम् ॥ ३६॥ तयैतन्मोह्यते विश्व मैव विश्वं प्रसूयते ॥
सायाचिता चविज्ञानं तुष्टा ऋद्धि प्रयच्छति ॥ ३७ ॥ व्याप्तं तयैतत्स-
कलं ब्रह्माण्ड मनुजे श्वर ॥ महा काल्या महा काले महामारी
स्वरूपया ॥ ३८ ॥ सैव काले महामारी सैव सृष्टि र्भवत्यजा ॥
स्थिति करोति भूतानां सैव काले सनातनी ॥ ३९ ॥ भव काले
नृणां सैव लक्ष्मी वृद्धि प्रदा गृहे ॥ सैवा भावे तथा लक्ष्मीर्विना
शायो पजायते ॥ ४० ॥ स्तुता संपूजिता पुष्पै धूपं गन्धादिभि
स्तथा ॥ ददातिवित्तं पुत्रांश्च मतिंधर्मे गतिं शुभाम् इति श्री मार्कण्डेय

ॐ भू र्भुवः स्व. श्री लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः एक मन्त्रेण पञ्चामृतस्नानं समर्पयामि ॥ शुद्धोदक स्नानम्—ॐ आपो अस्मान्मातरः शुन्ध यन्तु घृतेन नो घृतस्वः पुनन्तु ॥ विश्वं ७ हरि प्रिम्प्रवहन्ति देवीं रुदि दाम्यः शुचिरा पूत एमि । दीप्तान्तं पसस्ति नूराशित्वां तां शिवा ॥ ॐ शगमा परि वृषे भद्रं वर्णे पुष्यन् ॥ परमानन्द बोधाब्धि निमग्नं निजमूर्त्तये । सांगो पांग मिदं स्नानं कल्पयाम्यह मीशिते ॥ ॐ भू र्भुवः स्व. श्री लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः शुद्धोदक स्नानं समर्पयामि ॥ आचमनीयम्—उच्छिष्टोप्य शुचि र्वापि यस्यस्मरण मात्रतः शुद्धि माप्नोति तस्मैते पुनराच मनीयकम् ॥ ॐ भू र्भुवः स्वः श्री लक्ष्मीनारायण ( अनन्त ) देवताभ्यो नमः आचमनीयं समर्पयामि ॥ अथवा पृथग्मन्त्रेण पञ्चामृत स्नानम्—तत्र-पयः स्नानम् कामधेनु समुत्पन्नं सर्वेषां जीवनं परम् । पावनं यज्ञ हेतुश्च पयः स्नानार्थ मर्पितम् ॥—

---

पुराणे सावर्णि के मन्वन्तरे देव्याश्चरित माहात्म्य नाम-द्वादशोध्यायः ॥ १२ ॥ उवाच २ अर्ध २ श्लोक ३७ एवम् ४१ एवमादितः ६७१ ॥

अथध्यानम्—बालार्क मण्डला भाषां चतुर्बाहुं त्रिलोचनाम् ॥ पाशाङ्कुश वरा भीती र्द्धारयन्ती शिवांभजे ॥ १३ ॥ ऋषिरुवाच ॥ १ ॥ एतत्ते कथितं भूप देवी माहात्म्यमुत्तमम् ॥ एवं प्रभावा सादेवी ययेदं धार्यते जगत् ॥ २ ॥ विद्या तथैव क्रियते भगवद्विष्णु मायया । तया त्वमेव वैश्यश्च तथैवान्ये विवेकिनः ॥ ३ ॥ मोह्यन्ते मोहिताश्चैव मोह मेष्यंति चापरे ॥ तामु पैहि महाराज शरणं परमेश्वरीम् ॥ ४ ॥ आराधिता सैव नृणां भोगस्वर्गा पवर्ग दा ॥ ५ ॥ मार्कण्डेय उवाच ॥ ६ ॥ इति तस्यवचः श्रुत्वा सुरथः सनराधिपः ॥ ७ ॥ प्रणिपत्यमहाभाग तमृषिं संशित व्रतम् ॥ निर्विण्णोति ममत्वेन राज्यापहरणे नृप ॥ ८ ॥ जगाम सद्यस्तपसे सच वैश्यो महामुने ॥ सं दर्श नार्थं मं बाया नदी पुलिनमास्थितः ॥ ९ ॥ सच वैश्यस्तपस्तेपे देवी सूक्तं परं जपन् ॥ तौ तस्मिन्पुलिने देव्याः कृत्वा मूर्तिंमहीं मयीम् ॥ अर्हणां चक्रतुस्तस्याः पुष्प धूपाग्नि तर्पणैः ॥ निरा हारौ यता हारौ तन्मनस्कौ समाहितौ ॥ ११ ॥ ददतुस्तौ बलिं चैव निज गात्रा सृगु क्षितम् ॥ एवं समाराधयतो स्त्रिभिर्वर्षैयतात्मनोः ॥ १२ ॥ परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका ॥ १३ ॥ देव्युवाच ॥ १४ ॥ यत्प्रार्थ्यते त्वया भूपत्वयाच कुल नन्दन ॥ १५ ॥ म त्तस्तत् प्राप्यतां सर्वं परितुष्टा ददा मितत् ॥ १६ ॥ मार्कण्डेयउवाच ॥ १७ ॥ ततो वव्रे नृपोराज्य मविभ्रंश्यन्य जन्मनि

ॐ पयः पृथिव्याम्पयऽओषधीषु पयोदिव्यन्तरिक्षे पयोधाः ऽः । पयस्वतीः ऽ प्रदिशः सन्तु मह्यम् ॥ ॐ भू र्भु वः स्वः श्री लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः पयः स्नानं समर्पयामि ॥ पयः स्नानान्ते शुद्धोदक स्नानं समर्पयामि ॥ शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि ॥ दधिस्नानम्—पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मयादेव स्नानार्थं प्रति गृह्यताम् ॥—ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखा करत्प्रणऽआयू ंषि तारिषत् ॥ ॐ भू र्भु वः स्वः श्री लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः दधि स्नानं समर्पयामि ॥ दधि स्नानान्ते शुद्धोदक स्नानं समर्पयामि ॥ शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि ॥ मधुस्नानम्—नवनीत समुत्पन्न सर्व सन्तोष कारकम् । घृतं तुभ्य प्रदास्यामि स्नानार्थं प्रति गृह्यताम् ॥—ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृतेश्रितो घृताम्वस्य

---

॥ १८ ॥ भक्ते चच निजं राज्यं हत शत्रु वलं वलात् ॥ सोपि वैश्यस्ततो ज्ञानं वत्रेनिर्विण्णमा नसः ॥ १९ ॥ ममेत्यह मितिप्राज्ञः संग विच्युति कारकम् ॥ २० ॥ देव्युवाच ॥ २१ ॥ स्वल्पै रहोभि र्नृ पते स्वराज्यं प्राप्स्यते भवान् ॥ हत्वारिपून स्खलितं तव तत्र भविष्यति ॥ २२ ॥ मृतश्च भूयः सं प्राप्य जन्म देवाद्विवस्वतः ॥ २३ ॥ सावर्णिको नाम मनुर भवान्भुवि भविष्यति ॥ वैश्य वर्यत्वयायश्च वरोस्मत्तोभिवाञ्छितः ॥ २४ ॥ तंप्रयच्छामि सं सिद्ध्यै तव ज्ञानं भविष्यति ॥ २५ ॥ मार्कण्डेय उवाच ॥ २६ ॥ इति दत्त्वा तयो र्देवी यथाभिलषितं वरम् ॥ २७ ॥ बभूवांतर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ॥ एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ॥ २८ ॥ सूर्याज्जन्म समासाद्य सावर्णिर् भवितामनुः ॥ २९ ॥ सावर्णि र्भवितामनु रिति द्विरुच्चारणीयः ॥

इति मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवी माहात्म्ये सुरथ वैश्य यो र्वर प्रदानं नाम त्रयो दशोऽध्यायः ॥ उवाच ॥ ६ अर्धाणि ॥ ११ ॥ श्लोकाः ॥ १२ ॥ एवम् २९ एवमादितः ॥ ५०० ॥——अथोत्तरन्यासाः ॥—खड्गिनी शूलिनी—घोरा० हृदयायनमः । शूलेनपाहिनो देवि० शिरसे स्वाहा ॥ प्राच्यां रक्ष प्रतीच्यां च० शिखायैव षट् ॥ . सौम्यानि यानि रूपाणि० कवचाय हुं खड्ग शूल गदा दीनि० नेत्रत्रयायवौषट् सर्वस्वरूपे सर्वेशे० अस्त्राय फट् ॥

अथस्तोत्रकदेवीसूक्तम्—

अथ ध्यानम्—विद्युद्दाम समप्रभां मृग पतिस्कन्धास्थितांभीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्रगदासि खेट विशिखा

धाम। अनुष्टुपधमावह मादयस्व स्वाहा कृतं वृषभव्यक्षिहव्यम् ॥ ॐ भूर्भुवः स्वः श्री लक्ष्मी नारायण (अनन्त) देवताभ्यो नमः घृत स्नानं समर्पयामि ॥ शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि ॥ मधु स्नानम्— तरु पुष्प समुद्भूतं सुस्वादु मधुरं मधु। तेजः पुष्टि करं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥—ॐ मधुःव्वाताऽऋतायतेमधुक्षरन्ति सिन्धवऽः। माद्धीर्न्नऽः सन्त्वोषधीऽ ॥ मधुनक्त मुतोषसोमधुमत्पार्थिवंरजः। मधुद्यौरस्तुनऽःपिता ॥ मधुमान्नोव्वनस्पतिर्म्मधुमाँ ॥ २ ॥ ऽअस्तु सूर्य्यः। माद्धीर्गावो भवन्तुनऽः ॥ ॐ भूर्भुवः स्वः श्री लक्ष्मीनारायण (अनन्त) देवताभ्यो नमः मधु स्नानं समर्पयामि स मधु स्नानान्ते शुद्धोदक स्नान समर्पयामि। शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि ॥ शर्करास्नानम्—इक्षुसार समुद्भूता शर्करा पुष्टि कारिका। मलापहारिका दिव्यास्नानार्थं प्रतिगृह्यताम् ॥—ॐ अपांछ रसमुद्वयसंछसूर्य्ये सन्तंछ समाहितम्। अपा ७ रसस्य यो रसस्तं व्वो गृह्णाम्युत्त ममुपयाम

---

श्चापं गुणं तर्जनीं विभ्राणामन लासिकांशशिधरां दुर्गां त्रिनेत्रांभजे। नमो देव्यै महादेव्यै शिवायै सत नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्मताम् ॥१॥ रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ॥२॥ कल्याण्यैप्रणतांवृद्ध्यैसिद्ध्यैकुर्मो नमो नमः नैऋत्यै भूभृतां लक्ष्म्यैशर्वाण्यै ते नमो नमः॥ ३ ॥ दुर्गायैदुर्ग पारायै नमः। सारायै सव कारिण्यै। ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥४॥ अति सौम्याति रौद्राय नतास्तस्यै नमो नमः। नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥ ५ ॥ या देवी सर्व भूतेषु विष्णु मायेति शब्दिता नमस्तस्यै नमस्तस्यै नमस्तस्यैनमो नमः॥६॥यादेवीसर्वभूतेषुचेतनेत्य भिधीयते। नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः॥७॥या देवी सर्वभूतेषु बुद्धि रूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ८ ॥ या देवी सर्व भूतेषु निद्रा रूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ९ या देवी सर्व भूतेषु क्षुधा रूपेण संस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १० ॥ या देवी सर्व भूतेषु छाया रूपेण संस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ११ ॥ या देवी सर्व भूतेषु शक्ति रूपेण संस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १२ ॥ या देवी सर्व भूतेषु तृष्णा रूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः १३ या देवी सर्व भूतेषु क्षान्तिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १४ ॥ या देवी भूतेषु जाति रूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १५ ॥ या देवी सर्व भूतेषु

गृहीतोसीन्द्राय त्वा जुष्टं तमम् ॥ ॐ भूर्भुवः स्वः श्री लक्ष्मी नारायण (अनन्त) देवताभ्यो नमः शर्करा स्नानं समर्पयामि ॥ शर्करास्नानान्ते आचमनीयं समर्पयामि ॥ षष्टं गन्धोदक स्नानम्–मलया चल सम्भूतं चन्दना गरु सम्भवम् चन्दनं देवदेवेश स्नानार्थं प्रति गृह्यताम् ॥–ॐ गन्ध द्वारां दुराधर्षां नित्य पुष्टां करीषिणीम्। ईश्वरी सर्व भूतानानां तामिहो पह्वयेश्रियम् ॥ ॐ भूर्भुवः स्वः श्री लक्ष्मी नारायण ( अनन्त ) देवता भ्यो नमः षष्टं गन्धोदक स्नानं समर्पयामि । शुद्धोदक दक स्नानम्। स्नानान्ते आचमनीयं समर्पयामि ॥ उद्वर्तन स्नानम्—नाना सुगन्धि द्रव्यं च चन्दनं रजनी युतम्। उद्वर्तनंमया दत्तं स्नानार्थ प्रति गृह्य ताम् ॥—ॐ अ ँ शुना ते अ ँ शु ऽः पृच्यतां परुषा परु ÷ गन्धस्ते सोम मवतु मदाय रसो ऽअच्युत ऽः ॥ ॐ भूर्भुवः स्वः श्री विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः उद्वर्तनस्नानं समर्पयामि ॥ उद्वर्तन स्नानान्ते शुद्धोदक स्नानंसमर्पयामि ॥ शुद्धोदक स्नानान्ते आचमनं समर्पयामि ॥ विशेषम् ॐ भूर्भुवः स्वः श्री विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः पञ्चामृतस्नानान्ते शुद्धादकं शुद्धोदक स्नानान्ते आचमनीयं समर्पयामि ॥

---

लज्जा रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम ॥ १६ ॥ या देवी सर्वभूतेषु शान्ति रूपेण संस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १७ ॥ या देवी सर्व भूतेषु श्रद्धा रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥ या देवी सर्व भूतेषु कान्ति रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥ या देवी सर्व भूतेषु लक्ष्मी रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥ या देवी सर्व भूतेषु वृत्ति रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥ या देवी सर्व भूतेषु स्मृति रूपेणसंस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥२२॥ या देवी सर्व भूतेषु दया रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥ या देवी सर्व भूतेषु तुष्टि रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै-नमस्तस्यै नमो नमः ॥ २४ ॥ या देवी सर्व भूतेषु मातृ रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २५ ॥ या देवी सर्व भूतेषु भ्रान्ति रूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २६ ॥ इन्द्रियाणा मधिष्ठात्री भूतानां चाखिलेषुया । भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥ २७ ॥ चिति रूपेण या कृत्स्न मेव द्व्याप्य स्थिता जगत् । नमस्तस्यै नमस्-

ततः—पञ्चामृतादि स्नानाङ्ग पूजा —ॐ भूर्भुवः स्वः श्री भगवान विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः वस्त्रोप वस्त्रार्थे अक्षतान् समर्पयामि । यज्ञो पवीतार्थे ऽक्षतान् समर्पयामि । गन्ध समर्पयामि । माला परि मल सौभाग्य द्रव्याणि . समर्पयामि । यथा ऋतुकालो द्भव पुष्पाणि समर्पयामि । धूपं दर्शयामि । दीपं दर्शयामि । शर्करो पहार नैवेद्यम्—ॐ प्राणायस्वाहा । ॐ अपानायस्वाहा । ॐ व्याना य स्वाहा । ॐ समानाय स्वाहा । उदानाय स्वाहा । नैवेद्यं समर्पयामि । नैवेद्यान्ते हस्त प्रक्षालनं मुख. प्रक्षालनं च समर्पयामि । करो-द्वर्तनार्थे चन्दनं समर्पयामि । मुख वासार्थे पूगीफल ताम्बूलं समर्पयामि । हिरण्य मुद्रा दक्षिणां समर्पयामि । कर्पूर आरार्तिक्यं दर्शयामि । प्रदक्षिणाः समर्पयामि । मन्त्र पुष्प युक्त नमस्कारं समर्पयामि । विशेषार्घ्यः' —रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्य रक्षक । भक्ताना

---

नमस्तस्यै नमस्तस्यै नमो नमः ॥ २८ ॥ स्तुता सुरैः पूर्वमभीष्ट संश्रया तथा सुरे न्द्रेणादिनेषु सेविता । करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः ॥ २९ ॥ या सा म्प्रतं चोद्धत दैत्य तापितैरस्माभिरीशा च सुरैर्न मस्यते । याचस्मृता तत्क्षण मेव हन्तिनः सर्वा पदो भक्ति विनम्र मूर्तिभिः ॥ ३० ॥

इति तन्त्रोक्त देवी सूक्त समाप्तम् ।

अथ प्राधानिक-रहस्यम् ।

राजो वाच—भगवन्नवतारा मे चण्डिका या स्त्वयो दिताः । एतेषां प्रकृतिं ब्रह्मन्प्रधानं वक्तु मर्हसि ॥ १ ॥ आराध्यं यन्मया देव्याः स्वरूपं येन च द्विज । विधिना ब्रूहि सकलं यथावत्प्रण तस्यमे ॥ २ ॥ ऋषिरुवाच—इदं रहस्यं परम मनाख्येयं प्रचक्षते । भक्तोऽसीति न मे किञ्चित्तवावाच्यं नराधिप ॥ ३ ॥ सर्व स्याद्यामहालक्ष्मी स्त्रिगुणा परमेश्वरी । लक्ष्या लक्ष्य स्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥ ४ ॥ मातु लिङ्ग गदां खेटं पान पात्रं च बिभ्रती । नागं लिङ्गं च योनिं च बिभ्रती नृप मूर्द्धनि ॥ ५ ॥ तप्त काञ्चन वर्णाभा तप्तकाञ्चन भूषणा । शून्यं तदखिलं स्वेन पूरया मास तेजसा ॥ ६ ॥ शून्यं— तद खिलं लोकं विलोक्य परमेश्वरी । बभार परमं रूपं तमसा केवले नहि ॥ ७ ॥ सा भिन्नाञ्जन संकाशा दंष्ट्राङ्कित वरानना । विशाल लोचना नारी बभूवतनु मध्यमा ॥ ८ ॥ खड्ग पात्रशिरः खेटैरलङ्कृत चतुर्भुजा । कबन्ध हारं शिरसा बिभ्राणा हि

मभयं कर्ता त्रातामवभवार्णं वात । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । अनेन सफला र्घेण फलदो ऽस्तु सदा मम ॥ प्रार्थनां समर्पयामि ॥ अर्पणम्—अनेन पञ्चामृतादि स्नानाङ्ग भूत पूजन कृतेन ॐ भूर्भुवः स्वः श्री भगवान् विष्णु लक्ष्मी नारायण ( अनंत ) देवताः प्रीयन्ता न मम ॥ निर्माल्यं विसृज्य । पुनश्च— ततः अभिषेकः कार्यः । स्नापन धारा पात्राय गन्धाक्षत पुष्पं ( तुलशींदलं ) समर्प्य । तदनन्तर मभिषेकार्थे देवानां गन्धाक्षत पुष्पाणि समर्पयेत ॥ शालि-ग्रामोपरि आसनार्थे पूजार्थे च तुलसी-दलं तद्वत्समर्प्यं ॥ स च—यथा—हरिःॐ—ॐ सहस्र शीर्षा० ॥ पुरुष ए्व० ॥ एतावान० ॥ त्रिपादूर्द्ध ऽ० ॥ ततोविराड० ॥ तस्माद्यज्ञात्स० ॥ तस्माद्यज्ञा त्सर्व हुत ऽऋच ऽः सामानि जज्ञिरे। छन्दा छ सि जज्ञिरे तस्मा द्यजु स्तस्मा दजायत ॥ तस्मा-दश्वा ऽ अजा यन्त येके चोभया दत्त ऽः । गावो ह जज्ञिरे तस्मान्तस्मा ज्जाता ऽअजावयः॑ तं यज्ञ म्बर्हिषिप्रौ क्षन्नपुरुष ञ्जात मग्रत ःऽ । तेनदेवाऽअजयन्त साद्धयाऽऋषय श्चये ॥ यत्पुरुषं व्यदधु ःऽ कतिधाव्यकल्पयन् । मुखङ्किमस्यासीत्किम्बाहू किमूरु पादाऽ उच्यते ॥ ब्राह्मणोस्य मुख मासीद बाहूराजन्यः॑कृत ऽ । ऊरु तदस्य यद्वैश्यः॑पद्भ्या छ शूद्रोऽअजायत ॥ चन्द्रमा मनसो जातश्चक्षो ःऽ सूर्य्योऽअजायत । श्रोत्रा द्वायुश्च प्राणश्च मुखादग्नि रजायत ।

---

शिरः स्रजम् ॥ ६ ॥ सां प्रो वाचमहा लक्ष्मी तामसो प्रमदोत्तमा । नामकर्म चमे मात देहि तुभ्यं नमोनमः ॥ १० ॥ तां प्रोवाच महालक्ष्मी स्तामसी प्रमदो त्तमाम् । ददामि तव नामनि यानिकर्माणि तानिते ॥ ११ ॥ महामाया महाकाली महामारी क्षुधा तृषा । निद्रा तृष्णा चैक वीरा काल रात्रि र्दुरत्यया ॥ १२ ॥ इमानि तव नामानि प्रति पाद्यानि कर्मभिः । एभिः कर्माणि तेज्ञात्वा योऽधीते सोश्नुते सुखम् । १३ ॥ तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृपम् । सत्त्वाख्येनाति शुद्धेन गुणेनेन्दु प्रभंदधौ ॥ अक्षमालाङ्कुशधरा वीणा पुस्तक धारणी । सा बभूव वरा नारी नामान्यस्यैवसा ददौ । १५ ॥ महा विद्या महावाणी भारती वाक्सरस्वती । आर्या ब्राह्मी कामधेनु वीज-गर्भा च धीश्वरी ॥ १६ ॥ अथो वाच महालक्ष्मी महाकाली सरस्वतीम् ॥ युवां जनयतां देव्यौ मिथुने स्वानु रूपतः ॥ १७ ॥ इत्युक्त्वात महालक्ष्मीः ससर्ज मिथुन स्वयम् हिरण्य गर्भौ रुचिरौ स्त्री पुंसौ कमलासनौ ॥ १८ ॥ ब्रह्मन्विधे विरञ्चे ति धात रित्याह तं नरम् । श्रीः पद्मे कमले लक्ष्मी त्याह

नाभ्याऽआसी दन्तरिक्ष ७ शीर्ष्णोद्यौः समवर्त्तत । पद्भ्यांभूमिर्दिशः श्रोत्रात्तथा लोकाँ २ ॥ऽ अकल्पयन् । यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोस्यासी दाज्यं ग्रीष्मऽइध्मः शरद्धविः ॥ सप्तास्या सन्परिधयास्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञन्तन्वानाऽअवध्नन्पुरुषम्पशुम् ॥ यज्ञेन यज्ञमय जन्त देवास्तानि धर्म्माणि प्रथमान्या सन् । तेह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्धयाः सन्ति देवाः । अत्रा वसरे शङ्ख पूरितोदककेन—ॐ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा ७ सुरे स्वाहा ॥ इति मन्त्रेण शालिग्रामंस्नापयेत् । पश्चात् स्नापनधारापात्री दकेन श्री भगवान विष्णु नारायण ( अनन्त ) देवतानां शान्त्याभिषेकं कुर्यात् सच यथा— ॐ द्यौः शान्ति रन्तरिक्ष ७ शान्तिः पृथिवी शान्ति राप :—शान्ति रोष धयः शान्तिः। वनस्पतयः शान्तिर्व्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्वं ७ शान्ति शान्ति रेव शान्तिः सामा

---

माया चतां स्त्रियम् ॥ १९ ॥ महाकाली भारती च मिथुने सृजतः सह । एतयो रपि रूपाणि नामानि च वदामिते ॥ २० ॥ नील कण्ठं रक्त बाहुं श्वेताङ्गं चन्द्र शेखरम् । जनया मास पुरुषं महाकाली सितांस्त्रियम् ॥ २१ ॥ सरुद्रः शङ्करः स्थाणु कपर्दी च त्रिलोचनः । त्रयी विद्या कामधेनुः सास्त्री भाषाक्षरास्वरा । २२ । सरस्वती स्त्रियं गौरीं कृष्णं च पुरुषं नृप । जनया मासनामानितयो रपि वदामिते । २३ । विष्णुकृष्णोहृषीकेशो वासुदेवो जनार्दनः । उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा ॥२४॥ एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे । चक्षुष्मन्तोऽनुपश्यन्ति नेतरे तद्विदो जनाः ॥ २५ ॥ ब्रह्मणे प्रददौ पत्नीं महा लक्ष्मी नृप त्रयीम् । रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥ २६ ॥ स्वरया सह संभूय विरञ्च्योऽण्ड मजी जनत् । बिभेद भगवान् रुद्रस्तद् गौर्या सह वीर्यवान ॥ २७ ॥ अण्डमध्ये प्रधानादि कार्यं जात मभून्नृप । महाभूतात्मकं सर्वं जगत्स्थावर जङ्गमम् ॥ २८ । पुपोष पालया मास तल्लक्ष्म्या सह केशवः संजहार जगत्सर्वं सहगौर्या महेश्वरः ॥२९॥ महालक्ष्मीर्महाराज सर्व सत्व मयीश्वरी । निराकारा च साकारा सैव नाना भिधानभृत ॥३०॥ नामान्तरै र्निरूप्यैषानाम्नानान्येनकेनचित् ॥३१॥

इति प्राधानिक रहस्यं समाप्तम् ।

## अथवैकृतिक रहस्यम्—

ऋषिरुवाच—त्रिगुणा तामसी देवी सात्त्विकी यात्रिधोदिता । सा शर्वा

यतो यतः समी हसे ततो नोऽभयङ्कुरु । शन्न कुरुप्रजाभ्योऽभयन्नः पशुभ्य+ ॥ ॐ सर्वेषां वा ऽ एष वेदाना छ रसोयत्साम सर्वेषामेवै नमे वद् वेदना छ रसेनाभिषिञ्चति ॥ ( ब्राह्मण मन्त्रः ) ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु । सर्वारिष्ट शान्तिर्भवतु ॥ ॐ अमृताभिषेकोऽस्तु ॥ ॐ भूर्भुवःस्वः श्री विष्णु नारायण ( अनन्त ) देवताभ्यो नमः अभिषेकं समर्पयामि ॥ इतिक्षेपकम् ॥ पश्चात् 'देवतीर्थं धृत्वा । ततो देवाचा-चमनम्—ॐ केशवाय नमः स्वाहा ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा । इत्वा चमनं समर्पयेत् ॥ हस्त प्रक्षालनम्—ॐ गोविन्दाय नमः ॥ वस्त्रम्—सर्व भूषाधिके सौम्ये लोक लज्जा निवारणे । मयोप दिवेतुभ्यं वाससीप्रति गृह्यताम् ॥ ॐ तस्मा द्यज्ञात्सर्व्वहुतऽ ऋचः सा०॥ ॐ—भूर्भुवः स्वः श्री विष्णु नारायण (अनन्त) देवताभ्यो नमःवस्त्रं वस्त्राऽभावे तिल,ऽक्षतान्समर्पयामि ॥यज्ञोपवीतम्—नवभिस्तन्तु-भियुक्तं त्रिगुणं देवता मयम् ॥ उपवीतं चोत्तरीय गृहाण परमेश्वर ॥ ॐ तस्माद्यज्ञा ऽ स० ॐ भूर्भुवः स्वः श्री विष्णु नारायण ( अनन्त ) देवताभ्यो नमः यज्ञोपवीतं ( यज्ञो पवीताऽभावेऽक्षतान् ) समर्पयामि ॥

---

चण्डिकादुर्गाभिद्रा भगवतीर्यते ॥ १ ॥ योग निन्द्रा हरे रुक्ता महाकाला तमोगुणा । मधुकैटभ नाशार्थं यां तुष्टा वाम्बुजासनः ॥ २ ॥ दश वक्त्रा दशभुजा दशपादाञ्जनप्रभा । विशालया राज माना त्रिशल्लोचन मालया ॥ ३ ॥ स्फुरद्दशन दंष्ट्रासा भीम रूपापि भूमिप । रूप सौभाग्य कान्तीनां सा प्रतिष्ठा महाश्रियः ॥ ४ ॥ खड्ग बाणगदा शूल शङ्ख चक्र भुशुण्डिभृत् । परिघं कार्मुकं शीर्षं निश्चयो तद्रुधिरं दधौ ॥ ५ ॥ एषासा वैष्णवी माया महा काली दुरत्यया आराधिता वशी कुर्यात्पूजा कर्तुश्चरा चरम् ॥ ६ ॥ सर्वदेव शरीरेभ्योयाऽविर्भूताऽमित प्रभा । त्रिगुणामा महालक्ष्मोः साक्षान्महिषमर्दिनी ॥ श्वेतानना नील भुजा. सुश्वेतस्तन मण्डला रक्त मध्या रक्त पादा नील जङ्घोरुरुन्मदा ॥ ८ ॥ सुचित्र जघना चित्र माल्याम्बर विभूषणा चित्रानुलेपना कान्ति रूप सौभाग्य शालिनी ॥ ६ ॥ अष्टादश भुजा पूज्या सा सहस्रभुजा सती । आयुधान्यत्र वक्ष्यन्ते दक्षिणाधः कर क्रमात् ॥ १० ॥ अक्षमाला चकमलं बाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुं शङ्खो घण्टा च पाशकः ॥ ११ ॥ शक्तिर्दण्डश्चर्म चापं पान पात्रं कमण्डलु । अलङ्कृत भुजामे भिरायुधैः कमलासना ॥ १२ ॥ सर्व देव मयी मीशां महालक्ष्मी मिमां नृप । पूजयेत्सर्व लोकानां सदेवानां प्रभुर्भवेत् ॥१३॥ गौरीदेहात्समुद्भूता या सत्त्वैक गुणाश्रया । साक्षात्सरस्वतीप्रोक्ता शुम्भासुर निबर्हिणी ॥ १४ ॥

गन्धम्—श्री खण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्। विलेपनं सुर श्रेष्ट चन्दनं प्रति गृह्यताम् ॥ ओं त्वंगन्धर्वा ओं भूर्भुवः स्वः श्री विष्णु नारायण ( अनन्त ) देवेभ्यः गन्धं अक्षता सहितं सौभाग्य द्रव्यादीनि अनामिका ङ्गुष्ठेनसमर्पयामि ॥ अथ क्षेपकम्—अक्षताः ( यव, अक्षतार सुर श्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः। मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ तिलान् ओं अक्षन्नमीम दन्तह्यवप्रियाऽअधूषत। अस्तोषत स्वभानवोविप्रा नविष्ठ्यामती यो जान्विन्द्रते हरी ॥ ओं भूर्भुवः स्वः श्री विष्णुनारायण ( अनन्त ) देवताभ्यो नमः अक्षतान्समर्पयामि ॥ इति क्षेपकम् पुष्पाणि—माल्यादीनि सुगन्धीनि मालत्या दीनि वै प्रभो। मयानीतानि पुष्पाणि गृहाण परमेश्वर॥ ओं पत्पुरुषं० ॥ ओं भूर्भुवः स्वः श्रीविष्णु नारायण ( अनन्त ) देवताभ्यो नमः पुष्पाणि ( सौभाग्यद्रव्य सहितं च ) समर्पयामि। ( शालि ग्रामस्यासनार्थं तुलसी दलं ॥ समर्प्य। ) एवं यवतिला ऽक्षतान्समर्पयामि ) तुलशीदलार्पणम्— तुलशीहेमरूपां चरत्न रूपां चमञ्जरीम्। भव मोक्ष प्रदां तुभ्यमर्पयामि हरि प्रियाम् ॥ — ॐ विष्णोः कर्म्माणि। पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः ऽ सखा ॥ ॐ भूर्भुवः स्वः श्री भगवान् विष्णु लक्ष्मीनारायण ( अनन्त ) देवताभ्यो नमः तुलशीदलं समर्पयामि ॥ पृथक मन्त्रेण सौभाग्य द्रव्यम्—हरिद्रां कुङ्कुमं चैवसिन्दूरं कज्जला न्वितम्। सौभाग्य द्रव्य संयुक्तं गृहाण परमेश्वरी ॥ ॐ अहिरिव भोगैः पर्य्येति बाहुं ज्याया हेतिम्परि बाधमानः। हस्तघ्नोविश्वा व्ययुनानि विद्वान्पुमान्पुमां ६ सम्परि पातु विश्व-

---

दधौ चाष्ट भुजा बाण मुसले शूल चक्र भृत। शङ्खं घण्टां लाङ्गलं च कार्मुकं वसुधाधिप ॥ १४ ॥ एषा सपूजिता भक्त्या सर्वज्ञत्वं प्रय च्छति। निशुम्भ मथिनी देवी शुम्भा सुर निवर्हिणी ॥ १६ ॥ इत्युक्तानि स्वरूपाणिमूर्त्तीनां तव पार्थिव। उपासनं जगन्मातुः पृथगासां निशा मय ॥ १७ ॥ महा लक्ष्मी र्यदापूज्या महाकाली सरस्वती। दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुन त्रयम् ॥ १८ ॥ विरञ्चि० स्वरया मध्ये रुद्रो गौर्या च दक्षिणे। वामे लक्ष्म्या हृषी .केशः पुरतो देवता त्रयम् ॥ १६ ॥ अष्टादशभुजा मध्ये वामे चास्या दशानना। दक्षिणे ऽष्टभुजा लक्ष्मीर्मह तीति समर्चयेत् ॥ २० ॥ पूर्वादि दशतः पूज्या अति माङ्गादि भैरवाः। अष्टादशा भुजा चैषा यदा पूज्या नराधिप ॥ २१ ॥ दशानना चाष्ट भुजा दक्षिणो त्तरो स्तदा ॥ दशा नना यदापूज्या दक्षिणो भयोस्तदा ॥ २२ ॥ काल

वर्त ÷ ॥ ॐ भूर्भुवः स्वः श्री भगवान् विष्णु लक्ष्मी नारायण (अनन्त) देवताभ्यो नमः सौभाग्य द्रव्याणि समर्पयामि ॥ इति क्षेपकम् ॥

धूपम्—वनस्पति रसोद्भूतो गन्धाढयो गन्ध उत्तमः। आघ्रेय सर्व देवानांधूपो ऽयंप्रतिगृह्यताम् ॥—ॐ ब्राह्मणोस्य मुखमासीद् बाहू राजन्यः÷ कृतः। उरू तदस्य यद्वैश्य ÷ पद्भ्या छ शूद्रो ऽअजायत ॥ ॐ भूर्भुवः स्वः श्री भगवान् विष्णु लक्ष्मी नारायण (अनन्त) देवताभ्यो नमः धूपं दर्शयामि ॥ घृत पूरित नीराजनदीपम् आज्यंच वर्ति संयुक्तं वह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्य तिमिरा पह ॥ ॐ चन्द्रमा मनसो जात श्चक्षो. सूर्यो ऽअजायत । श्रोत्राद् वायुश्चप्राणश्च मुखा दग्निरजायत ॥ ॐ भूर्भुवः स्वः श्री विष्णु लक्ष्मी नारायण (अनन्त) देवताभ्यो नमः घृत पूरित नीरा जन दीपं दर्शयामि ॥ नैवेद्यम्—शर्करा घृत संयुक्तं मधुरं स्वादु चोत्तमम्। उपहार समायुक्तं नैवेद्य प्रति गृह्यताम् ॥ ॐ नाभ्या ऽआसी दन्तरीक्ष छ शीर्ष्णो द्यौ ऽः समवर्त्तत। पद्भ्याम्भूमिर्दिश ऽः श्रोत्रा- तथा लोकाँ ॥ २ ॥—ऽअकल्पयन् ॥ ॐ प्राणायस्वाहा। ॐ अपानायस्वाहा। ॐ व्यानाय स्वाहा। ॐ उदानायस्वाहा। ॐ समानायस्वाहा ॥ ॐ भूर्भुवः स्वः श्री भग-

---

मृत्यु च संपूज्या सर्वा रिष्ट प्रशान्तये ॥ यदा चाष्ट भुजा पूज्या शुम्भा सुरनिवर्हिणी ॥ नवास्याः शक्तयः पूज्या स्तदारुद्रविनाय कौ। नमो देव्या इति स्तोत्रैर्महा लक्ष्मीं समर्चयेत् ॥ २४ ॥ अवतार त्रयाचार्यां स्तोत्र मन्त्रा स्तदा श्रयाः ॥ अष्टादश भुजा चैषा पूज्यामहिष मर्दिनी ॥ २५ ॥ महालक्ष्मी र्महकाली सैव प्रोक्ता सरस्वती ॥ ईश्वरी पुण्य पापानां सर्व लोक महेश्वरी ॥ २६ ॥ महिषान्त करी येन पूजितास जगत्प्रभुः ॥ पूजये ज्जगतां धात्रीं चण्डिकां भक्त वत्सलाम् ॥ २७ ॥ अर्घ्यो दिभि रल कौर गंन्ध पुष्पै स्तथौत्तमैः ॥ धूपै दीपैश्च नैवेद्यै र्नाना भक्ष्य समन्वितैः ॥ २८ ॥ रुधिराक्तेन बलिना मांसेन सुरया नृप ॥ बलिमांसादि पूजेयं विप्र वर्ज्या मयेरिता ॥ २९ ॥ तेषां किल सुरा मांसै र्नोक्ता पूजा नृप क्वचित ॥ प्रणामा चमनी यैश्च चन्दनेन सुगन्धिना ॥ ३० ॥ सकर्पूरैश्च ताम्बूलैर्भक्ति भाव समन्वितैः ॥ वाम भागे ग्रतो देव्याश्छिन्न- शीर्षामहासुर ॥ ३१ ॥ पूजयेन्माहिषं येन प्राप्त सायुज्य मीशया। दक्षिणे पुरतः सिंहं समग्रंधर्म मीश्वरम् ॥ ३२ ॥ वाहनं पूजये द्देव

वान् विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः. नैवेद्यं समर्पयामि । नैवेद्य मध्ये पानीयम्—एलो शीर लवङ्गादि कर्पूर परि वासितम् । प्राशनार्थं कृतं तोयं गृहाण परमेश्वर ॥ उत्तरा पोशानं हस्त प्रक्षालनं मुख प्रक्षालनं आचमनेधि ॥ नीयञ्चसम पैयामि ।, करोद्वर्त नार्थे चन्दनं समर्पयामि ॥ मुख वासार्थे ताम्बूलम् पूगीफलं महाद्दिव्यं नागवल्लीदलैर्युतम् एला चूर्णादि संयुक्तं ताम्बूलं प्रति गृह्यताम् ।. ॐ यत्त पुरुषेण। हविषा देवायज्ञ मतन्वत, व्वसन्तो स्यासी दाज्यङ्ग ्ग्रीष्मऽइद्ध्मऽः शरद्धविः ॥ ॐ भूर्भुवः श्वः भगवान् विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः ताम्बूलं समपर्यामि ॥ फलम्—इदं फलं मयादेव स्थापितं पुरतस्तव । तेनमे सफला वाप्तिर्भ वेज्जन्मनि जन्मनि ॥ ॐ याऽः फलिनीर्य्याऽ अफलाऽअपुष्पायाश्च पुष्पिणीऽः । बृहस्पतिप्रसूतस्तानो मुञ्च न्त्वंहसऽः ॥ ॐ भूर्भुवः स्वः श्री भगवान् लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः फलं समर्पयामि ॥ दक्षिणा—हिरण्य गर्भ गर्भस्थं हेमबीज विभावसोः । अनन्त पुण्य फलद मतः शान्तिं प्रयच्छमे ॥ ॐ हिरण्य गर्भः समवर्त्त ताग्रे भूतस्य जात ऽः पतिरेकऽआसीत् सदाधार पृथिवीन्द्यामुते मःकस्मैदेवाय हविषाविधेम ॥ ॐ भूर्भुवःस्वःभगवान् श्रीभ०विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो

---

धृतं येन परा परम् ॥ ततः कृताञ्जलि भूत्वा स्तुवीत चरितैर्मिः ॥ ३३ ॥ एकेनवा मध्यमेन नैकेने तयोरिह ॥ चरितार्थं तु न जपेज्जपंश्छिद्र मवाप्नुयात् ॥ स्तोत्र मन्त्रैः स्तुवी तेमां यदिवा जगदम्बिकाम् ॥ प्रदक्षिणा नमस्कारान् कृत्वा मूर्ध्नि कृताञ्जलिः ॥ क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरत न्द्रितः ॥ प्रतिश्लोकं च जुहुयात्पायसं तिल सर्पिषा ॥ जुहुयात्स्तोत्र मन्त्रैर्वा चण्डिकायै शुभं हविः ॥ भूया नाम पदैः देवीं पूजयेत्तु समाहितः ॥ ३७ ॥ प्रयतः प्राञ्जलिः प्राह्वः प्राणा नारोप्य चात्मनि ॥ सुचिरं भावयेद्देवीं चण्डिका तन्मयो भवेत् ॥ ३८ ॥ एवं य. पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् भुक्त्वा भोगान्यथा कामं देवी सायुज्यमाप्नुयात् ॥ ३६ ॥ यो न पूजयते नित्यं चण्डिकां भक्त वत्सलाम् ॥ भस्मीकृत्यास्य पुण्यानिनिर्दहत्परमेश्वरी ॥ तस्मात्पूजय भूपाल सर्व लोक महेश्वरीम् ॥ यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि ॥ ४१ ॥

इति वैकृतिकं रहस्यं समाप्तम् ॥

अथ मूर्ति रहस्यम् ॥

ऋषि रुवाच । नन्दा भगवती नामया भविष्यति नन्दजा । स्तुतापूजिताध

नमः दक्षिणां समर्पयामि ॥ कर्पूरार्तिक्यम्—कदली गर्भ सम्भूतं कर्पूरं च प्रदीपितम् ।आरार्त्तिक्यमहं कुर्वेपश्यमेवरदोभव॥—ओं इदंऽ हविःऽप्रजननम्मेऽअस्तुदशवीरंऽसर्व्वगणंऽस्वस्तये।आत्मसनिप्रजासनिपशुसनिलोक सन्नय भयसनि ॥ अग्निऽःप्रजाम्बहुलाम्मे करोत्वन्नम्पयोरेतोऽअस्मासु धत्त ॥ ओं भू र्भुवः स्वःश्रीभगवान् विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः कर्पूरारार्त्तिक्यं दर्शयामि । मन्त्र पुष्प युक्त प्रदक्षिणा—यानि कानि च पापानि जन्मान्तर कृतानिवै । तानि सर्वाणि नश्यन्तु प्रदक्षिण पदे पदे ।। ओं सप्तास्या सन्म्परि—धयस्त्रिऽः सप्त समिधः कृताऽः देवायद्यज्ञन्तन्वानाऽ अवद्धूनन्पुरुषपशुम् ॥ ओं भू र्भुवः स्वः श्री भगवान् विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः आरार्त्तिक्य सहितं मन्त्र पुष्प युक्त प्रदक्षिणां समर्पयामि ॥ मन्त्र पुष्प युक्त नमस्कारः ।—नाना सुगन्ध पुष्पाणि यथा कालोद्भवानि-

---

भक्त्या वशीकुर्याज्जगत्त्रयम् ॥१॥ कनकोत्तम कान्तिःसासुकान्तिकनकाम्बरा । देवी कनक वर्णाभा कनकोत्तम भूषणा ॥ २ ॥ कमलाङ्कुश पाशाब्जैरलंकृत चतुर्भुजा ॥ इन्दिरा कमला लक्ष्मी. साश्रीरुक्माम्बुजासना ॥ या रक्त दन्तिका नाम देवी प्रोक्तामयाऽनघ ॥ तस्याः स्वरूप वक्ष्यामि शृणु सर्व भया पहम् ॥ ४ ॥ यच्छ्रुत्वा सर्व पापेभ्यो मुच्यते नात्र संशय. ॥ रक्ताम्बरा रक्तवर्णा रक्त सर्वाङ्ग भूषणा ॥ ५ ॥ रक्तायुधा रक्त नेत्रारक्त केशातिभीषणा ॥ रक्त तीक्ष्ण नखा रक्त रसना रक्त दन्तिका ॥ ६ ॥ पतिं नारी वानुरक्ता देवी भक्तं भजेज्जनम् ॥ वसुधेव विशालासा सुमेरु युगलस्तनी ॥ ७ ॥ दीर्घोलम्बावति स्थूलोतावतीवमनोहरौ ॥ कर्कशावति कान्तौ तौ सर्वा नन्द पयोनिधी ॥ ८ ॥ भक्तान्सं पाययेद्देवी सर्वकामदुघौस्तनौ ॥ खड्ग पात्र शिरः खेटैरलं कृत चतुर्भुजा ॥ आख्याता रक्त चा मुण्डा देवी योगेश्वरीति च ॥ अनयाव्याप्त मखिलं जगत्स्थावर जङ्गमम् ॥ १० ॥ इमांयः पूजयेद्भक्त्यास व्याप्नोति चरा चरम् ॥ भुक्त्वा भोगा न्यथा काम देवी सायुज्य माप्नुयात् ॥ अधीतेय इमं नित्यं रक्त दंत्या वपुः स्तवम् ॥ तं सा परि चरेद्देवीपतिं प्रियमिवांगना ॥ १२ ॥ शाकंभरी नीलवर्णा नीलोत्पल विलोचना ॥ गभीर नाभि स्त्रिवलीविभूषित तनूदरा ॥ १३ ॥ सुकर्कशसमोत्तुग वृत्त पीन घनस्तनी ॥ मुष्टी शिलो मुखा पूर्णं कमलं कमला लया ॥ १४ ॥ पुष्प पल्लव मूलादिफलाढ्यं शाक सचयम् ॥ काम्या नन्तर सैर्युक्तं क्षुत्तृण्मृत्यु जरा पहम् ॥ १५ ॥ कार्मुकं चस्फुरत्कांति बिभ्रति परमेश्वरी ॥ शाकंभरी शताक्षी सा सैव दुर्गा प्रकीर्तिता ॥ १६ ॥ नमागौरी सती चण्डी

च। पुष्पाञ्जलि मयादत्तं गृहाण परमेश्वर ॥ ॐ यज्ञेन यज्ञमयजन्त देवा स्तानि धर्माणि प्रथमान्यासन् । तेह नाकम्महिमानः सचन्त यत्रपूर्वे साद्ध्या ऽः सन्ति देवा ऽः ॥ ॐ भू र्भुवः स्वः श्री विष्णु लक्ष्मी नारायण (अनन्त) देवताभ्यो नमः मन्त्र पुष्पाञ्जलि युक्त नमस्कारं समर्पयामि ॥ विशेषार्घ्यः रक्ष रक्ष सुरः श्रेष्टः रक्ष त्रैलोक्य रक्षक। भक्ताना मभयं कर्ता त्राता भव भवार्ण वात् ॥ वरद त्वा वरं देहि वाञ्छितं वाञ्छितार्थद (एतेन मन्त्रेण पूङ्गीफल हिरण्य गन्धाक्षत पुष्पैः संयुक्त जलेन अर्घ्य मेकं दद्यात्।) अनेन सफलार्घ्येण फलदोस्तु सदा मम ॥ ॐ भू र्भुवः स्वः श्री विष्णु लक्ष्मीनारायण (अनन्त) देवताभ्यो नमः विशेषार्घ्यं समर्पयामि ॥ प्रार्थना—क्च कुच चुचु काग्रे पाणिषु व्या-तेषु प्रथम जलनि पुरी सङ्गमेऽनग्न धाम्नि, प्रथि तनि विडनीवी वन्धनी मोक्षणार्थे चतुरधिक कराशः, पातुवश्च क्रपाणिः ॥ यद्विम्ब मम्बर मणि र्यदपांप्रशति नंक्तं निपिबन्ति यदनि

कालिका साच पार्वती ॥ शाकम्भरी स्तुवन्ध्यायञ्ज पन्स पूजयन्नमन् ॥ १७ ॥ अक्षय्य मश्नुते शीघ्र मन्न पाना मृतं जलम् ॥ भीमाऽपि नील वर्णा सा दंष्ट्रा दशन भासुरा ॥ १८ ॥ विशाल लोचना नारी वृत्तपीन पयोधरा ॥ चन्द्र हासं च डमरुं शिरः पात्रं च विभ्रती ॥ १६ ॥ एक वीरा काल रात्रिः सैवोक्ता कामदा स्तुता ॥ तेजो मण्डल दुर्धर्षा भ्रामरी चित्र कान्ति भृत् ॥ २० ॥ चित्रं भ्रमर संकाशामहामारीतिगीयते ॥ इत्येता पूर्त्तयो देव्या व्याख्याता वसुधाधिप ॥ जगन्मातु श्चण्डिकाया कीर्तिताः कामधेनवः ॥ इदं रहस्य परमं न वाच्यं कस्य चित्त्वया ॥ २२ ॥ व्याख्यानं दिव्य मूर्तीना मधीष्व वहितः स्वयम् ॥ एतस्यास्त्वं प्रसादेन सन्मान्यो भविष्यसि ॥ २३ ॥ सर्वं रूप मयी देवी सर्वं देवी मयं जगत् ॥ अतोहं विश्व रूपां तां नमामि परमे श्वरीम् ॥ २४ ॥ इति मूर्ति रहस्यं समाप्तम् ॥ श्री जगदर्पणमस्तु ॥

## श्री पार्वती पूजनम्

सा च दर्मेतु वस्य य. काल स्वरकाल व्यापिनी तिथिरिति पल्पु धर्मी कोर्मेरणाद्ध व्यापिनीमाद्या ॥ पूर्वाभिमुखोभूत्वा ऽऽ वाय दीप ऽऽमास्य मंकल्पं कुर्यात् ॥ ॐ अद्येहामुकगोत्रामुक नाम्नी अहं मम दारिद्र वाचिक-मानसिक-शारीरिक-दुरी करण शत्रु भीर मिद् सर्पादि भवनिवारण ग्रहपाम पेशाज कूष्माण्ड भूत प्रेत प्रेतपाल-शाकिन्यादि कीलन-

जोंत्स्नानिशासु हिम धाम्नि चयन्मयूखः पूषापुराण पुरुषः स नमो ऽस्तु तस्मै ॥ ॐ भूर्भुवः स्वः श्री भगवान्विष्णु लक्ष्मी नारायण ( अनन्त ) देवताभ्यो नमः प्रार्थना समर्पयामि ॥ ( इयं प्रार्थना कृतास्ति ) ॥ शङ्ख भ्रामणम्—शङ्ख मध्ये स्थितं तोयं भ्रामितं केशवो परि। अङ्ग लग्नं मनुष्याणां ब्रह्म हत्यां व्यपोहति ॥ एवं शङ्खो दकेन-स्वशरीरं मार्जयेत् ॥ अथ ग्रन्थि पूजनम्—ॐ श्रियै नमः। मोहिन्यै नमः पद्मिन्यै नमः॥ महाबलायै नमः। अजायै नमः। मङ्गलायै नमः। वरदायै नमः। शुभायै नमः। जयायै नमः। विजयायै नमः। जयन्त्यै नमः। पापनाशिन्यै नमः। विश्वरूपायै नमः। सर्वमङ्गलायै नमः। इति ग्रथिं सम्पूज्यः ॥ अथाङ्ग पूजा ॥—मत्स्यायनमः पादौ पूजयामि ॥ कूर्माय नमः गुल्फौ पूजयामि नमः । वराहाय नमः जानुनी पूजयामि नमः। नार सिंहाय नमः। ऊरू पूजयामि नमः वामनाय नमः कटिं पू० ॥ रामाय नमः उदरंपूज० ॥ श्री रामाय नमः हृदयं पू०॥ कृष्णाय नमः मुखं पू०। सहस्र सिरसे नमः शिरः पू० । श्रीमदनन्ताय-

---

मृत्यु सन्निपात-राज यक्ष्म-विषय ज्वर-ज्वरादि सारादि-दुर्ग्रह-दुर्योगिनी-दुः स्वप्नादि-पीडानिवृत्ति पुत्र मित्र-भृत्यगजाश्व-क्षेत्र धन-धान्य रत्नादि-सम्पद् भोगान्तर— गन्धर्वाप्सरोगण-संगीतादि-जात-मञ्जरी मालादि-शोभित-विमाना रोहण-पूर्वकं भगवतः श्री मद् ज्योतिलिङ्ग स्वरूपिणः सदाशिवस्य परम सायुज्य-मुक्ति कामा श्री पार्वती देवता प्रीत्यर्थेमि यथा मिलितोप चारै स्वद् व्रताङ्ग भूत देवता यश्च पूजन मह करिष्ये। [ श्री सूर्याय अद्य स्वस्थानो मह कर्तुं तदङ्गत्वेन जगत्साक्षिणे श्रीसूर्यायघ्र्योर्धः समर्पयामि । ] वामे अर्घ्यस्थापनम् ॥ दक्षिणे शङ्खस्थापन. च ॥ नमोस्त्व नन्तायेति दीपं सम्पूज्य गणानां त्वेति गणपतिं सम्पूजयेत् ॥ अथ कलश पूजा ॥ भूर ीति भूमिशोधनम् ॥ धान्न्यमसीतिधान्यम् ॥ आजिघ्रेति ,अत्रणं कलशं संस्थाप्य वरुणस्यो-त्तम्भनमिति निर्मल तीर्थादि जलं प्रक्षिप्य या ओषधीरिति सर्वोषधीः ॥ हिरण्यगर्भेति पञ्चरत्नानि। या फलिनीरिति फलम् ओषधीयः समितिय-वान्। गन्ध द्वारा मिति चन्दनम् ॥ काण्डात्काण्डादिति दूर्वा ॥ स्योना पृथिवीति सप्त मृदः ॥ अश्वत्थेवेतिपञ्चपल्लवैस्तन्मुखं मान्छादयद्दस्पत इति वस्त्र युग्मेन कलशं वेष्टयित्वा तत्वायामीति वरुण मा वाह्य पूजयेत् ॥ ततः कलशेगङ्गादींश्च ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः॥ आयान्तुयजमानस्य दुरितक्षय कारकाः ॥ इति ॥ मन्त्रेणावाहयेत् ॥ ततः कलशाभिमन्त्रणम् ॥ कलशस्य मुखेविष्णुः कण्ठेरुद्रः समाश्रितः ॥

नमः-सर्वाङ्ग पू० स्त्यङ्गम् सम्पूज्य ॥ अथा वरणपूजा—अनन्तस्य दक्षिण पार्श्वे रमायै नमः ॥ वामपार्श्वे भूम्यै नमः । इति प्रथमा वरणम् ॥ आवरण देवता मा वाह्य हस्तं प्रक्षाल्य ॥ गन्ध पुष्प तर्जनी मध्यमा ङ्गुष्ठै धृत्वा मध्ये शंखोदकं गृहीत्वामन्त्रान्ते शंखोदकं भूमौ निक्षिप्य पुष्पे देवो परिनिक्षिपेत् ॥ दयाब्धे ? त्राहि संसार लक्ष्मेशों शरणागतम् ॥ भक्तया समर्पये तुभ्यं प्रथमा वरणार्चनम् ॥ इति मन्त्र मुच्चार्य जलं त्यक्त्वा पुष्पं देवो परि न्यसेत् ॥ एवमने ऽपि ॥ १ ॥ पूर्वादि क्रमेण वृद्धोल्काय नमः । महोल्काय नमः । शतोल्काय नमः । सहस्रोल्काय नमः ॥ दयाब्धे ? त्राहि संसार लक्ष्मेशो सरणागतम् भक्तया समर्पयेतुभ्यं द्वितीया वरणार्चनम् इति ॥२॥ तथैववा- सुदेवाय नमः । सङ्कर्षणाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः ॥ दयाब्धेत्राहि संसार लक्ष्मेशो शरणागतम् ॥भक्त्या समर्पये तुभ्यं त्रितियावर- णार्चनम् ॥३॥ प्राच्याम्—केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः । मधु सुदनाय नमः त्रिविक्रमाय नमः । वामनाय नमः । श्री धरायनमः हृषी केशाय नमः । पद्म नाभाय नमः । दामोदराय नमः । दयाब्धेत्राहि संसार लक्ष्मेशों सरणागतम । भक्त्या समर्पय तुभ्यं

---

मूले तस्य स्थितो ब्रह्मामध्येमातृगणाः स्मृताः ॥ कुक्षौतु सागराः सर्वे सप्त- द्वीपा वसुन्धरा ॥ ऋग्वेदोऽथयजुर्वेदो सामवेदोह्यथर्वण ॥ अङ्गेश्च सहिताः सर्वे कलशन्तु समाश्रिताः ॥ कलशेदेवद्वार पूजा । ॐ गणपतये नमः ॥ ॐ गुरुभ्यो नम ॥ ॐ क्षेत्रपालाय नमः ॥ ॐ नन्दिने नमः ॥ ॐ महाकालायनमः ॥ ॐ भृङ्गिणे नमः ॥ ॐ विनायकाय नमः ॥ ॐ स्कन्दाय नमः ॥ ॐ वरदाय नमः ॥ ॐ दिव्यै नमः ॥ इति मन्त्रैः पाद्यादीनि समर्पयेत ॥ तत उत्तरशाग्यभि कलशसुरु माच्छादयपूजयेत् । इति शिष्टाः ॥ ॐ ब्रह्मणे नमः ॥ ॐ विष्णवेनमः ॥ ॐ महेश्वरा यनमः ॥ ॐ गङ्गायै नमः ॥ ॐ यमुनायै नमः ॥ ॐ सरस्वत्यै नमः ॥ गयत्र्यै नमः ॥ ॐ जान्हव्यै नमः ॥ ॐ नर्मदायै नमः ॥ सप्त सागरेभ्यो नमः ॥ ॐ मार्कण्डेय दिसप्तर्षिभ्यो नमः ॥ ॐ आदि यादि नवग्रहेभ्यो नमः ॐ अरवत्थाम प्रभृति चिरजीविभ्यो नमः ॥ अश्विन्यादि नक्षत्रेभ्यो नमः ॥ विष्कुम्भादि सप्तविंशतियोगेभ्यो नमः ॥ मेषादि द्वादश राशिभ्यो नमः ॥ मृत्युञ्जयाय महेश्वरीसहिताय नमः ॥ सम्पूर्ण कलशाय नमः ॥ इति मन्त्रैः पाद्यादीनिरत्नं सूत्रयेत् पुष्प समर्पयेत ॥ ततो गणेश पूजा । ॐ गणपतयेनमः ॥ विघ्नेश्वराय नमः । एक दन्ताय नमः । मूषक वाहनाय नमः ॥ लम्बोदराय नमः । गजवक्राय नमः ॥

चतुर्था वरणार्चनम् ॥ ४ ॥ पूर्वादि क्रमेण । मत्स्याय नमः । कूर्माय नमः । वराहाय नमः । नारसिंहाय नमः । वामनाय नमः । परसुरामायनमः । श्री रामाय नमः । कृष्णायनमः । बौद्धायनमः । कल्क्ये नमः अनन्ताय नमः । विश्वरूपिणे नम. दयाव्धे त्राहि संसार लक्ष्मेशो सरणागतम् । भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् । ५ ॥ पूर्वादिक्रमेण—अनन्तायनमः । दक्षिणस्यां ब्रह्मणेनमः । पश्चिमायां वायवे नम. । उत्तरस्यां मीशानाय नमः । आग्नेयां वारुण्ये नमः । नैऋत्यां गायत्र्यै नमः ॥ वायव्यांभारत्यै नमः । ऐशान्यां गिरिजायै नम. । अग्रेगरुडाय नमः । वामे सुपुरुषाय नमः । दयाव्धे ! त्राहि संसार लक्ष्मेशो सरणागतम् । भक्त्या समर्पये तुभ्यं पष्ठमा वरणार्चनम् ॥ ६ ॥ पूर्वादि क्रमेण—इन्द्राय नमः । अग्नये नमः । यमाय नम. निऋतये नम. । वरुणाय नमः । सोमाय नमः । ईशानाय नमः । दयाव्धे ! त्राहि संसार लक्ष्मेशो सरणागतम् ॥ भक्त्या समर्पये तुभ्यं सप्तमा वरणार्चनम् ॥ ७ ॥ अग्नेय्यां शेषाय नमः । नैऋत्याविष्णवे नमः । वायव्यां विवये नमः । ऐशान्याप्रजापतये नमः । दयाव्धे ! त्राहिसंसार लक्ष्मेशो सरणागतम् ॥ भक्त्या समर्पये तुभ्यं अष्टमा वरणार्चनम् ॥ ८ ॥ अग्नेय्या

---

पृथुहस्ताय नमः । सिद्धि विनायकाय नमः । पार्वती नन्दाय नमः । मनोरथ दायिने नमः ॥ इति मन्त्रैः रक्त सूत्रं रक्तपुष्पं च समर्पयेत् । ततो गोग्रास पूजा ॐ नन्दायै नम. । सुभद्रायै नमः । सुमनसेनमः । सुशीलाय नमः । सुभगायै नमः । पञ्चगोमातृभ्यो नमः ॥ इति मन्त्रैः कपिल-सूत्रं कपिल पुष्पं च समर्पयेत् ॥ ततः कौमारीपूजा ॥ ॐ ब्रह्मण्यै नमः ॥ माहेश्वर्यै नमः ॥ कौमार्यै नमः ॥ वैष्णव्यै नमः ॥ वाराहै नम.॥ इन्द्राण्यै नमः ॥ चामुण्डायै नमः ॥ महालक्ष्म्यै नमः ॥ शक्ति हस्तायै नमः ॥ मयूर सनायै नमः ॥ रक्त लोचनायै नमः ॥ पराशक्त्यै नमः ॥ कुमारी मूर्त्यै नमः ॥ इति मन्त्रैः पाद्यादीनि रक्त सूत्रं रक्त पुष्पञ्च समर्पयेत् ॥ ततोमोहिनी पूजा ॥—ॐ सर्वं जनमोहिन्यै नम. ॥जगन्मोहिन्यैनम सर्व मोहिन्यै नमः । इति मन्त्रैः पाद्यादीनिपीत सूत्रंपीत पुष्पञ्च समर्पयेत ॥ ततोऽष्टचिरञ्जीवि पूजा ॥ ॐ अश्वत्थाम्ने नम ॥ बलये नमः ॥ व्यासाय नमः ॥ हनुमते नमः ॥ विभीषणाय नमः ॥ कृपाचार्याय नमः ॥ परशु रामाय नमः ॥ मार्कण्डेयायनमः ॥ उमापतये नमः ॥ इति मन्त्रैः पाद्यादीनि श्वेत सूत्रं श्वेत पुष्पञ्च समर्पयेत् ॥ ततः पञ्च बलि पूजा ॥ जलादिभिर्पिटानेन पञ्च बलि निर्माय ॥ सिन्दूर मस्तक कृत्वा पूजयेदिति शिष्टाः ॐ गणपतये नम. ॥ वटुकाय नमः ॥

गणपतये नमः । नैऋत्यां सप्तमातृभ्यो नमः । वायव्यां दुर्गायै नमः । ऐशान्यां क्षेत्राधिपतये नमः । दयाब्धे ! त्राहि संसारसर्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं नवमा वरणार्चनम् ॥ ६ ॥ मध्ये ब्रह्मणे ॥— भास्कराय नमः । शेषाय नमः । सर्वव्यापिने नमः । ईश्वराय नमः । विश्वरूपाय नमः । महाकायाय नमः । सृष्टि कर्त्रे नमः । कृष्णाय नमः । हरये नमः । शिवाय नमः । स्थिति कारकाय नमः । अन्तकाय नमः ॥ दयाब्धे ! त्राहि संसारसर्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं दशमा वरणार्चनम् ॥ १० ॥ शौरये नमः । वैकुण्ठाय नमः । महात्मनाय नमः । पुरुषोत्तमाय नमः । अजाय नम । पद्मनाभाय नमः । मंगलाय नमः । हृषीकेशाय नमः । वरदाय नमः । मधुसूदनाय नमः । अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः । विजयाय नमः । अपराजिताय नमः । कृष्णाय नमः । दयाब्धे ! त्राहि संसारात् सर्पान्मां शरणागतम् भक्त्या समर्पये तुभ्यं एकादशा वरणार्चनम् ॥ ११ ॥ अनन्ताय नमः । कपिलाय नमः । शेषाय नमः । सङ्कर्षणाय नमः ॥ हलायुधाय नम । तारणाय नमः । शीर पाणये नमः । बलभद्राय नमः ॥ दयाब्धे ! त्राहि संसारान् । सर्पान्मां शरणागतम् । भक्त्या समर्पये

---

योगिनीभ्यो नम ॥ क्षेत्रपालाय नमः ॥ पतत्स्थानाधिपतये नमः असिताङ्गाद्यष्ट भैरवेभ्यो नम. ॥ वृकोदर क्षेत्रपालाय नमः ॥ रक्तकेश क्षेत्रपालाय नमः ॥ लम्बोदर क्षेत्रपालाय नमः ॥ सर्व क्षेत्र पालेभ्यो नमः ॥ सर्व पिशाचेभ्यो नमः ॥ सर्व भूतेभ्यो नमः ॥ इति मन्त्रैः पाद्यादीनि कृष्ण सूत्रं कृष्ण पुष्पञ्च समर्पयेत ॥ ततः सूर्यादि पूजा ॥ ॐ सूर्याय नमः ॥ सदा शिवाय नमः ॥ गृहलक्ष्म्यै नमः ॥ इष्ट देवताय नमः ॥ नागेभ्यो नमः ॥ इति मन्त्रैः पाद्यादीनि पञ्चवर्ण सूत्रं पञ्च वर्ण पुष्पञ्च समर्पयेत् ॥ ततो देवाग्रे सनकादि पूजा ॥—ॐ सनकादि ऋषिभ्यो नमः ॥ ऋषि पुत्रेभ्यो नम. ॥ दिव्याश्रमेभ्यो नमः ॥ इति मन्त्रैः पाद्यादीनि श्वेत सूत्रं श्वेतपुष्पञ्च समर्पयेत् ॥ ततो देवाग्रे गोमयोद्भव ब्राह्मणी वृद्ध ब्राह्मण पूजा ॥, ॐ दिव्यरूपायै नमः ॥ दिव्याम्बरायै नमः ॥ देवभक्त्यै नमः ॥ सुरूपायै नमः ॥ जटिलायै नमः ॥ बधिरायै नमः ॥ अति वृद्धायै नमः ॥ कुब्जायै नमः ॥ अतिदीर्घायै नमः ॥ इति मन्त्रैः पाद्यादीनि श्वेत सूत्रं श्वेत पुष्पञ्च समर्पयेत् ॥ पुनस्तत्रैव नवराज पूजा—ॐ नवराजाय नम ॥ मातृवत्सलाय नमः सुजन प्रियाय नमः ॥ सुचरित्राय नमः ॥ सुमतये नमः ॥ प्रियंवदाय नमः ॥ इति मन्त्रैः पाद्यादीनिरक्त पुष्पञ्च समर्पयेत् ॥ ततः

तुभ्य द्वादशा वरणार्चनम् ॥ १२ ॥ क्षीराब्धि शायिने नमः । अच्युताय नमः । भूधराधाराय नमः । लोकनाथाय नमः । फणमणि विभूषणाय नमः । सहस्रमूर्त्ने नमः । सहस्राचिये नमः ॥ दयाब्धे ! त्राहि संसारात् । लक्ष्मीशो सरणा गतम् । भक्तया समपये तुभ्यं त्रयोदशा वरणार्चनम् ॥ ३ ॥ केशवादि चतुर्विंशति नामभिः ॥ केशवाय नम केशिहायनमः । हरये नमः। कामदेवाय नमः। कामपालाय नमः। काम्याय नमः। कान्ताय नमः। हंसागमायनमः । अनिर्देश्याय नमः । वपुषे नमः। विष्णु वीराय नमः। अनन्ताय नमः । धनञ्जयाय नमः । ब्रह्मण्याय नमः। ब्रह्म कृद् ब्रह्माये नमः । ब्रह्म २ विवर्धनाये नम । ब्रह्म विद् ब्राह्मणाये नमः। ब्रह्मी ब्रह्मज्ञाये नमः। ब्राह्मण प्रियाये नमः । महा-क्रमोमहा कर्माये नमः । महा तेजाये नमः। महोरगाये नमः । महा क्रतु महायज्ञाये नमः। महा यज्ञो महा हविये नमः॥ २४॥ दयाब्धे ! त्राहि संसार सर्पान्मांसरणा गतम्। भक्तया समर्पये तुभ्यं चतुर्दशा वरणार्चनम् ॥ इति मन्त्र मुच्चार्य जलं त्यक्त्वा पुष्पं देवी परि न्यसेत् ॥ अथपत्र पूजा ॥—कृष्णाय नमः। पलास पत्रं समर्पयामि ॥ विष्णवे नमः औन्दुम्बर पत्रं समर्पयामि ॥ हरये नमः आस्वत्थपत्रं समर्पयामि ॥ शम्भवे नमः भृङ्गराज पत्रं समर्पयामि ॥ ब्रह्मणे।

---

पापिनी पूजा कृत्वा दोषा रोहणां पापिनी कुण्डे निमग्नां पूजयामिति शिष्टाचार ॥ नरराजपत्न्यै नमः ॥ पापमूर्त्यै नमः ॥ कुशीलायै नमः ॥ कुभा पिण्यै नमः ॥ धर्मद्वेपिण्यै नमः । इतिमन्त्रैः पापादीनि कृष्ण सूत्रं कृष्ण पुष्पञ्च समर्पयन् ॥ ततो देवाग्रे अप्सरः पूजा ॥ ॐ ऊर्वश्यै नमः ॥ मेनकायै नमः ॥ रम्भायै नमः ॥ चन्द्र रेखायै नमः ॥ तिलोत्तमायै नमः ॥ वपुष्मत्यै नमः ॥ कान्ति मत्यै नमः ॥ लीलावत्यै नमः । उत्पलवर्ण्यै नमः ॥ घृताच्यै नमः ॥ चन्द्रवदनायै नमः ॥ धर्मवत्यै नमः ॥ चकोराक्ष्यै नमः ॥ इति मन्त्रैः पापविनि पीत सूत्रं पीत पुष्पञ्च समर्पयेत् ॥ ततोधार्म्माद्वाराः ॥—ॐ धर्म शीलाय नमः। धर्मं कर्मणे नमः ॥ धर्म पतये नमः ॥ धर्मं रक्षक- नमः ॥ इति श्वेत सूत्रं श्वेत पुष्पञ्च समर्पयेत् ॥ ततः नाग नदी- पूजा ॥ सप्त समुद्रेभ्यो नमः ॥ अष्ट नाग राजेभ्यो नमः ॥ नदी- भ्यो नमः ॥ इति मन्त्रैः हरित सूत्रं हरितपुष्पञ्च समर्पयेत् ॥ ततः गिरिजादि पूजा ॥—ॐ भवानी पत्न्ये नमः ॥ पार्वत्यैनमः । व्यासाय नमः ॥ हनुमते नमः ॥ विभीषणाय नमः ॥ कृपा चार्याय नमः ॥

नमः । जटा धार पत्रं समर्पयामि ॥ भास्करायनमः अशोकपत्रं समर्पयामि ॥ शेषाय नमः कपित्थपत्रं समर्पयामि ॥ सर्वव्यापिने नमः वट पत्रं समर्पयामि ॥ ईश्वराय नमः आम्रपत्रं समर्पयामि ॥ विश्वरूपिणे नमः कदली पत्रं समर्पयामि ॥ महाकालाय नम अपामार्ग पत्रं समर्पयामि ॥ सृष्टि कर्त्रे नमः करवीर पत्रं समर्पयामि ॥ स्थिति कर्त्रे नमः पुन्नागपत्रं समर्पयामि ॥ अन्तकाय नमः नागवल्ली पत्रं समर्पयामि ॥ अथपुष्प पूजा—अनन्ताय नमः पद्म पुष्पं समर्पयामि । विष्णवे नमः जाति पुष्पं समर्पयामि ॥ अव्ययाय नमः कह्लार पुष्पं समर्पयामि । सहस्रजिते नमः केतकी पुष्पं समर्पयामि ॥ अनन्त रूपिणेनमःबकुलपुष्पंसमर्पयामि ।इष्टायनमःशतपुष्पंसमर्पयामि विशिष्टाय नमःपुन्नागपुष्पंसमर्पयामि । शिष्टेष्टायनमःकरवीरपुष्प समर्पयामि । शिख-ण्डिने नमः धत्तूरपुष्प समर्पयामि ॥ विश्वबाहवेनमः मल्लिका पुष्पं समर्पयामि । मही धराय नमः मालती पुष्पं समर्पयामि । उच्युताय

---

परशुरामाय नमः ॥ मार्कण्डेयाय नमः ॥ प्रजापतये नमः ॥ इति मन्त्रैः श्वेत सूत्रं श्वेत पुष्पञ्च समर्पयेत् ॥ ॐ अश्वत्थामा दयश्चिरंजीविनः सुप्रतिष्ठिताः सन्तो वरदाः भवन्तु इति मन्त्रेण लाजाः क्षिपेत् ॥ ततः सिन्दूर भाण्डे पूजा ॥—पार्वत्यैनमः ॥ गौर्यै नमः ॥ सौभाग्य वृद्धि कर्त्र्यै नमः ॥ इति रक्त सूत्रं रक्त पुष्पञ्च समर्पयेत् ॥ शिवपूजा ॥ महेश्वराय नमः ॥ ईश्वराय नमः ॥ सदा शिवाय नमः ॥ इति श्वेत सूत्रं श्वेत पुष्पं च समर्पयेत् ॥ अथ मूल देवता पूजा ॥ ध्यानम् ।—मन्दार माला कुलिता लकायै कपाल माला ङ्कित शेखराय ॥ दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ ॐ सहस्र शीर्षेत्या वाहनम् ॥ पुरुष एवेत्या सनम् ॥ ॐ आधार शक्तये अनन्ताय नमः ॥ स्कन्दाय नमः ॥ नारायणाय नमः ॥ पद्माय नमः ॥ पत्रेभ्यो नमः ॥ कर्णिकायै नमः ॥ केशरेभ्यो नमः ॥ वृषाय नमः । सिद्धाय नमः ॥ इति मन्त्रैः पद्मादीनि समर्पयेत ॥ एतावानस्येति पाद्यम् ॥ त्रिपादूर्ध्वेत्यर्घ्यम् ॥ ततो विराडित्या चमनम् ॥ पयः पृथिव्यां० दधि क्राव्णो० घृतमि मिक्षे० मधुव्वाता० अपाथ्य रस मित्यादिभिः पञ्चामृतम् ॥ आपो अस्मान्निति शुद्धोदक स्नानम् ॥ यत्पुरुषं व्यदधुः शक्ति शिवाभ्यामिदं मधुपर्कं समर्पयामिति मधुपर्कम् ॥ ब्राह्मण इति वस्त्रम् । तस्माद्यज्ञात्सर्वं हुतः संभृतमिति रक्त सूत्रं श्वेत सूत्रञ्च ॥ तस्मा द्यज्ञा त्सर्व हुत ऋचः यज्ञोपवीतम् ॥ देवी सौरे शि सिन्दूर देवी दाराय नमः । शिवाय

नमः कार्णी वार पुष्पं समर्पयामि । अन्तकाय नमः कदली पुष्पं समर्पयामि ॥ अथा अष्टोत्तर सत नामभिः पूजयेत् । अनन्ताय नमः । अच्युताय नमः । अद्भुत कर्मणे नमः । अमित विक्रमाय नमः । अपरा जिताय नमः । अखण्डाय नमः । अग्नि नयनाय नमः अग्नि वपुषे नमः । अदृश्याय नम । अत्रि पुत्राय नम. । अनन्तकुलाय नमः । अनाशिने नमः । अञ्जनीलाय नमः । अहर्हाय नमः । अष्टमूर्तये नमः । अनिरुद्धाय नमः । अनिविष्टाय नमः । अचञ्चलाय नमः । शब्दातिगाय नमः । अचल रूपाय नमः । अखिल धाराय नमः अव्यक्ताय नमः । अनुरूपाय नमः । अभये कराय नमः । अद्वताय नम. । अवपुषे नमः । अयोनिजाय नमः । अरविन्दाय नमः । अज्ञान वर्जिताय नमः । अधोक्षजाय नम । अदिति पुत्राय नमः अम्बिकापतिपूर्व जाय नमः । अपस्मार नाशिनेनमः अव्ययाय नमः । अनाद्यैन नमः । अप्रमेयाय नमः । अघशत्रवे नम. । अनरारिघ्नाय नमः । अनश्वराय नमः अजाय नमः । अघोराय नम. । अनादि निधनाय नम । अमर प्रभवे नमः । आमाद्याय नमः । अक्रूराय नम । अनुत्तमाय नमः अरूपाय नमः । अर्हे नमः । अमोघाधि पतय नम. । अजाय नम. । अव्ययाय नम. । अमृताय नम । अघोर वीर्याय नम. । अव्यङ्गाय नमः । अविघ्नाय नमः । अतिन्द्रियग्याय नमः । अमित

---

इति मन्त्राभ्यामदर्श चामर व्यञ्जनानि ॥ त यज्ञ मिति चन्दनम् ॥ अक्षत मीत्य क्षता ॥ वत्पुरुषमिति पुष्पाणि ॥ तत. पुष्प म् ॥ माल्योचित यथा पुष्पं परम वर्णैः सुगन्धिभिः ॥ विचित्र ग्रथिता माला गृहाण परमेश्वरी ॥ वर्वो विल्व पत्रम् ॥ पद्मानां तु सहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ तत्फल लभते पत्रं दत्वा विल्वस्य शोभनम् ॥ धत्तूरम् ॥ एक धत्तूर पुष्पेणाय. पूजयति शङ्करम् ॥ सर्वपाप विनिर्मुक्त शिवलोके महीयते ॥ दूर्वा ॥ दूर्वाङ्कुरं यस्तु शम्भो पूजा काले प्रयच्छति ॥ शाकत्र शतगुण्य सदा प्राप्नोति मानव. ॥ कमलम् नमः शम्भवाय इति मन्त्रेण नील कमलम् ॥ देवी द्वारेति मन्त्रेण जाति पुष्पम् ॥ नमः शम्भवायेति मन्त्रेण च दमन पुष्पम् ॥ कन्दर्प भस्मस जात पवित्रं दमन शुभम् गृहीत श्री महेशानो भक्त्या दत्तं मया शिवौ । सद्रससूत्रम् ॥ कार्पास निर्मितं सूत्र पवित्रं सु मनोहरम् ॥ सर्वपाप विनाशाय शिवेशाभ्या नमो नमः नमस्ते देव देवेश सुरासुर नमस्कृत ! ॥ नमस्ते जगतामात. पार्वति ! वरदायिनि ! ॥ इति मन्त्रेणाष्ट वार सद्राक्षं कुन्द पुष्प पार्वती साहवाय शङ्कराय नम. ॥ शम्भवे गिरिजा

तेजसे नमः । अमितये नमः । अष्टमूर्तये नमः । अनिलायनमः । ऋवराय नमः । अणोरणीयसेनमः । अशोकायनमः।अरविन्दाक्षायनमः ।अधिप्याय नमः ।अमितनयनाय नमः ।अरण्यवासिने नमः । अप्रमत्तायनम । अनन्तरूपायनमः।अनलायनमः अनिमिषायनमः।अज्ञरूपायनमःअप्रमस्यायनमः। अप्रमितायनमः।अनन्तशायनमः ।अचिन्त्यायनम.अपांनिधयेनमः।अविमुन्दायनमः।अमरप्रियायनमः। अष्टसिद्धिप्रदायनमः।अरविन्दप्रियामनमःअखिन्दोद्भवाय नमः । अनयायनमः । अर्थायनमः । अक्षोभ्यायनमः । अखिलात्मने नमः । अनेक मूर्तये नमः । अनेक ब्रह्माण्डपतये नमः । अनन्तशयनाय नमः । अमराधिपतये नमः । अनाधाराय नमः । अनन्तनाम्ने नमः । अनन्तश्रिये नमः । अक्षराय नमः । अमायाय नमः । आश्रमस्थानायनमः । आश्रमा तीतायनमः । अन्नदायनमः । आत्मयोनये नमः । अवनी पतये नमः अवनीधराय नमः । अनादये नमः । आदित्याय नमः । अमृताय नमः । अष्टवर्ग प्रदाय नमः । अव्यक्ताय नम । अनन्ताय नमः । इत्यष्टोत्तर शतनाम पूजा ॥ अथ धूपम्—दशाङ्ग गुग्गुलोद्भूतं चन्दनागरु संयुतम् ॥ सर्वेश उत्तम धूप गृहाण सुर पूजितम् । यत्पुरुष मिति धूपम् ॥ दीपम्—साज्यं चवर्ति संयुक्तं वह्निना योजितं मया । दीप । गृहाण देवेश ! त्रैलोक्यतिमिरापहम् ॥ ब्राह्मणोस्य मुख मासीत् इति दीपम् ॥ नैवेद्यं—अन्नं चतुर्विधं स्वादुपयो दधि धृतेयुतम् ॥ नाना व्यंजन शोभाढ्यं नैवेद्यं प्रतिगृह्यताम् ॥ चन्द्रमा मनस इति नैवेद्यम् ॥ नैवेद्य मध्ये पानीयम् । उत्तरापोपशार्थं ते, दधि तोयं सुवासितम् । गृहाण सुमुखो भूत्वा अनन्ताय नमो नमः । उत्त-

---

सहिताय नमः । महेश्वराय उमासहिताय नमः । ॐ महादेवाय गौरी सहिताय नमः । ॐ स्थाणवे विशालाक्षी सहिताय नमः ॥ ॐ शिवाय श्री मुखी सहिताय नमः । पशुपपतये नाराय णी सहिताय नमः उमाय माधवी सहिताय नमः ॐ शुभ सत्वाय श्री सहिताय नमः । ईश्वराय मङ्गल सहिताय नमः ॥ रुद्रायाम्बिका सहिताय नमः ॥ वृषध्वजाय मंहवी सहिताय नमः ॥ ॐ पार्वत्यै नमः ॥ सर्वाण्यै नमः ॥ ओम् अम्बिकायै नमः ॥ सर्वभूतदमन्यै नमः ॥ स्वस्थानीपरमेश्वर्यै नमः ॥ इति मन्त्रैः पाद्यादीनि समर्पयेत् ॥ ब्राह्मणो स्येति धूपम् ॥ चन्द्रमा मनस इति दीपम् । नाभ्या आसीदिति नैवेद्यम् ॥ पुनराचमनं ताम्बूलादि द्रव्यं निवेदयेत् ॥ हिरण्य गर्भेतिद्रव्यम् ॥ यानि कानि च पापानि जन्मान्तर कृतानिच ॥ तानि २ प्रणश्यन्ति प्रदक्षिण पदे पदे ॥ इति प्रदक्षिणां । निर्देवेति लोपनम् ॥ अथ कर्पूरम ॥ सूर्येन्दु तारका वह्नि तेजः पुञ्जविराजितम् ॥

रापोपणम् ॥ मुख प्रक्षालनम्—हस्त प्रक्षालनम् । करोद्वर्तनं कर्देवमया दत्तंहि भक्तितः ॥ चारु चन्द्र प्रभ दिव्यं गृहाण जगदीश्वर ! ॥ इति करोद्वर्तनम् ॥ फलम् इदं फलं मया देव ! स्थापितं पुरतस्तव ॥ तेनमेस फला वाप्तिर्भवेज्जन्मनिजन्मनि ॥ ताम्बूलम् - पूगी फलं महाद्दिव्यं नागवल्या दलैर्युतम् ॥—कर्पू रैला समायुक्तं ताम्बूलम्प्रति गृह्यताम् ॥ ॐ हिरण्य गर्भेति दक्षिणाम् ॥ यानि कानि चपापानि जन्मान्तर कृतानि च ॥ तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे ॥ नाभ्या आसीदिति प्रदक्षिणाम् ॥ नमस्कारम्—नमस्ते भगवन्भूयो नमस्ते धरणीश्वर ! ॥ नमस्ते सर्व देवेश ! नमस्ते मधुसूदन ! ॥ सप्तास्यासन्- इति नमस्कारान् ॥ मन्त्र पुष्पम्—नमस्ते देव देवेश ! नमस्ते गरुडध्वज ! ॥ नमस्ते कमला कान्त ! अनन्ताय नमो नमः ॥ यज्ञेन यज्ञमय जं० इति मन्त्र-पुष्पं । प्रार्थना—अनन्ताय नमस्तुभ्यं सहस्र शिरसे नमः नमोस्तुपद्म-नाभाय नागानां पतये नमे. ॥ अनन्त कामदः कामा नन्तो मे प्रयच्छतु ॥ अनन्तो दोर रूपेण पुत्र पौत्रान्प्रवर्धतु ॥ इति समाप्यं दोरकं गृहीत्वा—अथ दोरक बन्धन मन्त्रः ॥—अनन्त संसार महासमुद्र मग्नं समभ्यु द्धरवासुदेव ! ॥ अनन्त रूपे विनि योजयस्व ह्यनन्त सूत्राय नमो नमस्ते ॥ वध्नीयात् ॥ जीर्णदोर ममु देवं विसृजेहं त्वदाज्ञया ॥ इति विसृजेत् ॥

अथ वायनमन्त्रः ।—गृहाणेदं द्विज श्रेष्ठ ? वायनं दक्षिणां युतम् ॥ त्वत्प्रसादादहं देव ? मुच्येयं कर्म बन्धनात् ॥ प्रति गृह्य

---

वीयं देवेश ! गृहाण परमेश्वरः ! ॥ अथ पुष्पाञ्जलिः ॥—नमोस्तुते उमाशेवि स्वस्थानि परमेश्वरि ॥ त्रैलोक्य जननि ! नित्ये सत्वानां पाप हारिणि ॥ त्रिपुरघ्न महादेव ! भक्तवत्सल ! विश्व-कृत् ! ॥ नमस्करोमि देवेश ब्रह्ममाधव वन्दित ! ॥ इति नमस्कारः ॥ अन्यथा शरणं नास्ति युवां चैशरणं मम ॥ तस्मात्कारुण्य भावेनरक्षतां परमेश्वरो ॥ विसर्जनम् ॥ आवाहनं न जानामिति ॥ पुनः सूर्यार्घम् ॥—स्वस्थानी व्रतस्य सम्पूर्ण फलावाप्तये जगत्साक्षिणे श्री सूर्याय इदमर्घ समर्पयामि नमः ॥ अथ दक्षिणा संकल्पः ॥—अद्येह अनेक जन्मकृत पाप क्षयार्थं साम्वत्सरिक श्री पार्वती ( स्वस्थानी ) माघ व्रत पूजा साङ्गता सिद्धयर्थं मिमां दक्षिणां नाम्र खण्डं श्री सूर्य दैवतं रजतं वा सौम्यं यथा नाम गोत्रामित्यादि ॥

इति पद्म पुराणोक्त माघ शुक्ल पौर्णमास्यां स्वस्थानी व्रत पूजा विधिः समाप्तः ॥ ले० कुमारी गायत्री देवीनां चार्पणं कृतम् ॥

द्विज श्रेष्ट ? अनन्तफल दायक ! ॥ पक्वान्न फल संयुक्तं दक्षिणां घृत मं युतम् ॥ वायनं द्विज वर्याय दास्यामि व्रत पूर्तये ॥ अथ जीर्ण दोरक दान मन्त्रः—अनन्तः प्रति गृह्णाति अनन्तो वै ददाति चः अनन्तस्तारको भाम्या मनन्तायनमो नमः । इति दद्यात् । ततो यथा शक्ति ब्राह्मणान् भोजयेत् ॥ अनेन कृतपूजनेन श्री-भगवान् विष्णु लक्ष्मी नारायण ( अनन्त ) देवताप्रियताम् न मम ॥ मन्त्र पुष्पं, नाना सुगन्ध पुष्पाणि यथा कालोद्भवानिच । पुष्पाञ्जलिः शुभा देया देवता प्रीतये सदा ॥ इति ॥

आर्ति—करुणापारा बारं कलि मलपरि हारम्, कद्रु सुत शयितारं करधृत कह्लारम् । घनपट लाभ शरीर कमलोद्भवविलरम् । कलये-मुष्णु मुदारं कमलाभर्तारम् । विरचनिहारं नाथ ? निहारम् भवपारम् ॥

## देवी प्र० होम द्रव्यम् ॥

नवा वृत्ति युतां सर्वान कामा निश्रा नवाप्नुयात् ॥ अथ प्रयोगा वक्ष्यते साधकाभीष्टसिद्धिदाः ॥ नव लक्ष जपेनास्य रुद्ररूपो नरो भवेत । मल्लिका मालती पुष्पै र्होमा द्वागीश तामियात् ॥ करवीरै जपा पुष्पै र्होमा न्मोहयते जगत् । चन्द्र ( कपूर ) कुंकुम वस्तूरी होमात्त कामाधि- कोभवेत् ॥ चंपकैः पाटलैर्विल्वं वशमानयते ऽचिरात् । लाजा होमेराज्य दानी मधुलोपद्रव क्षयः ॥ निशि कक्षाग पलै र्होमो रिपु सैन्य विनाश कृत् । दध्याज्य दुग्धमधुभि- क्रमाद्यो माद माप्नुयात् ॥ आरोग्यं संपदं ग्रामं धनंशर्करं यामु- ग्रम् ॥ कमलैर्धन संपत्ति र्वृद्धिमै राजवश्य ताम् ॥ क्षत्रियामातु लिंगैस्तु वैश्या नारंगजैः फलैः । शूद्राः कुष्मांड संभूतै र्वश्याः स्यु रचिरा द्रुवैः ॥ पनसानां लक्ष होमा द्वश्यास्तु रथक वर्त्तिनः । द्राक्षा फलै रिष्ट सिद्धि रंभाभि र्मंत्रिणो, वशाः ॥ नारिकेलैस्तु संपत्ति स्तिलैः सर्वेष्ट सिद्धयः । गुग्गुलेदुः ख नाशः स्यात् सर्वेष्ट शर्करागुडैः ॥ पायसै धन धान्यास्ति र्बंधूकैः प्राणिनो वशा । पञ्चोत्पलफलै होमा ल्लक्षमाशा द्वशवशा ॥ लवणैराजिका युक्तै र्होमा- दृष्ट विनाशनः । कपूर होमा ल्लभते वाक् पवित्रं नरो ऽचिरात् ॥ करंज फल होमेन भूतप्रेतादयो वशाः । विल्वैः स्या द्रतुला लक्ष्मी रितुरैः सुताप्तयः ॥ घृत होमादीप्तिवाधिः शान्तिः स्यात्तिल तदुलैः । कि यदूककेन-देवेशा सर्वेष्ट साधिता मृणाम् ॥ ५२ ॥ मंत्र कूट त्रिके भेदा यथान्तर नियो जनात् । पहवो ऽथेन गदिता

## रतो दक पान विधि ।

ॐ ह्रँ स्रूँ च्रूँ च्रूँ ह्रूँ च्रूँ ह्रूँ ह्रूँ ॐ इतिमन्त्रः ॥ दिशा न्यास माह ॥—दिशा न्यासमहा देवि कथया मितया नदो । ॐकारं विन्यसेद्भद्रे ऊर्ध्वतःपापनाशनम् ॥ १ ॥ ह्रँ कार पूर्व दिभ गे वह्नौ च्रूँ कारमेवचः । रूँ कारं घर्मराजे चः च्रूँ कारं नैऋते तथाः ॥ पश्चिमे चैव रूँ कारं च्रूँ कारं वायु के तथा ॥ रूँ कारं उत्तरे चैव रूँ कारं स्त्वीशं दैवते ॥ ३ ॥ ॐ कारं तु अघ स्चैव दिङ् न्यासं तत्र कारयेत् । दिङ् न से च कृते देवि कुएड न्यासं विच क्षणः ॥ ४ ॥ अङ्ग न्यासं यथा कुर्य्या तथा च शृणु पार्वति—ॐ कारं विन्यसे न्मूर्ध्नि रूँ कारं नेत्रयो स्तथा ॥ ५ ॥ च्रूँ कारं वक्त्र मध्येतु रूँ कारं कंठ देशतः । च्रूँ कारं स्कन्धयोर्देशे रूँ कारं हृदये तथा ॥ ६ ॥ च्रूँ कारं गुह्य देशेतु रूँ कारं जंघयो स्तथा । रूँ कारं सर्व संधौच ॐ कारं पादयोस्तथा ॥ ७ ॥ अथ कर न्यासः । देह न्यासे कृते देविकर न्यासं तु कारयेत् । वामाङ्गुष्ठे न्यसेद् भद्रे ॐ कारन्तु त्रि दैवतम् ॥ ८ ॥ रूँ कारं वह्नि बीजं च तर्जन्यां तु न्यसे तथा । मध्यमायान्तु च्रूँ कारं पवित्रा यां न्यसे च रूँ ॥ ६ ॥ कनिष्ठा यां च च्रूँ कारं दक्षां गुष्ठे त्रि दैवतम् । तर्जन्या देवि रूँ कारं च्रूँ कारं मध्यतस्तथा ॥ १० ॥ रूँ कारं च पवित्रा यां कनिष्ठायां तमे वहि ॥ इत्थं न्यासे कृते देवि सर्व सिद्धि भवेत्ततः ॥ इति न्यासविधि. ॥ अथ प्राशन विधि. ॥—ततिपवेद्भक्ति संयुक्तो मय्यैव हित चेतसा । दक्षिणेनैव हस्तेन त्रीन् वारांश्च सुरे श्वरी । ईशानाभि मुखो भूत्वा पिबेद्वामेन पाणिना दक्षिणे न ततः पीत्वा पिवेन्त वृषभो यथा ॥ भूमिमागत्य जानूभ्यां हस्त युग्म प्रसार्य च । ईषन्मात्रं च वारास्त्रीं स्त्रिवास्फोटं तु कारयेत् । अहं ब्रह्मा स्त्वहं विष्णु रहं रुद्रो महेश्वरः कर स्फोटं ततः कृत्वा वदेद् वै साधको नमः ॥ इति रेतोदक प्राशनविधिः ॥ गुं गुरुभ्यो नमः पूजयेत् ॥ ॐ प्रमन्यक मिति प्रार्थ येत् ॥

---

मंत्र गौरव भीतितः ॥ ५३ ॥ मेरा नाद–सर्वेष्ट सिद्धेरच मुख्ये पंच काम राज विद्या ॥ यथा—हसकल पईलह्रीं हसकल पईल ह्रीं सहक पईन ह्रीं हसकद पईल ह्रीं सहकह पईल ह्रीं कहकह पईल ह्रीं ॥ पतरुकोपेरो द्वयं कूट द्वयंकाम राजीयम् ॥

## अथाऽभिषेक विधिः ।

अश्वत्थपल्लवैः वा आम्रपल्लवैः ब्राह्मण. वरुण जल यजमान शरीरे अभिषिञ्चन कुर्यात् ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णु महेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभु.। प्रद्युम्नश्चानि रुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋ तिस्तथा । वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहित. शेषो दिक् पाला पातु ते सदा । कीर्तिर्लक्ष्मीधृ तिर्मेधा पुष्टि· श्रद्धा क्रियामति । बुद्धिर्लज्जा वप. शान्तिर्माया निद्रा च भावनाः । एतास्त्वामभिषिञ्चन्तु देवपत्न्यस्त्वमागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । महास्त्वामभिषिञ्चन्तु राहुकेतुश्चतर्पिताः देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मुनयो गावो देवमातर एव च ।देवपत्न्यो द्रुमा नागादैत्याश्चाप्सरसोगणाः । अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्य वयवाश्चये । सरित सागरा. शैलास्तीर्थानिजलदानदाः एतास्त्वामभिषिञ्चंतु सर्वकामार्थसिद्धये । यथाविधि कलान्यास विधानमथ कथ्यते । निवृ त्तिम् जानुपर्य्यन्तं न्यसेत्पादतलाकलाम् । जान्वादि नाभिपर्य्यन्तं प्रतिष्ठा विन्यसे ततः । नाभ्यादि कण्ठपर्य्यन्तं ततो विद्या प्रविन्यसेत् । कण्ठाल्ललाटपर्य्यन्तं तत. शान्तिकलां न्यसेत् । ललाटात् ब्रह्मरन्ध्रान्ते शान्त्या तीता ततो न्यसेत् ॥ इति अभिषेकम् ॥

## अथ आशीर्वादमन्त्राः

हरिः ॐ पृथिव्याऽअहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् । दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥ १ ॥ स्वर्यन्तोनापेक्षन्तऽआद्यांरोहन्ति रोदसी । यज्ञं येविश्वतोधारꣳ सोविद्वांसो वितेनिरे ॥ २ ॥ अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् । इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥ ३ ॥ योधा मे । ऽध्वस्यन्त्वयसोपविद्धन्नमहिदेरयपसुतस्यरत्रपावꣳ ।पीयतिस्त्वोऽअनुत्त्वो गृणाति बन्दारुष्टे तन्वं वन्देऽअग्ने ॥ ४ । सगोधि । भूरिम्मघवाङ्व सुपते व्वसुदावन् । युगोद्ध्यस्मद्द्वेषाꣳ सिधिरस्य कर्म्मणो स्वाहा । ५ । पुनास्त्वा । दित्त्वाद्रुद्रावसवꣳ समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वन्तन्वं वर्द्धयस्व सत्या सन्तु यजमानस्य

कामा ऽ ॥ ६ । यथेमाम्वाच कल्याणी मा वदानि जनेभ्यऽ । ब्रह्मराजन्या भ्या ॐ शूद्राय चार्य्याय च स्वाय चारणाय च । प्रियो देवानान्दक्षिणायै दातुरिह भूयासमय-म्मेकाम ऽ समृद्ध्यता मुप मादो नमतु ॥ ७ ॥ स्वस्ति नऽऽ इन्द्रो व्वृद्धश्रवा ऽ स्वति न ÷ पूषा व्विश्ववेदाः । स्वस्ति न स्तार्त्त्यो ऽअरिष्टनेमि ऽ स्वस्ति नो बृहस्पतिर्दधातु ॥ ८ ॥ शतं भवति शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रिय वीर्य्यमात्मन्धत्ते ॥ इत्याशीर्वादमन्त्राः ॥

---

## ग्रंथकर्तु वंशाष्टकम्

ग्रामे च शोणितपुर नाम ध्येये, बभूव कश्चिन्निज वंश दीपः ।
श्री देवि दीन स्वनय स्वदीपो, भवानि दीनो यजु वाजपेयः १ ॥
तस्य पुत्रा त्रयो भूवन्दातारामोगुणान्वितः ।
राम चन्द्राभिध श्चैकस्तृतीयोविदुषांप्रियः ॥ २ ॥
नारायणदत्त शास्त्री विद्यालय प्रवर्तकः ॥
श्रीदातारामं तनयो सम्पापा देवि दीपकः ॥ ३ ॥
पुरोहितोस्ति श्री केदारे नेपाल देश वासिनाम् ॥
लालमोहरिया प्रसिद्धया नीविदितो दिवि देवना ॥ ४ ॥
विचक्षणो नीवि गुणै विश्वनाथ इवापर. ॥
कर्मकाण्डरतो धीमाञ्छ्रीमान् विनय वारिधिः ॥ ५ ॥
तेनेयं रचिता तीर्थविधान चन्द्रिका नृणाम् ॥
श्री देव्यर्चन विधौ नवरात्र विधानकम् ॥ ६ ॥
ज्ञात्वायां कृत कृत्या वाजायन्ते भुवि मानवाः ॥
गत्वा तीर्थे पिण्ड दानं विधि यत्तपर्णादिकम् ॥ ७ ॥
गृह मेस्य प्रकर्त्तव्या देवी पूजा च मुक्तिदा ॥
पितृणा मात्मनोर्थे वा सर्वोपायुप कारिका ॥ ८ ॥

( इति नागपूर थाला ग्रामस्थो भोलादत्त निवेदकः )

## ग्रन्थ समाप्ता

मन्त्रा णां पठने विधान मखिलं जानन्ति यस्माद् बुधाः।
तत्सर्वं सुविचार्य शास्त्र निचयं श्री कर्म ठानां मुदे॥
कृत्वा ह्य तमं सुशास्त्र विहित लोको प्रकार क्षमम्।
ग्रन्थोऽयं प्रकटी कृतो निजधिया श्री विश्वनाथैर्महान्॥ १॥

द्वय सहस्र नवाधिक वत्सरे स्वसित के मधु मासि अमाथितौ।
कृति रियञ्च समाप्ति सु पूत्तिगा,पशुपतेश्च विशेषत आशिषा॥२॥

इति अखिल महर्षि प्रणीता नेक ग्रन्थ सम्मता सर्व साधारण जना

### ह्लादिनी तीर्थ विधान पद्धतिः समाप्ता

( लौकिके पाप नाशाय वैदिके स्वर्ग मास्तु यात्॥ ) इति॥ सम॥
महता प्रयत्नेन इमा विरच्या विदुषा मभे-
प्रकाशते त्रुटिस्तु तत्र दर्शिभि विद्वैः
शोधनीयेति कामयेत ग्रन्थकारः॥
श्रीकेदारनाथो जयति॥
शुभमस्तु॥




प्रकाशक—

ग्रन्थ स० विश्वनाथ शर्मा लालमोहरिया

पता—

पं० विश्वनाथ नेत्रप्रसाद शर्मा लालमोहरिया
शोणितपुर पो० गुप्त काशी
गढ़वाल उत्तर प्रान्त